### महामहोपाध्याय डा० वासुदेव विष्णु मिराशी, नागपुर

भवद्भी रचितं 'भारतस्य सांस्कृतिकनिधिः' इति नामकं ग्रन्थं पठित्वानन्दस्य परां कोटिमध्यगच्छम्। अस्मिन् ग्रन्थे भवद्भिर्भारतीयसंस्कृतेरङ्गोपाङ्गानां सविस्तरं विवेचनं सरलसरलयाऽत्यन्तसुबोधया च शैल्या कृतम्। ......एतादृशस्य भारतीयसंस्कृतिविषयकस्य गीर्वाणभाषानिबद्धस्य ग्रन्थस्य नितान्तमावश्यकतासीत्। एतद्ग्रन्थविरचनया भवद्भिः संस्कृताध्यायिनां बहूपकृतम्। अस्य ग्रन्थस्य सर्वत्र भूयान् प्रचारो भूयादित्याशंसते।

### डा० वासुदेवशरण अग्रवाल, वाराणसी

आपकी संस्कृत पुस्तक 'भारतस्य सांस्कृतिकनिधिः' प्राप्त हुई। मुझे प्रसन्नता है कि आपने भारतीय संस्कृति के स्वरूप और इतिहास से सम्बन्धित अनेक महत्त्वपूर्ण तथ्यों का एक स्थान में स्पष्ट प्रामाणिक परिचय देते हुए संस्कृत भाषा में यह उपयोगी ग्रन्थ सम्पन्न किया है। आप इस विषय के पूरे पण्डित हैं। भगवान् करे आपके द्वारा संस्कृत विद्या का उत्तरोत्तर उपकार हो।

### डा० बाबूराम सक्सेना, प्रयाग

'भारतस्य सांस्कृतिकनिधिः' नामक ग्रन्थ देख कर चित प्रसन्न हुआ। भारतीय प्राचीन मूल सूत्रों से तथा पाश्चात्य विद्वानों के ग्रन्थों से लेखक ने सामग्री लेकर उसे अपनी दृष्टि से ढाला है। भाषा सरल और सुबोध है। इसलिये सामान्य संस्कृतज्ञ भी इसका उपयोग कर सकता है। संस्कृत के पाठक के लिए इस प्रकार की सामग्री अप्राप्य थी। इसीलिये इस ग्रन्थ की विशेष उपयोगिता है। पुस्तक की छपाई, आकार आदि आकर्षक हैं। मूल्य भी उचित है। विश्वास है कि संस्कृतज्ञ पाठक इस ग्रन्थ का स्वागत करेंगे।

---

मूल्यं १२ रूपकाः

# भारतस्य सांस्कृतिकनिधिः

डा० रामजी उपाध्यायः, एम. ए., डी. फिल.
सागरविश्वविद्यालये संस्कृतविभागाध्यक्षः






प्रकाशकः
गाँधिविश्वपरिषद्
दाना, सागरः ( म. प्र. )



विक्रमाब्दाः २०१५] [मूल्यं दशरूपकाः

प्रथम संस्करणम् १९५८




प्राप्तिस्थानम्

(१) गाँधिविश्वपरिषद् , ढाना, सागर ( म. प्र. )

(२) चौखम्भा-संस्कृत-सीरीज-श्राफिस, पो. बा. नं० ८ वाराणसी-१

(३) पूना ओरियण्टल बुकहाउस ३३० ए, सदाशिवपेठ पूना २

मुद्रकः —श्रमल कुमार बसु, इंडियन प्रेस, (प्राइवेट),लिमिटेड, वाराणसी शाखा

भारतराष्ट्रपतये देशरत्नाय

**श्री राजेन्द्रप्रसादाय**

भक्त्या समर्पितोऽयं निधिः

संवर्धताम् ।

# प्राक्कथनम्

भारतवासिनः भारतीयसांस्कृतिकपथमनुसृत्य पुनः गौरवास्पदं पदं प्राप्तुं समर्था इति निःसन्देहम्। तत्र प्राचीनसंस्कृतेः परिचयः प्रथमं कर्तव्यः। भारते परतन्त्रीभूते भारतवासिनः प्रायशः स्वदेशस्य सांस्कृतिकपरम्परां प्रति विस्मरणशीला बभूवुः। स्वतन्त्रताया अभ्युपगमे पुनरपि स्वदेशस्य संस्कृतेः संस्कृतसाहित्यस्य च निधिः सम्यग्विधिनाऽवगन्तव्यः। तं निधिं सम्बलीकृत्य भारतवासिनः प्रगतिपथेऽसंशयमेवाभ्युदयं करिष्यन्ति। अतः तमधिकृत्यानुसन्धानं समीचीनम्।

द्वादशसंवत्सरं पूर्वं भारतीयसंस्कृतिमधिकृत्य पुस्तकप्रणयनस्याभिलाषो मे मनसि समुत्पन्नः। तदाऽचिरमेव 'भारत की प्राचीन संस्कृति' इति पुस्तकं मया हिन्दीभाषायां रचितम्। तस्य पुस्तकस्य पर्याप्तसमादरः संस्कृतिप्रणयिभिः जनैः कृतः। तस्मै पुस्तकाय उत्तरप्रदेशस्य शासनविभागस्य प्रतिपत्तिः सहस्ररूप्यकाणां पारितोषिकस्य प्रदानेन प्रदर्शिता। तदाप्रभृति भारतीयसंस्कृतिं प्रति मे रुचिः नित्यमेव समवर्धत। संस्कृतिज्ञानाय मया प्राचीनसाहित्यशिल्पकलादीनां पर्यवेक्षणमारब्धम्। सम्प्रति भारतीयसंस्कृतिविषयकविपुलसामग्री सम्पादिता। तस्याः समुपयोगो मयाऽस्मिन् प्रबन्धे कृतः।

भारतीयसंस्कृतिमधिकृत्य बहूनि पुस्तकानि विविधभाषासु लिखितानि वर्तन्ते। तेषु पुस्तकेषु प्रायः संस्कृतिविषयस्य विवेचनं योरपीयविचारणापद्धतिमनुसृत्य कृतम्। प्रकृतप्रबन्धे प्राचीनसंस्कृतिधारायाः पर्यालोचनं भारतीयदृष्ट्या कृतम्, तस्याः निदर्शनं च भारतीयवैज्ञानिकप्रणालीमवलम्ब्य समारब्धम्। अत्र न केवलं भारतीयसंस्कृतेः सिद्धान्तपक्ष उपवर्णितः, अपि तु तस्याः व्यावहारिकस्वरूपमपि प्रतिपादितम्। भारतीयसंस्कृतेः

प्रवृत्तीनां परिज्ञानाय काचिद्विशिष्टानुसन्धानपद्धतिरनुसर्तव्येति मे मतिः। तस्याः परिलक्षणं प्रबन्धेऽस्मिन् पदे पदे भविष्यति।

प्रबन्धस्य संस्कृतभाषायां प्रणयनं साहसमात्रमिति मया प्रारम्भतः प्रतीतम्। तथापि संस्कृते लिखितुं प्रवृत्तोऽहमित्यत्र संस्कृतं प्रति मे श्रद्धा एव कारणम्। 'संस्कृते न्यूनं लिख्यते, स्वल्पतरा संख्या संस्कृतभाषिणां वर्तते च। अतः संस्कृतं मृतभाषेति केषाञ्चिदारोपणम्।' अस्य दोषारोपणस्य निराकरणाय संस्कृतभाषायां भाषणं लिखनं च सर्वेषां संस्कृतज्ञानां समीहितं भवत्विति मे निवेदनम्। संस्कृतभाषाऽस्माकं जीविकोपार्जनस्य साधनम्। इदमपि विचार्य तस्याः भाषायाः जीवनोपायः ग्रन्थरचनेन भाषणेन च कर्तव्यः। अपरं च—भारतीयसंस्कृति-सौरभस्याभिव्यञ्जनाय, आस्वादनाय च संस्कृतमेव सर्वोत्तममवलम्बनमिति विदितमेव विदुषाम्। 'सांस्कृतिकनिधिः संस्कृतेऽन्तर्भूतः' इति संस्कृतमत्र पठनीयम्।

भारतस्य सांस्कृतिकनिधिः युगानुरूपसरलसंस्कृतभाषायां निदर्शितः। प्रबन्धे क्वचित् हिन्दी-वाक्यरीतिः प्रयुक्ता। सन्धीनामाग्रहः वैकल्पिको मतः। साधारणसंस्कृतज्ञानामपि प्रबन्धं बोधगम्यं कर्तुमेवोपर्युक्ताः सर्वे समारम्भाः स्वीकृताः।

असंख्या एव तेऽभिनवाः प्राचीनाश्च ग्रन्थकाराः येषां कृतयः मयाऽत्र समावेशिताः। सर्वेषां तत्रभवतां साहाय्यप्रदानादनुगृहीतोऽस्मि।

गाँधिजयन्ती, १९५८ रामजी उपाध्यायः

## अनुक्रमणिका

# आमुखम्

मानवस्येतरप्राणिभ्यः सुखप्रवृत्तौ स्वभावतः वैशिष्ट्यं दृश्यते। यद्यपि मानवः 'आहारनिद्राभयमैथुनत्वेन' पशुभिः समानः किन्तु पशुवदाभिरेव प्रवृत्तिभिः तस्य प्रगतिः नावरुद्धा। सुखार्थिनः पशवो नूनमेवाहारविहार-निद्रादिकं यथेष्टं वाञ्छन्ति भयकारणानि निवारयन्ते च—मानवोऽपि तद् वाञ्छति तानि निवारयते च किन्तु पशूनामाहारविहारस्य सामग्रीषु साधनेषु च युगानुसारं परिवर्तनं किञ्चिन्मात्रमेव भवति। तेषां जीवन-विधिरधुनापि प्रायः तादृशो यथा सहस्रवर्षं पूर्वमेवासीत्। इत्थं पशुजीवनं प्राकृतिकं भवति। अत्रैव वर्तते मानववैशिष्ट्यम्। मानवस्य जीवन-विधिः प्रतियुगं नवतरो दृश्यते। कदापि स आहारविहारादिषु सर्वथा परितुष्टो न भवति। मानवो नित्यमेव नवीनसामग्रीणां साधनानां च सम्पादनेन परितुष्टतरमात्मानं कर्त्तुं चेष्टते। इहैव मानवस्य बुद्धिः सहायरूपेण प्रतिष्ठिता। बुद्धियोगेन स जगतो नित्यं कल्याणपरं नवीनतरं रूपं विदधाति। मानवो बुद्धेरुत्कर्षेण पशुभ्य उत्कृष्टतरो भवति।

मानवीयानन्दस्य सामान्यतः चत्वारि क्षेत्राणि वर्तन्ते—(१) आधिभौतिकम् (२) आध्यात्मिकम् (३) रसात्मकम् (४) सहानु-भूतिमयं च। आधिभौतिकक्षेत्रे मानवः ऐन्द्रियकसुख लाभाय ज्ञान-विज्ञानबलेन पञ्चतत्त्वनिर्मितवस्तूनामधिकाधिकोपयोगिस्वरूपं परिज्ञाय विधाय चात्मानं बहु मन्यते। अस्यां दिशि परमाणुशक्तेराविष्कारोऽ-धुना सर्वोच्चोन्नतिरूपेण दृश्यते। आध्यात्मिकक्षेत्रे योगस्य दर्शनस्य च महिमा वर्तते। योगदर्शनाभ्यामात्मनः परमात्मनश्च ज्ञानेनानुभूत्या च परानन्दो लभ्यते। समाधिः ब्रह्मनिष्ठता चात्मनोऽस्य चरमविकासः

प्रसिद्धः। रसात्मकक्षेत्रे काव्यकलाशिल्पानामतिशयो दृश्यते। तेभ्यो हृदयमाध्यमेनानन्दः प्राप्यते। सहानुभूतिमये क्षेत्रे शीलानामात्मगुणानां चाभिवृद्धिः सामाजिकसंविधाने धर्मव्यवहारेण क्रियते। अनेनैव 'परोपकाराय सतां विभूतयः' 'वसुधैव कुटुम्बकम्' 'आदानं हि विसर्गाय' 'परोपकारः पुण्याय' 'एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये' इत्यादयः शिष्टाचारस्य प्रकाशस्तम्भरूपेण प्रतिष्ठिताः।

चतुर्षु क्षेत्रेष्वनन्तोऽयमुन्नतिपथः। निरवधिकालं मानवो ज्ञानेन, दर्शनेन, रसवृत्त्या, धर्मभावेन चाधिकतरानन्दस्य प्राप्तये यत्नं करिष्यति। प्रकरणमिदमधिकृत्य मानवः बुद्धेरध्यात्मवृत्तेः, सौन्दर्यभावनायाः, शीलभावस्य च नित्यमेव संवर्धनं कृतवान् करिष्यति च। इयमेव संवर्धनप्रक्रिया मानव-संस्कृतिरिति ख्याता। संस्कृतिः मानव-जीवनस्य कला, व्यक्तित्वस्य विकसनं वा भवति।

## संस्कृतेरुपकरणानि

**प्राकृतिकपरिस्थितयः**

सांस्कृतिकप्रवृत्तयः प्रधानतः प्राकृतिकपरिस्थितिभिः निर्धारिता भवन्ति। मानवस्तु प्रकृतिप्रदत्तवस्तुभिः जीवनधारणं करोति। प्रकृतिः चेदुदारा तर्हि स्वल्पश्रमेणैव जीवनोपाया लभ्यन्ते। ईदृश्याः प्रकृतेरुदारभावेन परिचिता जनाः स्वयमेवोदारा भवन्ति। प्रकृतिः चेद् दुस्साध्या भवेत्तर्हि कठोरश्रमेण जीवनोपायानुत्पादयन्तो जनाः स्वयमेव कठोरा भवन्ति। मानवः प्रथमं प्रकृतेरेवौदार्यस्य सहानुभूतेः सहिष्णुतायाश्च शिक्षां गृह्णाति। प्रकृतेः रम्यप्रदेशेषु मनीषिणो दार्शनिकमाध्यात्मिकं च तत्त्वं विदन्ति। कलाविदः प्रकृतेरुपादानानि गृहीत्वा तस्याः सौष्ठवं सौन्दर्यं च काव्यचित्रमूर्तिवास्तुमाध्यमेन व्यञ्जयन्ति। प्राकृतिकसंविधानानुरूपं हि भारतस्य सांस्कृतिकं सामाजिकं राजनीतिकमैक्यं प्रतिष्ठितम्।

**राजनीतिकपरिस्थितयः**

सांस्कृतिकविकासे राजनीतिकपरिस्थितीनां प्रभावः परिलक्ष्यते। प्राचीनयुगे राजा संस्कृतेः संरक्षकोऽभवत्। 'यथा राजा तथा प्रजाः' इति सिद्धान्तानुसारं राज्ञो गुणाः प्रजासु प्रतिष्ठिता अभवन्। राज्ञो रुचिमनुवर्त्य हि सांस्कृतिकसंस्थानां प्रादुर्भावोऽभ्युदयश्च भवतः। राजा चेद् राष्ट्रिय-संस्कृतेः विरोधी स्यात् तर्हि राष्ट्रं संस्कृतिविहीनं जायते। भारतस्येतिहासे प्रतियुगं राजनीतिकपरिस्थितीनां सांस्कृतिकसंघटनविघटनयोः प्रत्यक्षमेव प्रभावः।

**महापुरुषाणां कर्तृत्वम्**

महापुरुषाणां कृतिभिराचार्यत्वेन च संस्कृतेरभिनवा दिशा जायते। बहवस्तत्रासन् महर्षय आचार्याश्च तीर्थङ्कररूपेणावताररूपेण वा प्रतिष्ठिताः येषामभावे भारतीयसंस्कृतेः तादृशं प्राक्कलितं स्वरूपं न प्रादुर्भवेत्। आधुनिकयुगे महात्मनो गाँधिमहाभागस्य सांस्कृतिकप्रभावः तादृशो वर्तते।

**स्वाभाविकप्रवृत्तयः**

कस्यापि राष्ट्रस्य संस्कृतिपथे तत्रत्यनिवासिनां स्वाभाविकप्रवृत्तीनां प्रभावः सुव्यक्त एव। भारतवासिनस्तु स्वभावतो दार्शनिका भवन्ति परम्परावादिनो वाऽऽङ्गलदेशवासिनः। ईदृशीनां प्रवृत्तीनां प्रतियुगं संस्कृति-विन्यासे महत्त्वं दृश्यते।

उपरिनिर्दिष्टोपकरणान्यनुसृत्य भारतस्यैकं विशिष्टं सांस्कृतिकवाता-वरणं समुदभवत्। तस्मिन्नेव वातावरणे भारतीयसंस्कृतिः पल्लविता पुष्पिता च। तदेव वातावरणं सम्प्रति पर्यालोचनीयम्।

## सांस्कृतिकं वातावरणम्

**प्राकृतिकभूमा**

'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञा-सितव्यः' इति छान्दोग्योपनिषदि सन्देशः। नित्यमेव भूमाऽऽत्मसात्करणीय

इति सन्ध्याविधौ गायत्रीपाठे 'भूर्भुवः स्वः' पदानि मानसे भावितानि। अनेन पाठेन मानवस्योपभोगपरिधौ पृथिव्या सह वायुलोकः स्वर्गलोकश्च समाविष्टौ। अमुना विचारेण मानवः शरीरकुटुम्बग्रामराष्ट्रादिभ्यः परिधिभ्यो बहिर्निर्गतो भूमानमन्वभवत्। इदमेवोद्दिश्य सन्दिष्टम्—

द्यौश्च म इदं पृथिवी चान्तरिक्षं च मे व्यचः।
अग्निः सूर्य आपो मेधां विश्वे देवाश्च सं ददुः॥ अथर्व १२. १. ५३

इयमेव सा निःसीमतासीत् यया भारतीयानां व्यक्तित्वमतिशयोदात्तं निर्मापितम्। भारतीयानां मानसपटले पृथिव्या आकाशलोकस्य च समृद्धिः सौन्दर्यञ्च प्रतिबिम्बिते। अधुनापि स एवाकाशः अस्माकमावरणम्। दिवा तस्य नीलिमा रात्रौ चागणिततारकाणां प्रभा रमणीयतमौ; किन्तु पृथ्वी प्राचीनयुगे भव्यतराऽऽसीत्।[1] वैदिकयुगे पृथिव्या औदार्यं परिलक्ष्य कविना गीतम्—

भूमे मातर्नि धेहि मा भद्रया सुप्रतिष्ठितम्।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम्॥ अथर्व १२. १. ६३

पृथिव्या गुणानुरूपं राष्ट्रियचरित्रं विकसितम्। तस्याः सान्निध्ये ऋषिणोच्चरितम्—

यद्वदामि मधुमत् तद् वदामि यदीक्षे तद्वनन्ति मा।
त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधतः॥ अथर्व १२. १. ५८

भारतभूमेः समतलत्वेन तस्यां विन्यस्तपथानां सारल्येन मानवजीवने समतायाः कार्यपद्धतौ चार्जवस्य प्रतिष्ठाभूत्।

भारतीयप्रकृतेः महत्त्वपूर्णोपकरणानि—पर्वताः, नद्यः, समुद्राः, वनानि, ऋतवः, पशुपक्षिणश्च सन्ति। एषां सांस्कृतिकप्रभावः परीक्षणीयः।

---

१. आधुनिकयुगे वनानि नष्टप्रायाण्येव दृश्यन्ते, कासारजलाशयाश्च शोषिता एव क्षेत्रीकृताश्च, नद्योऽपि प्रणालीप्रवाहेण शुष्का एव वर्तन्ते। पर्वतप्रदेशे नवीनसंस्कृतिप्रवणा जना वसतिं विधाय तत्रत्यनैसर्गिकशोभामपहरन्त्येव।

भारते हिमालयः श्रेष्ठपर्वतोऽस्ति। अस्माकं देशस्य संस्कृतिपरैक-रूपता हिमालयेन समुद्रैश्च सुरक्षिता। चतुर्दिक्षु सुरक्षिते भारते वैदेशिकाः स्वल्पसंख्यका एव यदा-कदाऽऽगताः। परिणामतः तेऽपि भारतीय-संस्कृतौ रञ्जिताः। हिमालयस्तु तपोभूमिः विद्याभूमिश्चाभवत्। अत्रैव विद्यार्थिनः तपस्विनश्च सुखेन निवसन्तोऽनायासेनैव जीवनधारणाया-वश्यकवस्तूनि प्राप्तवन्तः। हिमालयानुरूपमेव तेषामाध्यात्मिकदर्शनं प्रस्फुटितम्। अधुनापि बदरी-कैलास-गौरी-नन्दाप्रभृतीनि स्थानानि महर्षीणां कीर्तिस्तम्भरूपेण प्रतिष्ठितानि। तेषां महर्षीणामुपदेशं समाहृत्य सन्तोऽद्यापि तेषामेवानुसन्धाने हिमालये गच्छन्ति। हिमालयस्तु तीर्थमेव।

अन्येषामपि पर्वतानां न्यूनाधिकं हिमालयवत् प्रभावो लक्ष्यते। चित्र-कूटस्य रमणीयतायाः प्रमाणं रामस्य मनोभावेन व्यज्यते—

न राज्याद् भ्रंशनं भद्रे न सुहृद्भिर्विना भवः।
मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम्॥

अरण्यकाण्ड ६४.३

दक्षिणभारते विन्ध्यमेकलमलयमहेन्द्रसह्यादीनां गिरीणां समाहारो वर्तते। आसु पर्वतमालासु बहवो गुहा निर्मिताः। वनान्तरमणीयासु गुहासु धर्माणां दर्शनानाञ्चोन्नायका अवसन्। अस्मिन् पर्वतप्रदेशे नैसर्गिक-रमणीयतामाश्रित्य मानवस्य कलात्मकप्रवृत्तयः चित्रमूर्तिवास्तुमाध्यमेन प्रस्फुटिताः।

नदीभिः पर्वतप्रदेशेषु समतलप्रदेशेषु च तत्रत्यनिवासिभ्यः जीवनो-पायाः प्रस्तुताः। नदीनां तटप्रदेशान् समाश्रित्य मुनीनां नागरिकाणाञ्च वसतयः संवर्धिताः। नदीनां जलं स्नानाय, पानाय, जलविहारादिमनो-रञ्जनाय चाभवत्। नदीनां व्यापारिकमहत्त्वमपि विशिष्टमासीत्। नगराणां सुरक्षार्थमपि नदीनामतिशयहितकारित्वमवर्तत। नदीनामिमान् गुणान् पर्यालोच्य वैदिकसाहित्येऽपि कवीनामीदृशी दृष्टिरासीत्—

प्र क्षोदसा धायसा सस्र एषा
सरस्वती धरुणमायसी पूः।
..........................
वर्ध शुभ्रे स्तुवते रासि वाजान्
यूयं पात स्वस्तिभिः सदा नः॥ ऋग्वेद ७. ९५. १, ६

वैदिकयुगे सरस्वत्याः पञ्चनदप्रदेशस्य नदीनाञ्च महत्त्वमासीत्। पश्चात् गङ्गायाः सर्वोत्कृष्टं स्थानं मतम्।[१] वाल्मीकिनोपनिबद्धं गङ्गा-स्वरूपं द्रष्टव्यमेव—

जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम्।
क्वचिद्वेणीकृतजलां क्वचिदावर्तशोभिताम्॥ १६
हंससारससंघुष्टां चक्रवाकोपकूजिताम्।
सदामत्तैश्च विहगैरभिसंनादितान्तराम्॥ १९
फलैः पुष्पैः किसलयैर्वृत्तां गुल्मैर्द्विजैस्तथा।
शिशुमारैश्च नक्रैश्च भुजङ्गैश्च निषेविताम्॥ २४

अयोध्याकाण्डे पञ्चाशतः सर्गतः

अपरञ्च कविः गङ्गां 'आश्रमैरविदूरस्थैः श्रीमद्भिः समलङ्कृताम्' पश्यति।

सागरस्य विपुलविस्तारो निरवधिः परिधिश्च मानवस्य परमतामादधाति। पौराणिकमतेन सागरस्य मन्थनमभवत्। ततः चतुर्दशरत्नानि प्राप्तानि[२]। सागरोऽयं विष्णोः शयनमभूत्, वरुणस्य गृहमभवत्, इन्द्रवज्रेभ्यः भीतानां पर्वतानामाश्रयश्चासीत्। भारतस्य समृद्धिमपि सागरः संवर्धयति। बहुविधरत्नमुक्ताफलानि प्रदाय स आत्मनः रत्नाकरत्वं

---

१. सर्वप्रस्रवणाः पुण्याः सरांसि च शिलोच्चयाः।
नद्यः पुण्यास्तथा सर्वा जाह्नवी तु विशेषतः॥

२. लक्ष्मीः कौस्तुभपारिजातकसुराधन्वन्तरिश्चन्द्रमाः
गावः कामदुघाः सुरेश्वरगजो रम्भादिदेवाङ्गनाः।
अश्वः सप्तमुखो विषं हरिधनुः शंखोऽमृतं चाम्बुधेः॥

साधयत्येव। नाविकाः सागरस्य परं पारं गत्वा भारतीयां संस्कृतिं द्वीपेषु महाद्वीपेषु च प्रसारितवन्तः।

भारतीयसंस्कृतेः निर्माणमरण्यवासिभिर्मुनिजनैः कृतम्। भारतीयप्रकृतिः वनभागेषु विशेषोदारतराभवत्। वैदिककालतः अरण्यानी देवी प्रतिष्ठिता वर्तते, वनस्पतिश्च वनराजो वटवृक्षः सोमश्चास्ति। ऋषिभिः वनानि रम्याणि मतानि।[१] वनभागेषु यत्र जीवनोपायाः—जलानि फलकुसुमादीनि—सुलभा आसन् तत्र महर्षीणामाश्रमाः स्थापिताः राजभिश्च नववसतयः कारिताः। रामायणे निगदितं वनसौरभं वाल्मीकिशब्देष्वेवावगन्तव्यम्—

पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम्।
सृजतां पुष्पवर्षाणि तोयं तोयमुचामिव॥ १९
पुष्पसंछन्नशिखरा मारुतोत्क्षेपचञ्चलाः।
अमी मधुकरोत्तंसाः प्रगीता इव पादपाः॥ २०
सुपुष्पितांस्तु पश्येमान् कर्णिकारान् समन्ततः।
हाटकप्रतिसंछन्नान्नरान् पीताम्बरानिव॥ २१
स्वनन्ति पादपाश्चेमे ममानङ्गप्रदीपनाः।
अशोकस्तवकाङ्गारः षट्पदस्वननिःस्वनः॥ २६

किष्किन्धाकाण्डस्य प्रथमसर्गतः

एषु वनेषु निवसद्भिः महर्षिभिः संस्कृतेः सर्वाङ्गसम्पन्ना धारा प्रवाहिता। तस्यां न केवलं भारतवासिनोऽपि तु वैदेशिका अपि सततमवगाहनं कृतवन्तः। ठक्कुरेण रवीन्द्रनाथेन वनानामनुपमां सांस्कृतिकोपयोगितां परिलक्ष्याभिमतम्—यदि भारताः योरपीयसांस्कृतिकपद्धतिमनुसरन्ति तर्हि न ते योरपीया भवन्ति किन्तु केवलं दूषितभारता एव भवन्ति। अनेनैव कारणेन तेषां सिद्धान्तानामनुसन्धानमेवास्माकं परं कर्तव्यं वर्तते यैः भारताः स्वकीयात्मानं अवगच्छन्तु। न ते सिद्धान्ताः व्यापारे

१. अथर्ववेदे १२. १. ११

राष्ट्रियभावनायाः संवर्धने वाऽन्तर्हिताः अपितु सा विश्वात्मकभावना सर्वेषामभ्युदयाय वर्तते। न सा केवलमात्मज्ञानेन सीमिता, वरमात्मविजय-स्वरूपिणी सा समर्पणमेवात्मनः। प्राचीनभारतीयवनेषु प्रथममेव तेषां सिद्धान्तानामवबोधोऽभवत्। वनेषु तेषु सिद्धान्तानुसारमाचरणपद्धतिः सम्भूता। उपनिषदि प्रथमघोषणा विद्यते तस्य सत्यस्य; गीतायां तस्य व्याख्या च कृता। बुद्धस्तु सांसारिकतां परित्यज्याखिलमानवतायै तं सन्देशं सुलभं कर्तुं प्रायतत।[१]

भारतीया वनसम्पत्तिः सदैव देशेषु विदेशेषु च बहुमूल्या मता। भारतीयकाष्ठं सहस्रयोजनदूरेऽपि विदेशे भवननिर्माणाय प्रेषितम्। चन्दनैः पत्रपुष्पैश्च प्रसाधनानि रचितानि। वन्यपशुचर्मणोर्णेन च बहुविधानि परिच्छदादीनि वस्तूनि निर्मितानि। इत्थं राष्ट्रस्यौद्योगिक-प्रगतयेऽपि वनानां महत्त्वं विशिष्टमेवासीत्।

**ऋतुसौरभम्**

भारतीयप्रकृत्याश्चारुता ऋतुक्रमेण परिवर्तनशीला दृश्यते। षड्ऋतु-क्रमेण वर्षे षड्रूपाण्येव प्राकृतिकवातावरणानि जायन्ते। न कोऽपि ऋतुः कदापि तावन्मात्रः कठोरः भवति येन पीडिता जनाः कार्यविरता भवेयुः; न च कस्मिन्नपि ऋतौ भोजनपानवस्त्रादीनां वैशिष्ट्येन विना जीवनयापनं दुर्भरं जायते। प्राचीनभारते प्रायः सर्वेषु प्रदेशेषु अधिकतरा वर्षा न्यूनत-रोष्णता चास्ताम्।

ऋतूनां प्राकृतिकमनोहारितामनुसृत्य कविभिश्चित्राचार्यैश्च कला-कृतयः समुद्भाविताः। कालिदासस्य ऋतुसंहारमिदमधिकृत्य दर्शनीयमेव।

**राजनीतिकमान्यता**

राजा तु भारते देवरूपेण प्रतिष्ठितः। देववद्राजाऽपि लोककल्याणाय सदैव सचेष्टो भवत्विति राजनीतिकजीवनस्य प्रथमा मान्यता। इन्द्र-विष्णुवरुणादिभ्यः प्रजापालनस्यादर्शः संगृहीतः। एषां देवानामंशावतारो भवति राजेति भारतीया धारणा।

१. *The Message of the Forest*

भारतीयो राजा वर्णाश्रमधर्मस्य संरक्षक इति शास्त्रवचनम्। सर्वेष्वाश्रमेषु वर्णेषु च प्रतिष्ठितानां प्रजानां समीचीनव्यक्तित्वविकासाय, तासां कर्तव्ये नियोजनमकर्तव्यान्निवारणं च राजधर्मः। भारतीये साहित्ये पुराणेतिहासे च बहूनामादर्शनृपाणां चरितगाथा लभ्यते। तेषु सुप्रसिद्धाः सन्ति रामः, युधिष्ठिरः, अशोकः, विक्रमादित्यः, हर्षः, भोजश्च।

राजनीतिस्तु भारते मन्वादिभिः स्मृतिकारैः सनातनरूपेण व्यवस्थापिता। इदमेवानुसृत्य कालिदासेन निर्दिष्टम्—

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः॥ रघुवंशे १. १७

ईदृशी सनातनशासनपद्धतिः सामान्यतो वैदेशिकशासकैरपि भारते स्वीकृता। अस्यां परिस्थितौ भारते सांस्कृतिकजीवनस्य शृङ्खला क्रमबद्धा दृश्यते।

**ऐतिहासिकसंघटनम्**

प्राचीनकालादेव सदा भारतेऽनेकधर्मावलम्बिनोऽनेकभाषाभाषिणश्च निवसन्ति।[१] सर्वेषामेव तेषां यथाकालं सम्मिश्रणं परस्परमेवाजायत। इत्थमेका राष्ट्रिया संस्कृतिः निर्मिता राष्ट्रभाषा समुद्भूता च।

देवासुरमानवराक्षसगन्धर्वनागादयो वैदिकसाहित्ये वर्णिताः सन्ति।[२] अन्येऽपि बहवो जनसमूहा महाभारते, रामायणे, नाट्यशास्त्रे चोल्लिखिता यवनकिरातगान्धारचीनशबरबर्बरशकतुषारकङ्कपह्लवान्ध्रमद्रकपौण्ड्रपुलिन्द-रमठकाम्बोजाश्च। एतेषां प्रत्येकस्य प्रथमं विशिष्टा सत्ता संस्कृतिश्चास्ताम्।[३] कालान्तरे पारस्परिकसम्मिलनेनास्तित्वमपि तेषां विलुप्तप्रायमेव।

१. जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम्।
अथर्ववेद १२. १. ४५

२. शतपथब्राह्मणे १४. ४. ३

३. धर्मशास्त्रेषु विवाहविधीनां गणनाप्रसङ्गे तेषां विविधवर्गाणां वैवाहिकसंस्कृतिः दर्शिता।

ऐतिहासिकयुगे ग्रीकशककुशनहूणादयो ये केचिद्भारते आगतास्तेषां संस्कृतिर्भारतीयसंस्कृतौ समाविष्टा। इस्लामधर्मानुयायिनो वैदेशिकाऽऽक्रमणाकारिणस्तु भारतीयां संस्कृतिं विनाशयितुमेवाचेष्टन्त किन्तु सन्तसम्प्रदायमाश्रित्य सा संस्कृतिः सदैव सजीवावर्त्तत।

**महापुरुषाणां प्रभावः**

महापुरुषाणामप्रतिमप्रभावो भारतीयसंस्कृतौ दृश्यते। प्रथमं वैदिकदेवेषु कतिपयाः—इन्द्ररुद्रविष्णुवरुणादयः स्वकीययुगानां महापुरुषा एव सम्भाव्यन्ते कालान्तरे च तेषां व्यक्तित्वं तादृशमेव दिव्यगुणैः समन्वितं यथा रामकृष्णबुद्धादीनां महापुरुषाणामवतारत्वं प्रसिद्धम्। शिवविष्णुगौतमादीनां चरितगाथाभिः भारतीयसंस्कृतिः काव्यकलाधर्मदर्शनादिषु क्षेत्रेषु प्रभाविता।

परवर्तिवैदिकयुगे याज्ञवल्क्याजातशत्रुजनकादयो महर्षय उपनिषत्सु वेदान्तदर्शनस्याध्यात्मिकसाधनायाश्चादर्शं प्रस्तावितवन्तः। वैदिकेतरसंस्कृतिषु तीर्थङ्कराणां बोधिसत्त्वानां चाभ्युदयोऽभवत्। कालान्तरे ऋषिपरम्परायां शङ्कररामानुजादीनां प्रादुर्भावोऽजायत। सर्वे च ते महर्षिरूपेण प्रतिष्ठिताः सनातनाचार्याः भारतीयसंस्कृत्यै काञ्चिदभिनवां प्रदीप्तिं प्रदायास्माकं राष्ट्रं तामसिकप्रवृत्तिषु पतनात् परित्रातवन्तः।

सामाजिकेभ्योऽभिनवदृष्टिप्रदाने महाकवीनामतिमात्रं श्रेयो विद्यते। आदिकविः वाल्मीकिः व्यासश्च रामायणमहाभारतयोः राष्ट्रनिर्माणाय यां पद्धतिं चक्रतुस्तामेवानुसृत्याश्वघोषकालिदासभारविश्रीहर्षादयः भारतेभ्यः सततजागरणस्य सन्देशमददुः। कलाविज्ञानशास्त्रादिष्वपि पूर्वाचार्याणां कृतयोऽपूर्वामेव परम्परां सन्धारयन्ति।

**स्वाभाविकमान्यता:**

स्वभावत एव भारतीया देवपराः सन्ति। पञ्चतत्त्वानां सामान्यतः शिवस्वरूपत्वेन देवत्वमस्ति। सर्वं खल्विदं ब्रह्मेति महावाक्यं जगतो देवमयं स्वरूपं निदर्शयति। आचार्यातिथिमातापितृगोब्राह्मणसूर्यचन्द्रादय ऋषिभिर्देवभावेन मताः। अनेन प्रकारेण भारतवासिभ्यो जगदिदं सर्वदेवमयं

विद्यते। अस्मिन् दिव्यवातावरणे मानवस्य व्यक्तित्वं प्रकृत्यैव दिव्यं भवति।

अपरा विशेषता भारतीयस्वभावस्य प्राचीनवस्तूनि प्रत्यनुरागाधिक्यमेव। अस्यां दशायां न कापि सांस्कृतिकधारा कदापि सर्वथा विलुप्ता। अधुनापि प्राचीनयुगस्य वेशविन्यासधर्मादीनां परम्परायाः अभावो नास्ति। भारतीयसमाजः प्राचीनयुगस्य वीरगाथाः महर्षीणां ज्ञानदर्शनानि च श्रोतुं स्वीकर्त्तुं च समुत्सुको दृश्यते। काव्येषु दर्शनग्रन्थेषु च पुरातनप्रवृत्तीनां नवावतारः समीहितः।

सांस्कृतिकप्रवृत्तिषु ज्ञानेन्द्रियैरनुभूतानि तत्त्वानि तावन्मात्रमुत्कृष्टानि न सम्मितानि यावद् योगदृष्टिभिः परिगृहीतान्यध्यात्मतत्त्वानि। अनया दिशा ऋृषीणां वाणी परमप्रमाणरूपमाप्तवचनमेवाभिमता। इत्थं चाध्यात्मसुखं सर्वोच्चमेवामन्यत।

दर्शनक्षेत्रे भारतस्य विचारस्वातन्त्र्यं सुव्यक्तमेव। वैदिकदर्शनमाश्रित्य परस्परविरोधिनामपि षड्दर्शनानां प्रवर्तनमद्भुतमेव प्रतिभाति। संस्कृत्याः संवर्धनायान्येषामपि देशिविदेशिविदुषां ज्ञानसम्पत्तेः स्वीकरणे भारतीयाः सदैव तत्परा आसन्। अनेन प्रकरणेन भारतीयविदुषां सहिष्णुता परिचीयते।

उपर्युक्तवातावरणवैशिष्ट्येन भारतीयसंस्कृतेः वैशिष्ट्यानि संजातानि। तेषां पर्यालोचनं विधेयम्।

## सांस्कृतिकवैशिष्ट्यम्

### देवपरायणता

'सर्वं देवमयम्' इति प्रागेव निदर्शितम्। एकस्मात् पुरुषाद् ब्रह्मणो वा जगतः सृष्टिविकासं मत्वा तस्मिन् ब्रह्मणि लय एव जीवनोद्देश्यमिति निश्चित्य मुक्तिः सम्भाविता। एकदेवादाविर्भूतानिन्द्रप्रमुखान् सुरानुद्दिश्य यज्ञाराधनपूजादिकं विहितम्। एषां देवानां प्रसादेन स्वर्गप्राप्तिरिति भारतीयधर्मस्य प्रमुखा प्रवृत्तिः।

भारतीयाः प्रवृत्तयः सामान्यतो देवपराः सञ्जाताः। भारतास्तु देववाणीमब्रुवन्, तेभ्यो वैदिकनिधिरपि देवेभ्यः प्राप्तः। ते सत्कर्मसु व्यापृता आसन् यतो देवाः सत्कर्मभिः प्रसन्ना भवन्ति। असत्कर्मणस्ते भीता आसन् यतः पापकारिणो जनान् देवा दण्डयन्ति। गीतानुसारं तु—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ ९.२७

प्राचीनयुगे ब्रह्मचारिणो ब्रह्मज्ञानेन ब्रह्मसंस्था भवितुं ब्रह्मचर्यमचरन्। गृहस्था ब्रह्मयज्ञे शिष्येभ्यो ब्रह्मज्ञानं दत्तवन्तः, देवपितृयज्ञयोर्देवार्चनं कृतवन्तः, भूतयज्ञे सर्वेषां प्राणिनां दिव्यस्वरूपं हृदि धारयन्तः तेभ्यो भोजनं दत्तवन्तः, अतिथियज्ञे च विष्णुरूपमेवातिथिमागतं मत्वा तस्य सत्कारं कृतवन्तः। वानप्रस्थाः तपसा तत्त्वज्ञानेन च ब्रह्मविद्यारहस्यं ज्ञातुमयतन्त। संन्यासिनस्तु ब्रह्मसंस्था एवाध्यात्मिकमानन्दमन्वभवन्। देवपरा एव सर्वेषां कलाशिल्पानां विकासाः सामान्यतः परिभाविताः। इदमेवानुसृत्य गीतायां दर्शितम्—

देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥

इमामेव देवपरायणतामाश्रित्य राष्ट्रस्य सांस्कृतिकैक्यं सुप्रतिष्ठितं 'वसुधैव कुटुम्बकम्' इति भावना समाधारिता च।

**धर्मपरता**

भारतीयसंस्कृतौ धर्मपदस्यातिव्यापकवृत्तिः वर्तते। जीवनस्य प्रथमश्वासतोऽन्तिमश्वासपर्यन्तं प्रत्येकक्षणे मानवेन कथं व्यवहर्तव्यमिति धर्मो बोधयति। सर्वेषां वर्णाश्रमाणां सर्वेषां पदानां चाधिष्ठातॄणां कर्तव्याकर्तव्यावबोधनं धर्म एव कारयति। धर्मप्रकरणे संस्कारविधिः, आश्रमव्यवस्था, जाति-व्यवस्था, भोजनपानालङ्करणावासादिव्यवस्था, मनोरञ्जनविधानम्, राजनीतिः, शिल्पकलादर्शाः सर्वाण्यपि प्रकाशितानि।

## आध्यात्मिकता

प्राचीनयुगे भारता ऐहलौकिकीषु पारलौकिकीषु च प्रवृत्तिषु समानमेव समुन्नता बभूवुः। अध्यात्मपथिका यथाशीघ्रमाधिभौतिकपरिग्रहान् परित्यज्य मोक्षपरायणा अभवन्। ईदृशा मोक्षपरायणाः साधवः सर्वाधिकं प्रतिष्ठिताः। सम्राजोऽपि तेषां समक्षं नतमस्तका अभवन्। अस्यां दशायां राजाऽपि गृहस्थाश्रमं परित्यज्य वानप्रस्थे प्रवृत्तः सन्नात्मनः पदवृद्धिमेवामन्यत।

## कर्मफलम्

सर्वासु भारतीयसंस्कृतिषु कर्मफलस्य प्रतिष्ठाभूत्। कर्मणः फलमस्मिन्नेव जीवने प्राप्यत एव। अतःपरमपि मरणोत्तरकाले स्वर्गे, नरके, नानाविधयोनिषु परिभ्रमणेऽपि कर्माणि न त्यजन्ति कर्त्तारम्। अनेन विश्वासेन सदाचारस्य महती प्रतिष्ठा संजाता।

## सर्वे सुखिनः सन्तु

आत्मसुखाभिलाषुका बहवस्तत्र सन्तु सर्वत्र, किन्तु सर्वेषां सुखाय यत्नकारिणो भारतीयसंस्कृतौ एव प्रतिष्ठिता बभूवुः। इदमेव निर्धार्य सुकृतिन आत्महिताय स्वल्पवस्तूनामेवोपयोगं समीचीनं मन्यन्ते। अस्यां दशायां परेषां शोषणमसम्भवं भवति। 'सर्वे सुखिनः सन्तु' इत्यस्य सिद्धान्तस्य श्रेष्ठानुयायी महाराजः अशोकोऽभवत्। तस्य मतौ यत्किञ्चित् सत्यं शिवं सुन्दरं चास्ति तत् सर्वेषामेव भवतु।

## निःसीमता

संस्कृतेः सर्वेषु क्षेत्रेषु निःसीमता दर्शनीया भवति। सांस्कृतिकाभ्युत्थानाय बहुविधाः योजनाः कृताः किन्तु तासां निर्मातारः कदापि स्वयोजनायाः सर्वोत्कृष्टत्वं न प्रत्यपादयन्। नित्यं नवीनतराः मान्यताः स्वीकृताः। विज्ञानशिल्पकलादिष्वपि सर्वत्र नवीनाः प्रयोगाः स्वीकृता दृश्यन्ते। विशालेऽस्मिन् भारतप्राङ्गणे भारतीयसंस्कृतेः विविधदृश्यावलीभिः समल-

ङ्कृता निःसीमता समन्वयात्मिका वर्त्तते। दार्शनिकभूमौ निःसीमतायाः सर्वोच्चं दृश्यं गीतायां लभ्यते। अनयैव निःसीमतया बहुसंख्यकानां वर्णानामेकसूत्रेणोपनिबन्धनं सम्भावितम्।

## भारतस्यैक्यम्

भारतस्यैकत्वं प्राचीनयुगे सदैव सम्प्रतिष्ठितमासीत्। न केवलं भारतवासिनोऽपितु वैदेशिकविद्वांसोऽपि कश्मीरप्रदेशात्कन्याकुमारीपर्यन्तं सिन्धुतः ब्रह्मपुत्रपर्यन्तं च भूभागमेकदेशमेवामन्यन्त।[1] विष्णुपुराणेऽस्य देशस्यैकत्वमनेन श्लोकेन निदर्शितम्—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥ २.३१

भौगोलिकदृष्ट्या स्पष्टत एको विश्लिष्टभूभागः प्रतिभाति भारतम्। भारतीयेतिहासे सततमेवास्य देशस्यैकता दृश्यते। भारतस्य संस्कृतिप्रकृत्योर्विभूतीनां गणनाप्रसङ्गे प्रायशोऽस्य सर्वभागेष्ववस्थितानां नदीनां गंगा-यमुना-गोदावरी-सरस्वती-नर्मदा-सिन्धु-कावेरीणाम्, नगरीणां अयोध्या-मथुरा-माया (हरद्वार) काशी - काञ्च्यवन्तिका-द्वारवतीनाम्, पर्वतानां महेन्द्रमलयसह्यशुक्तिमदृक्षविन्ध्यपारियात्राणां चाकलनमक्रियत। शङ्कराचार्यस्तु भारतस्य सीमान्तप्रदेशे विश्वविद्यालयरूपान् मठान् बदरीद्वारका-कांची-पुरीषु स्थापयामास। चक्रवतिराजेभ्यः समग्रं भारतमर्थशास्त्रानुसारं चक्रवर्तिक्षेत्रं मतम्, यथा—तस्यां हिमवत्समुद्रान्तरमुदीचीनं योजनसहस्रपरिमाणं तिर्यक्चक्रवर्तिक्षेत्रम्।

पुरा भारतस्य सर्वेषु भागेषु संस्कृतभाषा राष्ट्रभाषारूपेणाविद्यत। इत्थमेव सर्वभागेषु सर्वेषां विज्ञानदर्शनधर्माणां वेदोपनिषद्रामायणमहाभारतनाट्य-

१. ह्वेनसाङ्गो भारतस्यैकत्वं क्षेत्रं च निदर्शयन् लिखति—The whole territory was about 9000 li in circuit, with snowy mountains on the north and the sea on its three sides. ग्रीसारबदेशानां विदुषामपि मतमीदृशमेव प्राप्यते।

शास्त्रमहाकाव्यादीनां तेषां रचयितॄणां च प्रसरणमभवत्। रामकृष्णमहावीरगौतमशंकराचार्यादीनां परिभ्रमणोपदेशभूमिः प्रायः भारते सर्वत्रैवाभवत्। देशेऽस्मिन्नधुनापि प्रायः सर्वत्रैव सामाजिकव्यवस्थैकरूपैव वर्तते।

राजनीतिकदृष्ट्या भारतस्यैकत्वमसन्दिग्धमेव वर्तते। समग्रभारतं सदैवैकच्छत्राधीनं नाभवदिति सत्यमेव। तथापि बहवस्तत्र महाराजा बभूवुर्येषां दिग्विजयप्रवृत्तिर्भारतस्यैक्यमेव राजनीतिकदृष्ट्यापि निदर्शयति। प्राचीनभारते राजा तु मनोः प्रतीकमात्रमेवासीत्। कस्मिंश्चिदपि काले भारतस्य विभिन्नभागेषु राजमाना बहवः राजानः एकस्य मनोरनेकरूपाण्येवासन्। अस्मिन् प्रसङ्गे राज्ञो महत्त्वं न वर्तते। महत्त्वपूर्णं तदासीन्मनुमार्गेण प्रणिहिता राजनीतिः या समस्ते भारते एकैवाभवत्।

अपरं च भारते न काप्यासीत् तादृशी राज्यानां शाश्वतसीमा ध्रुवं वा क्षेत्रं यादृशी योरपीयराज्येष्वधुना वर्तते। यः कश्चिदधिकतरः शक्तिशाली राजा बभूव स यथेष्टं क्षेत्रमधिकृत्य स्वराज्यसीमां निर्मितवान्। अस्यां परिस्थितौ बहूनां राज्यानामस्तित्वे भूतेऽपि देशस्यास्य साकल्यं न विलुप्तम्। ततो न कदाप्यस्य देशस्य छिन्नाङ्गत्वं समर्थनीयम्।

## संस्कृतिः सभ्यता च

सभायां साधुरिति सभ्यः। तस्य भावः सभ्यता। कस्यापि मानवस्य समाजस्य वा तान् गुणानधिकृत्य सभ्यता जायते यैः ते समाजस्य संघटनं कुर्वन्ति, परस्परं संवर्धयन्ति, सौहार्दं सहिष्णुतां च दर्शयन्ति। इत्थं सभ्यतापदेन मानवस्य सर्वोच्चगुणाः सामस्त्येन व्यक्ता भवन्ति। संस्कृतिस्तु कस्मिंश्चिदपि वस्तुनि सर्वोच्चयोग्यताया आधानमेव संक्षेपेण भवति। मानवीयसंस्कृत्या मानवव्यक्तित्वस्य विकासः परिलक्ष्यते किन्तु तेन विकासेन सार्वजनिकं कल्याणं भवति न वेत्यनिश्चितमेव। कल्याणकारित्वं च संस्कृतेः सभ्यतया संजायते यथा कोऽपि वैद्यराजः प्राप्तविद्यः संस्कृतोऽपि यदि रोगिणामार्थिकशोषणं करोति तर्हि सोऽसभ्य एव।

अस्मिन्पुस्तके प्रथमं संस्कृतेर्निदर्शनं क्रियते प्रसङ्गतः सभ्यताया वर्णनमपि भविष्यति। सभ्यतासंस्कृत्योः सामञ्जस्यगतिः सर्वथा प्रशस्ता।

# संस्कृतिज्ञानस्य साधनानि

भारतीयसंस्कृतेर्ज्ञानार्थं सामान्यतोऽस्माकं पूर्वजानां कृतयोऽवशिष्टानि च तासां रूपाणि, विदेशतो भारते आगतानां यात्रिणां लेखास्तत्रत्यविदुषां निबन्धाश्च सोपयोगानि सन्ति। पूर्वजानां कृतयः साहित्यशिलालेखताम्रपत्रमुद्राशिल्पास्त्रशस्त्रादिरूपाः प्राप्यन्ते। आसु प्राचीनतमानि प्रस्तरयुगीनास्त्राण्येव सन्ति। तस्मिन्युगे जनाः काष्ठस्यास्थ्नः प्रस्तरस्य वाऽस्त्राणि निर्मितवन्तः। अस्त्रार्थं धातुप्रयोगोऽज्ञात एवासीत्। दक्षिणभारते 'वेल्लारी' प्रदेशे प्रस्तरयुगस्य बहुसंख्यकान्यस्त्राणि बहुविधान्यपररूपाण्यवशिष्टानि च प्राप्यन्ते। शेषभारतेऽपि इतस्ततः तत्कालीनावशिष्टानि वस्तूनि लभ्यन्ते।

## साहित्यम्

भारतवर्षस्य पुराकालीनः साहित्यिकनिधिरतिशयसमृद्धो वर्तते। प्रथमं स्थानं वैदिकसाहित्यस्यैवास्ति। वैदिकसाहित्येन वेदसंहितानां, ब्राह्मणग्रन्थानामारण्यकोपनिषदां च निर्देशः। पश्चात् श्रौतगृह्यधर्मसूत्राणां स्मृतीनां च ग्रन्थाः वर्तन्ते। प्रायोऽस्मिन्नेव युगे महाभारतरामायणयोः रचना कृता। इमे द्वे संस्कृतिज्ञानायाकररूपे स्तः। आभ्यां सह पालिग्रन्थानां रचना समारब्धा। पालिसाहित्यस्य त्रिपिटकानि मूलग्रन्थाः। इमानि समाश्रित्य परवर्तियुगे दर्शनधर्मादिकमधिकृत्य विपुलसाहित्यं रचितम्। वेदाङ्गानां शिक्षाकल्पनिरुक्तच्छन्दोज्योतिषव्याकरणविषयाणां ग्रन्था वैदिकयुगे विरचिताः। कालान्तरे तेषामभाव एव सञ्जातः किन्तु वेदाङ्गपरम्परा सदैव सजीवाऽभवत्। पाणिनिः व्याकरणमधिकृत्याष्टाध्यायीमरचयत्। तामेव समाश्रित्य पतञ्जलिना महाभाष्यं रचितम्। मौर्ययुगे कौटिल्येनार्थशास्त्रस्य रचना कृता। उपर्युक्तैः सर्वैर्ग्रन्थैः प्राक्खीष्ट्युगीना संस्कृतिधारा परिचीयते।

रामायणमहाभारतयोः शैलीमनुकृत्य परवर्तियुगेऽष्टादश पुराणानि, उपपुराणानि च विरचितानि सङ्कलितानि वा। एषु ग्रन्थेषु सृष्टेरादिकालत एव मानवजीवनस्य सर्वाङ्गीणा विशदा गाथा प्राप्यते। अपराणि च तत्र सन्त्येव नीतिशास्त्राणि कामशास्त्राणि च यैः तत्कालीनजीवनस्य लौकिकपक्षः प्रकाश्यते।

ख्रीष्टाब्दसमारम्भादेव भारते काव्यग्रन्थानां प्राचुर्यं दृश्यते। तत्र खलु महाकाव्यरूपकगद्यकाव्यादीनां महासागरो वर्तते। अश्वघोषकालिदास-भारविभवभूतिबाणभट्टमाघदण्डिसुबन्धुश्रीहर्षकल्हणप्रमुखा असंख्यास्ते महाकवयो येषां कृतयोऽधुनापि लभ्यन्ते। ततोप्यधिका संख्या तेषां सरस्वतीललितानां येषां काव्यवैखरी कालेन कवलीकृता।

जैनसंस्कृतेः परिचयार्थमङ्गोपाङ्गपुराणादिकमतिसमृद्धं साहित्यं संस्कृतप्राकृतापभ्रंशभाषासु लभ्यते। तामिलभाषायामपि प्राचीनसंस्कृते-रमूल्यानि पुस्तकानि विद्यन्ते।

शिल्पायुर्वेदयन्त्रसैन्यविधानादीनि कलाज्ञानविज्ञानात्मकान्यधिकृत्य पुस्तकानि वर्तन्ते।

**नगरध्वंसावशेषाः**

प्राचीनतमसंस्कृतेः सुस्पष्टज्ञानाय पंचसहस्रवर्षपूर्विकायाः सिन्धुसभ्य-ताया नगरध्वंसावशेषा विशेषमहत्त्वपूर्णा वर्तन्ते। तैरवशेषैः तत्रत्यलक्षा-धिकनागरिकाणां जीवनविधिः संस्कृतिर्वा प्रायः सामस्त्येन ज्ञायते। बहवस्तत्र वर्तन्ते प्राचीननगराणां ध्वंसावशेषाः। तेषु केषाञ्चिदेव खननं सम्पादितम्। तथा हि हस्तिनापुरतक्षशिलापाटलिपुत्रकौशाम्बीनालन्दादिषु प्राप्ताऽवशेषा दर्शनीया एव।

**ताम्रपत्रशिलालेखादयः**

प्राचीनसंस्कृतेः प्रामाणिकमैतिहासिकं च ज्ञानं शिलालेखस्तम्भ-लेखताम्रपत्रादिभिरेव भवति। ख्रीष्टाब्दतः त्रिशताब्दं प्रागेवाशोकेन भार-तस्य विभिन्नभागेषु शिलालेखाः स्तम्भलेखाश्च प्रतिष्ठापिताः। तेषु लेखेषु

महाराजस्याशोकस्य प्रजानामभ्युदयाय संवर्धनाय चोदात्ता नीतिरद्यापि विपुलसन्देशं ददाति। ख्रीष्टाब्दतः द्विशताब्दं प्रागुत्कलप्रदेशे जैनराजेन खारवेलेन हाथीगुम्फाशिलालेखः कारितः। पश्चाद्युगीनाः रुद्रदाम्नः समुद्रगुप्तस्य यशोधर्मणश्च लेखाः प्रमुखाः सन्ति।

प्राचीनकाले दानानि सामान्यतस्ताम्रपत्रैः प्रमाणितानि। ईदृशेषु ताम्रपत्रेषु दानोद्देश्यानि, दातुर्वंशावली, सामाजिकस्थितिश्च प्रायो दर्शितानि। शिलालेखानां ताम्रपत्राणां च सम्पादितसंग्रहाः बहुषु ग्रन्थेषु प्रकाशिता वर्तन्ते।

मुद्राः

मुद्रा अपि पूर्ववदुपयोगिन्यो भवन्ति। तासु राज्ञां प्रमुखेतिवृत्तानि, तेषां राजचिह्नानि, पूज्यदेवतानां प्रतिकृतयश्चाङ्कितानि दृश्यन्ते। मुद्राभिः प्रायशः कलाप्रमाणा ज्ञायन्ते। वैदेशिकमुद्राभिः विदेशव्यापारोऽनुमीयते।

शिल्पकलाः

प्राचीनध्वंसादिषु प्रचुरशिल्पसामग्री प्राप्यते। सिन्धुसभ्यताया युगात्प्रभृति प्रायः सदैव सर्वत्र च कलाकृतयः प्रतिष्ठिता अभवन्। वैदिकजैनबौद्धप्रमुखासु संस्कृतिषु शिल्पकलानामतिशयप्रतिष्ठा बभूव। फलतः देवालयस्तूपगुहादयः कलाकृतयः प्रस्फुटिताः। न केवलं भारते परन्तु लङ्कावर्मास्यामजावासुमात्राबालीचीनजापानादिषु देशेषु भारतीयकलाप्रमाणादर्शाः प्रतिष्ठापिताः। शिल्पकलाधिष्ठानेषु प्रायशस्तत्रत्यः तत्कालीनश्च सामाजिकजीवनविधिः सामस्त्येन निदर्शितो वर्तते।

वैदेशिकलेखाः

प्रथमं तु वैदेशिको लेखः मेसोपोटामियाप्रदेशे प्राप्तः। अस्मिन् लेखे वैदिकदेवानां चर्चा विद्यते। अनेन ऋग्वेदस्य रचनाकालादीनां परिचयः प्राप्यते। ततः पश्चाद् ग्रीसदेशस्य यवनयात्रिणामितिहासज्ञानां च निबन्धनं महत्त्वपूर्णं विद्यते। हेरोडोटसमेगस्थनीजप्लीनीस्ट्राबोडायोडोरसारयनादयः प्रमुखाः यवनलेखका बभूवुः, येषां कृतिषु भारतवर्णनं विद्यते।

चीनदेशस्य बहवो यात्रिणो भारतीयविद्याभिलाषिणो भूत्वा परिभ्रम्य चास्माकं देशस्य विविधभागेषु तत्कालीनेतिवृत्तं लिखितवन्तः। ह्वेनसांग-फाह्यानेत्सिंगादयः तेषु यात्रिषु प्रमुखा आसन्। बहवो भारतीयविद्वांसः बृहत्तरभारते तुर्किस्तानचीनजापानेरण्डोचीनपूर्विद्वीपसमूहेषु भारतीय-संस्कृतेः प्रचारार्थं गताः। तेषु तेषु देशेषु निवसन्तः तेऽगणितग्रन्थान-रचयन्। तेषु ग्रन्थेषु भारतीयसंस्कृतेर्वर्णनं विद्यते। पूर्विद्वीपसमूहेऽ-धुनापि रामायणमहाभारतादिकं समाश्रित्य लिखिता बहवो ग्रन्थाः प्राप्यन्ते। अरबदेशवासिनः कतिपयविद्वांसः सुलेमानाबूजैदुलहसनेब्न-खुर्दवादयः भारतीयेतिवृत्तं संक्षिप्तमेव लिखितवन्तः।

## सांस्कृतिकयुगविभाजनम्

संस्कृतिमधिकृत्य भारतीयेतिहासस्य त्रयो विभागा दृश्यन्ते—प्राचीनः, मध्ययुगीनः, अर्वाचीनश्च। प्राचीनयुगं सृष्टेरादिकालादारभ्य खीष्टस्य पश्चात् द्वादशशताब्दपर्यन्तं वर्तते। ततः परं मध्ययुग-मारभ्यते। मध्ययुगे भारतीयसमाजो वैदेशिकसंस्कृतीनां प्रवृत्तिभिरंशतः प्रभावितोऽभूत्। खीष्टस्य पश्चादष्टादशशताब्दपर्यन्तमेव मध्ययुगीनाः प्रवृत्तयो वर्तन्ते। तस्य पश्चात् योरपीयजातीनां समागमेन भारते पाश्चात्यसंस्कृतेराविर्भावोऽभूत्। अस्मिन् नवयुगे भारतीया संस्कृतिः पाश्चात्यसंस्कृत्या प्रभाविता लक्ष्यते।

उपर्युक्तसांस्कृतिकयुगविभाजनं तावन्मात्रमेव सत्यं यावन्मात्रं गङ्गाया-स्त्रिभागाः—पर्वतदेशीयः, समतलदेशीयः, सङ्गमदेशीयश्च कथ्यन्ते। वस्तुतस्तु गङ्गाधारा सदाधारा त्वेकैव। तथैव भारतीयसंस्कृतिरेकैव वर्तते। कालान्तरे जातानां परिवर्तनानां विकासप्रवृत्तीनां च परिचयार्थं त्रयाणां युगानां विभाजनमक्रियत। अधुनाऽपि प्राचीनसंस्कृतिर्बाह्यतो वैदेशिकसंस्कृतिभिः किञ्चिद्वैशिष्ट्यमादधानाऽपि भारतीयानामभ्युदयपथं प्रकाशयति।

प्रकृतपुस्तके संस्कृतेः प्राचीनप्रवृत्तयः सामान्यतो निदर्शनीयाः।

# संस्कारः

मानवव्यक्तित्वस्य विकसनमेव संस्कृतिः। मानव-संस्कृतेः समारम्भो भारते प्रथमं संस्कारेभ्यः प्रारभ्यते। यत्किञ्चिदपि प्रागाकलितं विकास-सौरभ्यं मानवतायां विद्यते तस्य भावेन भावनमेव संस्कारः। संस्कारेणैव शिशौ मानवतायाः प्रथमोद्बोधो भवति। गर्भाधानात् प्रभृति मरणपर्यन्तं संस्कारविधिना पुरुषस्य शरीरतः मनसश्च शुद्धिर्जायते समक्षं च तस्य भाविजीवनस्योत्थानमयी परम्परा प्रस्तुता भवति।[1] मानवव्यक्तित्वस्य विकासाय तत्सम्बन्धितत्त्वानुशीलनम्, उपदेशश्रवणम्, गुरुजनानां वैदिकमन्त्रैः शुभाशंसा चावश्यमेव प्रभावोत्पादकानीति भारतीयानां धारणा।

भारतीयकल्पनानुसारं मानवानां सर्वेषु समारम्भेषु देवसहायत्वं सोपयोगं वर्तते। व्यक्तित्वस्य विकासनेऽपि पदे पदे तेषां सहायता याचनीया भवति। देवाः प्रार्थिताः सन्तोऽदृश्या अपि मानवस्य सहायतां कर्तुं सन्मार्गे नियोजयितुं च प्रस्तुता भवन्ति। संस्कारप्रक्रियासु देवानां समक्षं शुद्ध-संस्कृतोन्नतप्रवणाय भाविजीवनाय प्रतिज्ञा क्रियते। अस्माकं वातावरणस्य परिस्थितेश्च रूपं स्वकीयभावनाविचारानुकूलं निर्मीयते, तदनुसारं चास्माकं शक्तीनां प्रवृत्तीनां च विकासह्रासौ जायेते इति भारतीया श्रद्धा।

उपर्युक्तदृष्ट्या संस्काराणां संख्या गणनापरिधेर्बाह्या भवितुमर्हति। अभ्युदयस्य प्रत्येकस्य समारम्भः संस्कारादेव प्रारभ्यते। एषु संस्कारेषु षोडश एव प्रायशो धर्मग्रन्थेषु संगृहीताः। तेषां प्रमुखसंस्काराणां

---

१. संस्कारमधिकृत्य प्राचीनसाहित्ये पारिभाषिकाणि वचनानि—"संस्कारो नाम स भवति यस्मिञ्जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य" इति शाबरटीका जैमिनिसूत्रं ३.१.३। "योग्यतां चादधानाः क्रियाः संस्कारा इत्युच्यन्ते।" तन्त्रवार्तिकं पृष्ठं १०७८। "संस्कारो हि नाम गुणाधानेन वा स्याद् दोषापनयनेन वा।" शाङ्करभाष्यं वेदान्तसूत्रं १.१.४। "संस्कारैः संस्कृतास्ते।" महाभारतस्यादिपर्वणि १०८.१८।

नामानि —गर्भाधानपुंसवनसीमन्तोन्नयनविष्णुबलिजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलोपनयनचतुर्वेदव्रतसमावर्तनविवाहाः सन्ति। इमे संस्कारा ब्रह्मचर्याश्रमे गृहस्थाश्रमे च सम्पादिताः। व्यक्तित्वस्य विकासदृष्ट्या ब्रह्मचर्यमतिशयमहत्त्वपूर्णं विद्यते। ब्रह्मचर्यस्यारम्भ उपनयनविधेरनन्तरं भवति।

संस्काराणां सार्वजनीनत्वं प्रत्यक्षमेव दृश्यते। शूद्राणां स्त्रीणां च संस्कारा मन्त्रविहीनाः कृताः। यथा यमः—

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः।
न केनचित् समसृजत् छन्दसा तं प्रजापतिः॥

व्यासस्यापि मतमीदृशम्।[१] स्त्रीणां संस्कारविषये मनुना प्रोक्तम्—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्॥२.६६

संस्काराणामपरिहार्यत्वमेवासीत्प्राचीनयुगे। अकृतसंस्कारा जना जातिच्युताश्चाण्डालशूद्राणां समकक्षत्वं प्राप्ताश्च मताः। उपनयनं तु द्वितीयं जन्मैव येनार्यो द्विजो भवति।

**संस्कारेभ्योऽभिरुचिः**

प्राचीनयुगे पितॄणामत्यधिका चिन्ता पुत्रस्य व्यक्तित्वविकसनाय बभूव। तस्मिन्युगे पुरुषस्यामरत्वाय पुत्रपरम्परामाध्यमः सर्वोत्कृष्टो मतः। 'आत्मा वै जायते पुत्रः' इति शास्त्रवचनानुसारं पिता स्वयमेव पुत्ररूपेण जायते। अस्यां दशायां पिता स्वकीयाभावानपि पुत्रसमृद्ध्या परिपूर्यात्मानं बहु मन्यते स्म। प्राचीनयुगस्य धर्मपरायणतापि संस्कारं सर्वजनग्राह्यमकरोत्। एषां संस्काराणामुपयोगिस्वरूपमभ्युदयशीलत्वं चाधिकृत्य मेगस्थनीजमहाभागेनाशंसा कृता।[२]

---

१. व्यासस्मृतिः १.१६
२. *M'Crindle: Ancient India* p 98

## गर्भाधानम्

शिशोर्मातुर्गर्भे बीजरूपेण प्रतिष्ठापनं गर्भाधानम्। वैदिककालेऽस्मिन्नवसरे विष्णुत्वष्टृप्रजापतिसरस्वतीनामायोजनमपेक्षितम्।[१] अथर्ववेदानुसारं दम्पतीनां तत्कालीना मनःस्थितिरीदृशी बभूव—

अक्ष्यौ नौ मधुसंकाशे अनीकं नौ समञ्जनम्।
अन्तः कृणुष्व मा हृदि मन इन्नौ सहासति॥ ७. ३६. १
पुमांसं पुत्रं जनय तं पुमाननु जायताम्।
भवासि पुत्राणां माता जातानां जनयाश्च यान्॥
विन्दस्व त्वं पुत्रं नारि यस्तुभ्यं शमसच्छमु तस्मै त्वं भव॥
३. २३. ३,५

बृहदारण्यकोपनिषदि विशिष्टगुणैः समन्वितान् पुत्रान् प्राप्तुं विशिष्टभोजनानां निदर्शनं वर्तते।[२]

परवर्तियुगे गर्भाधानाय तिथीनां नक्षत्राणां च शुभाशुभत्वं पर्यालोचितम्। विज्ञानसम्मतं प्रतिभाति विधानमिदम्।[३] गर्भे स्थाप्यमानः शिशुर्मातुर्मानसपटलेऽङ्कितपुरुषस्य सादृश्यं प्राप्नोति। अत एव हीनाः पुरुषास्ततो न दर्शनीया इति केषाञ्चित् शास्त्रकाराणां मतम्।[४]

१. ऋग्वेद १०.१८४; अथर्व ५.२५ बृहदारण्यक ६.२.१३
२. बृहदारण्यक ६.४
३. Owing to the attraction of the moon and increase of the watery substance, the physical condition of the earth becomes abnormal on the *Parvan* dates and consequently the health of the animal world is not sound. So it was thought advisable that such an important act as *garbhādhāna* should not be performed on these dates.
*R. B. Pandey : Hindu Saṁskāras p.* 89
४. वैखानसे ३. ९; स्मृतिचन्द्रिकायाम्, पृ. २८९

मातुः पितुश्चोदात्तविचाराणां सङ्कल्पनम्, तेजस्विपुत्रप्राप्तिकामना, दिव्यशक्तीनां सान्निध्यं चास्य संस्कारस्य वैशिष्ट्यानि।

## पुंसवनम्

गर्भस्थशिशोः पुत्रत्वं विधातुं पुंसवनं क्रियते। अस्मै प्रयोजनाय देवानां स्तुतयः कृताः, तेभ्यश्च देवेभ्यः पुत्रप्राप्तये वरो याचितः। अस्मिन्नवसरे गर्भरक्षणार्थं पुत्रोत्पत्तये चायुर्वेदोक्तौषधीनां प्रयोगश्च कृतः।[1] पुंसवन-सीमन्तोन्नयनसंस्काराभ्यां समुपस्थितं सानन्दं वातावरणं मातुः स्वास्थ्य-संवर्धनाय भवति, ततः गर्भस्थशिशोः कल्याणं जायत इति सुनिश्चितमेव।[2]

वैष्णवसंस्कृतौ पुंसवनमाध्यमेन वर्षपर्यन्तं विष्णोः स्तुतिः तस्याराधना पूजा च कर्तव्या इति विहितम्।[3]

## सीमन्तोन्नयनम्

सीमन्तोन्नयनमुत्सवप्रायमभवत्। संस्कारेऽस्मिन् पतिः पत्न्याः केश-पाशमलङ्कुर्वन् तस्मिन् सीमन्तमरचयत्। गौणतो गर्भभारक्लान्ता माता प्रमोदिताऽभूत्। वैदिकयुगे सीमन्तोन्नयनावसरे वीणागाथिनो वीणावाद्य-पूर्वकं सोमराजस्य स्तुतिमकुर्वन्। सीमन्तोन्नयनं गर्भाधानात् चतुर्थे मासेऽक्रियत यदा शुक्लपक्षे पुंसा नक्षत्रेण चन्द्रमा युक्तोऽभवत्।

## विष्णुबलिः

गर्भाधानादष्टमे मासे विष्णुबलिसंस्कारेण विष्णवे चतुष्षष्टिबलयः समर्पिता वैदिकसूक्तैश्च तस्य देवस्य स्तुतिः कृता। प्रभावेणास्य संस्कारस्य गर्भस्थशिशोः संरक्षणं निरापद् प्रसूतिश्चामन्येताम्। सोष्यन्तीकर्म-संस्कारेणासन्नप्रसवाया मातुः कल्याणार्थं सुखेन प्रसवार्थं चायोजनं कृतम्।

---

१. पुंस्त्वलक्षणानामाविर्भावात्प्राग्गर्भस्थशिशोर्लिङ्गपरिवर्तनं कर्तुं शक्यत इति स्पष्टं मतमायुर्वेदस्य। चरके शारीरस्थानप्रकरणे ८. ३—२५

२. समानयोगक्षेमा हि माता तदा गर्भेण केषुचिदर्थेषु। शारीरस्थाने ४.१६

३. भागवते ६ १८—१६ अध्यायतः।

## जातकर्म

शिशौ जाते महान् हर्षः संजातः। कुलस्य कुटुम्बस्य च संवर्धनमेव पुत्रोत्पत्त्या भवति देवानुग्रहेण चेदं सम्भवतीति धारणाया जातकर्मसंस्कारेण देवेभ्यः कृतज्ञताप्रकाशोऽक्रियत। प्रथमं तावत् वैश्वानरस्य परितुष्टिः कृता। वैश्वानरस्य परितोषेण जातस्य शिशोः कालान्तरे तेजस्वितायाः समृद्धेः शक्तेश्च सम्भावना मता।[1] अनेन समारम्भेण निःसन्दिग्धमिदं प्रतिभाति यत् वैदिककालीनाः पूर्वजाः शिशोर्व्यक्तित्वस्य समीचीनविकासाया- जन्मनः समुत्सुका आसन्। नाभिवर्धनात्प्रागेव पंचभिर्ब्राह्मणैः शिशोरनु- प्राणनमक्रियत। अनेन विधानेन तस्य पूर्णजीवनस्याभ्युदयस्य चाशा सम्भाविता।[2] ब्राह्मणानां संसर्गो रहस्यविधिना शिशोर्ब्राह्मणत्वविधायक इति धारणासीत्। पश्चात् पृषदाज्यस्याहुतिः कृता। अस्मिन् हवने पिताऽ- कामयत—"अस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे। अस्योपसंद्यां माच्छै- त्सीत् प्रजया च पशुभिश्च स्वाहा। मयि प्राणाँस्त्वयि मनसा जुहोमि स्वाहा। यत्कर्मणात्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टात्स्विष्टकृद्विद्वान्स्विष्टँ सुहुतं करोतु नः स्वाहा" इति। ततः पश्चात् पितास्य दक्षिणं कर्णमभिनिधाय "वाग्वागिति त्रिरथ दधिमधुघृतँ संनीयानन्तर्हितेन जातरूपेण प्राशयति, भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामि" इति सन्दिष्टवान्।[3] वैज्ञानिकदृष्ट्या मानवस्तु ब्रह्माण्डस्याखिलस्य सूक्ष्मं स्वरूपमेव। अस्य तत्त्वानुशीलनस्य मानसिकप्रतिष्ठायै शिशोर्जन्म प्रथमोऽवसरोऽभवत्। अनेन प्रकारेण मानव-व्यक्तित्वस्य विश्वात्मकत्वं नियोजितमभूत्।

---

१. वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते...यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति। तै० सं० २.२.५.३—४

२. शतपथ ११.८.३.६

३. बृहदारण्यके ६.४। वाक् समग्रवेदानां प्रतीकमस्मिन् प्रकरणे। आयुर्वेदा- नुसारं दध्नेन्द्रियशक्तिर्वर्धते, मधु रस एवौषधीनां घृतं च पशूनां तेजः। ऐतरेयब्राह्मणे ८.२०। त्रीणि चेमानि वैदिकयुगस्य श्रेष्ठभोजनम्। शतपथ ६.२.१.११

पश्चात् पिता शिशोर्नाम कृतवान् 'वेदोऽसि' इति। तद् गुह्यमेव नामाभवत्। ततः शिशुं मात्रे प्रदाय पिता तस्मै स्तनं प्रयच्छति सरस्वतीं प्रार्थयते च—

यस्ते स्तनः शशयो यो मयोभूः येन विश्वा पुष्यसि वार्याणि।

यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवेऽकः॥

ततः पिताऽस्य मातरमभिमन्त्रयते—इलासि मैत्रावारुणी वीरे वीरमजीजनत्। सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति। शिशुं सम्बोध्य तत्रत्या गुरुजना आहुः—अतिपिता बताभूरतिपितामहो बताभूः। परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायते।[१]

आश्वलायनानुसारं दधिमधुघृतं प्राशयन् पिता शिशवे शतवर्षस्य पूर्णायुरकामयत। ततः पश्चात् शिशोर्मेधाजननं कुर्वन् तस्य श्रवणसमीपं मुखमानीयागायत्—

मेधां त्वे देवः सविता मेधां देवी सरस्वती।

मेधां त्वे अश्विनौ देवावाधत्तां पुष्करस्रजौ॥

शिशोः स्कन्धं स्पृशन् पिताऽकामयत—

अश्मा भव, परशुर्भव हिरण्यमस्तृतं भव

वेदो वै पुत्रनामासि जीव शरदः शतमिति

इन्द्र श्रेष्ठानि द्रविणानि धेह्यस्मै

प्रयन्धि मघवन्नृजीषन्।

उपर्युक्तप्रक्रियायाः प्रत्यक्षस्वरूपमपि प्रदर्शितम्। तद्यथाश्मा परशुः हिरण्यं क्रमश उपर्युपरि निधाय तस्योपरि शिशुः प्रतिष्ठापितः। अनेन विधिना शिशोः सर्वोच्चत्वं प्रसिद्धम्।

केषुचिदभ्युदयशीलेषु कुलेषु शिशुं ब्रह्मलोकपरायणं विधातुं जन्मदिने निरन्तरमग्निः प्रज्वालितः[२]। पुत्रजन्मोत्सवे पिता प्रायशो दानमकरोत्, यतो ब्रह्मपुराणानुसारम्—

१. बृहदारण्यक० ६.४.२७-२८

२. असातमन्तजातके

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा ॥
तत्र दद्यात् सुवर्णं च भूमिं गां तुरगं तथा ।
छत्रं छागं च माल्यं च शयनं चासनं गृहम् ॥

## नामकरणम्

भारते नाम्नोऽतिमहत्त्वमिति विदितं सर्वेषाम् । नाम्नो महत्त्वमधिकृत्य बृहदारण्यकोपनिषदि संवादोऽयं प्राप्यते—याज्ञवल्क्येति होवाच—यत्रायं पुरुषो म्रियते किमेनं न जहातीति । नामेत्यनन्तं वै नामानन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ।[1]

जातकर्मणि संस्कारे गुह्यं नाम कृतम् । जन्मनो दशमे द्वादशे वा दिने पुण्ये मुहूर्त्ते नक्षत्रे वा सर्वजनप्रकाशनीयं नामाक्रियत ।

नाम्नो मधुरध्वनिः स्पृहणीय एव । चतुरक्षरं द्व्यक्षरं वा घोषवदाद्यन्तस्थं पुंसाम्, ईकारान्तमयुजाक्षरं च स्त्रीणामेव कृते नाम्नि, शुचि तत्कुलं भवतीति । द्व्यक्षरनाम्ना लौकिकप्रतिष्ठा चतुरक्षरेण चाध्यात्मिकाभ्युदयस्य प्रतिष्ठा सम्भाविता । प्राचीनयुगस्य महापुरुषाणां नामानि नियमविरुद्धान्यपि दृश्यन्ते--तद्यथा कृष्णः, भरतः, अर्जुनः, पाणिनिः, सीता वा ।

बौधायनानुसारं पुरुषाणां नामानि ऋषिदेवपूर्वजानां नामान्याश्रित्य भवितव्यानि । केषुचिद्धर्मशास्त्रेषु विहितम्—साक्षादेव देवानां नामानि न ग्रहीतव्यानि । तद्यथा—ब्रह्मप्रकाशः शिवदासः देवदत्तः इति शोभननामानि, न तु रामः विष्णुः सुरेन्द्रो वा पुरुषाणां नामानि भवेयुः । स्त्रीणां नामान्यधिकृत्य मनुना निर्दिष्टम्—

स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोरमम् ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ २.३३

---

१. बृ० उ० ३.२.१२ । बृहस्पतिमतं नामाधिकृत्य इत्थमेव—
नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः ।
नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म ॥

विष्णुपुराणानुसारं तु—

गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ।
नार्थहीनं न चाशस्तं नापशब्दयुतं तथा ॥
नामङ्गल्यं जुगुप्स्यं वा नाम कुर्यात्समाक्षरम् ।
नातिदीर्घं नातिह्रस्वं नातिगुर्वक्षरान्वितम् ॥
सुखोच्चार्यं तु तन्नाम कुर्याद्यत्प्रवणाक्षरम् । ३-१०-९-११

नाम्ना देवानां महापुरुषाणां चोदात्तादर्शाः मानवतायाः समक्षं प्रतिष्ठापिताः । नाम्नैवाभ्युत्थानाय प्रेरणा प्रथममेव ग्रहणीया भवेदिति शास्त्रकाराणां मतम् । येन केन प्रकारेण महतां देवानां नामोच्चारणेन पुण्योदयस्य सम्भावना कृता ।

## निष्क्रमणम्

जन्मनश्चतुर्थमासे शिशोर्गृहान्निष्क्रमणमभवत् । मातुर्गर्भान्निष्क्रम्य प्रसवगृहे ततः निष्क्रम्यान्येषु गृहेषु विचरन् शिशुः सङ्कीर्णपरिधौ वसति । तस्मादपि निष्क्रम्य विश्वविभूतीनां संग्रहणाय विश्वात्मकं स्वव्यक्तित्वं चिकीर्षन् शिशुः सूर्यचन्द्रादीनां दर्शनमकरोत् । सामाजिकसीम्नो निष्क्रम्य स ब्रह्मपथमनुसरिष्यतीति सिद्धमेवेदमुपर्युक्तक्रमेण ।

सूर्यस्य दर्शनं प्रथममेवाक्रियत । सूर्यस्तु भारतीयदृष्ट्या ज्ञानविज्ञानयोः परमं निधानमेव । आचार्य एव सूर्यः सविता वा दिव्यज्ञानाय । सूर्यदर्शनं कारयन्नेव पिताऽगायत्—

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतम् ।
शृणुयाम शरदः शतं प्रब्रवाम शरदः शतम् ।
अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥
वा० सं० ३६.२४

रात्रौ निष्क्रमणविधौ चन्द्रदर्शनं कारितम् । आसां दिव्यविभूतीनां दर्शनस्य शिशोः सर्वतः संवर्धने हितकरः प्रभावोऽभूत् ।

## अन्नप्राशनम्

शिशोजन्मकाले दधिमधुघृतानां प्राशनमभूत्। ततः पश्चात् शिशोः षष्ठमासेऽन्नप्राशनमक्रियत। आयुर्वेदानुसारं लघुहितमन्नं शिशवे दातव्यम्।[१] अन्नस्य न केवलं जीवनधारणायैव महत्त्वमपि तु व्यक्तित्वस्य विकासायान्नस्योपयोगिता मता। तद्यथा—आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः।[२] अस्यां दशायां स्पष्टमेव प्रतिभाति यत् शिशवे प्रदत्तं प्रथमं भोजनं व्यक्तित्वस्य विकासमुद्दिश्यैव निर्णीतमासीत्। सामान्यतोऽन्नप्राशनाय दधिमधुघृतमिश्रं भक्तमेव दत्तम्। भोजनग्रासं दददेव पिता 'भूर्भुवः स्वः' इत्युच्चारणमकरोत्। केचिद्धर्मशास्त्रकाराः समांसं भोजनमन्नप्राशनाय निर्दिशन्ति।[३]

भारतीयधारणानुसारमन्नं देवतारूपं वर्तते। अस्मिन् संस्कारे पदे पदेऽन्नदेवस्य स्तुतिरक्रियत।

कालान्तरेऽन्नप्राशनावसरे शिशोर्भाविजीवनस्य जीविकोपायस्य निर्णयः कृतः। देवानां सान्निध्ये बहूनां व्यवसायानां प्रतीकानि समुपस्थापितानि। तेषु यानि कानिचित् शिशुरचिनोत् तैरेव शिशोर्जीविका सम्भाविता।

## चूडाकरणम्

चूडाकरणं शिशोः प्रथमेऽब्दे तृतीये वाक्रियत। संस्कारेऽस्मिन् केशानां कर्तनं कृत्वा शिरसि चूडा कृता। केशकर्तनस्य लाभा आयुर्वेददृष्ट्या सन्ति। यथा—

---

१. षण्मासं चैतमन्नं प्राशयेल्लघुहितं च। सुश्रुते शारीरस्थाने १०.६४

२. छान्दोग्ये ७.२६.२। गीतायामपि समर्थनं दृश्यतेऽस्य मतस्य। गीता १७.८.१०

३. षाण्मासिके शिशौ मांसभोजनस्य पाचनयोग्यता न विद्यते। कथं मांसभोजनमन्नप्राशनाय समर्थितमिति समस्या। पारस्करस्तु मांसभोजनं समर्थितवान्—भारद्वाज्या मांसेन वाक्प्रसारकामस्य। मत्स्यैर्जवनकामस्य। आटया ब्रह्मवर्चसकामस्य। १.१९.७-१३

पापोपशमनं केशनखरोमापमार्जनम् ।
हर्षलाघवसौभाग्यकरमुत्साहवर्धनम् ॥
पौष्टिकं वृष्यमायुष्यं शुचिरूपं विराजनम् ।
केशश्मश्रुनखादीनां कर्तनं संप्रसाधनम् ॥ चरकसंहितायाम्

चूडाकरणादारभ्य शिखाग्रहणं भवति। आयुर्वेददृष्ट्या शिखाया महत्त्वं विद्यते—तद्यथा शिरसः शिखरे शिरा-सन्धीनां सम्मिलनं भवति। अस्य स्थानस्याधिपती रोमावर्तः। तत्र केनापि प्रहारेण शीघ्रमेव मृत्युर्भवति।[1] अस्य कोमलस्थानस्य रक्षा शिखया भवति।

केशकर्तनस्य समारम्भः स्वयमेव पिताऽकरोत्। देवेभ्यः स्तुतिं कुर्वन् सोऽकामयत—शिशुर्दीर्घायुः यशस्वी सानन्दश्च भवतु। शिरसि कुल-रीत्यनुसारं चूडा रक्षिताः। तद्यथा—'दक्षिणतः चूडा वसिष्ठानाम्। उभयतोऽत्रिकाश्यपानाम्। मुण्डा भृगवः। पंचचूडा अङ्गिरसः। केश-पंक्तिर्मङ्गलार्थं, शिखिनोऽन्ये। यथाकुलधर्मं वा।' चूडासंख्या प्रायशो प्रवरसंख्यासमा एवाभवत्।[2]

## उपनयनम्

आचार्येण ब्रह्मविद्याया अध्यापनाय विद्यार्थिनः शिष्यभावेन स्वीकरणमुपनयनम्।[3] ततः पंचविंशतिवर्षपर्यन्तं ब्रह्मचर्याश्रमस्य विधानम्। पिता स्वयमेव स्वपुत्रमाचार्यसमीपं नीत्वा तस्योपनयनाय प्रार्थयत। उपनयनसंस्कारे स्वीकरणमाध्यमेन विद्यार्थी तस्याचार्यस्य पुत्ररूपेण पुनरजायत। पुत्रीकरणस्येयं प्रक्रियाऽथर्ववेदे प्रथमं वर्णितम्—तद्यथा

---

१. सुश्रुत-शारीरस्थाने ६.८३

२. प्रवरास्तु कस्यापि कुलस्य महर्षय एव। प्रवरैः कुलस्योच्चता परिचीयते। 'प्रवरसंख्यासमाः चूडाः महर्षिसमो भवितुं प्रोत्साहयन्तु' इति धर्मशास्त्र-काराणां मतं प्रतिभाति।

३. उपनयनस्यापरं नामाचार्यकरणमस्ति। पाणिनिः १.३.३६

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः ।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः ॥
११.५.३

वैदिककाले विद्यार्थी स्वयमेवाचार्यसमीपं गत्वा न्यवेदयत्--ब्रह्मचर्यमागामिति ।

आचार्यो विद्यार्थिनमाह--को नामासीति । प्रजापतिर्वै कः । प्राजापत्यमेवैनन्तत्कृत्वोपनयते । स तस्य हस्तं गृह्णाति ।

आचार्योऽभाषत--इन्द्रस्य ब्रह्मचार्यसि । अग्निराचार्यस्तव । अहमाचार्यस्तव । आचार्यः ताभ्यां देवताभ्यां विद्यार्थिनं परिददाति । पश्चात् स तं भूतेभ्यः, प्रजापतये, सवित्रे च परिददाति कथयति च--एते वै श्रेष्ठे वर्षिष्ठे देवते । एताभ्यामेवैनं श्रेष्ठाभ्यां वर्षिष्ठाभ्यां देवताभ्यां परिददाति । तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति । पश्चात् स विद्यार्थिनमद्भ्यः ओषधीभ्यो द्यावापृथिवीभ्यां विश्वेभ्यो भूतेभ्यश्च परिददाति ।

पश्चादाचार्योऽवदत्--ब्रह्मचार्यसि । अपोऽशानेत्यमृतं वा । कर्म कुरु इति । वीर्यं वै कर्म । वीर्यं कुरु । समिधमाधेहीति । समित्स्वात्मानं तेजसा ब्रह्मवर्चसेन । मा सुषुप्था । मा मृथा । आपोऽशानेत्यमृतं वा । तदेनमुभयतोऽमृतेन परिगृह्णाति ।

अथैनं सावित्रीमन्वाह ।[1]

अनेन प्रकारेणोपनयनविधिर्वैदिककालेऽनतिदीर्घः प्रतिभाति । उपनिषदि सरलविधिः सत्यकामस्योपनयनप्रकरणे उल्लिखितः[2] । उपनिषद्युगे गृहस्था अपि आत्मन उपनयनमकारयन् यदि कदापि तेषां मनसि ब्रह्मज्ञानं प्राप्तुमिच्छाऽजायत ।[3] तस्मिन् युगे द्वादशवार्षिका बालका ब्रह्मचर्यायाऽऽचार्यकुलवासिनोऽभवन् ।[4]

---

१. शतपथब्राह्मणे ११.५.४
२. छान्दोग्ये ४.४.५
३. छान्दोग्ये ५.११.७
४. छान्दोग्ये ६.१.२

परवर्तियुगे तु सुदीर्घ एत्रोपनयनविधिरभूत्। उपनयनाय कालनिर्धारणमक्रियत—तद्यथा वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यम्। गर्भाष्टमे ब्राह्मणं गर्भैकादशेषु राजन्यं, गर्भद्वादशेषु वैश्यम्।[1] विभिन्नवर्षेषूपनयनसम्पादनेन विविधानि काम्यानि साध्यानि मतानि—तद्यथा सप्तमे ब्रह्मवर्चसकामम्। अष्टमे आयुष्कामम्। नवमे तेजस्कामम्। दशमेऽन्नाद्यकामम्। एकादश इन्द्रियकामम्। द्वादशे पशुकामम्।[2] मनुस्तूपनयनावस्थाया अल्पत्वमेव समीचीनममन्यत—तद्यथा

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥ २.३७

उपनयनाय परमावस्थाऽपि निर्धारिता। मन्वनुसारम्—

आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।
आ द्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः॥ २.३८

याज्ञवल्क्यानुसारं तु—

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः। १.३८

उपनयनहीनानां जनानां बहिष्कारः कृतः—तद्यथा

नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणैः सह॥ मनुस्मृतौ २.४०

परवर्तियुगे विस्तृतोपनयनविधेः प्रमुखाङ्गान्यधोलिखितानि—विद्यार्थिन उत्तरीयवासोधारणम्, मुण्डनम्, मेखलादण्डधारणम्, हवनम्, समिदाधानम्, सावित्रीशिक्षणं च। एषु विधिषु पदे पदे वैदिकमन्त्रैर्देवस्तुतिरक्रियत व्रतानि सङ्कल्पाश्च कृतानि। पश्चादाचार्योऽवदत्—"मम व्रते हृदयं ते दधामि। मम चित्तमनुचित्तं तेऽस्तु। मम वाचमेकव्रतो जुषस्व। बृहस्पतिष्ट्वा नियुनक्तु मह्यम्।" विद्यार्थिने ब्रह्मचर्यव्रतस्येदृशीं रूपरेखामा-

---

१. आपस्तम्बे १.१.१६
२. आपस्तम्बे १.१.२०—२६

चार्यः प्रस्तुतवान्—"ब्रह्मचार्यसि। अपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीः, आचार्याधीनो वेदमधीष्व।"

अस्मिन्नुपनयनविधौ विद्यार्थिनः मानसिकशुद्धयै सर्वोच्चज्ञानाय च सा योजना निहिता या विद्यार्थिनमुल्लसितवती तथा तस्य तपोमये त्यागपूर्णे च जीवने रसमानन्दं च सर्जितवती। शिष्याचार्यसम्बन्धोऽयं देवानां सान्निध्ये प्रतिष्ठापितः सन् गौरवान्वितोऽभूत्।

**आचार्यलक्षणम्**

उपनयनायात्मगुणसम्पन्नः सर्वविद्यावदातो महाभाग आचार्यः एव वरेण्योऽभवदिति यमवचनम्—

सत्यवाग् धृतिमान् दक्षः सर्वभूतदयापरः।
आस्तिको वेदनिरतः शुचिराचार्य उच्यते॥
वेदाध्ययनसम्पन्नो वृत्तिमान् विजितेन्द्रियः।

**यज्ञोपवीतम्—**

सूत्रनिर्मितस्य आधुनिकयज्ञोपवीतस्य वैदिककाले प्रचलनं नाभवत्। तदानीं यज्ञावसरे उत्तरीयं यज्ञोपवीतविधिना धृतम्। समग्रं जीवनं यज्ञ एवेति मत्वा सदैव यज्ञोपवीतोत्तरीयस्य परिधानं नियतम्। सूत्रयुगे सूत्रनिर्मितयज्ञोपवीतस्य प्रचलनं प्रारभ्यत। उत्तरीयं तु प्रायशः मृगचर्मणा निर्मितम्।[१] तस्य स्थाने सूत्रस्य यज्ञोपवीतस्य लोकप्रियता शनैः शनैः समवर्धत। अधुनाप्युपनयनविधौ प्रथमं मृगचर्मणो यज्ञोपवीतं ध्रियते, तत्प्रतीकमेव प्राचीनयुगस्योत्तरीयस्य।

**कन्यकानामुपनयनम्**

वैदिककाले विद्यार्थिनीनां कन्यकानामुपनयनमक्रियत। ईदृशीनां कन्यकानां संख्या तदानीमपि निःसंशयमेव नासीदधिका। परवर्तियुगे तासां संख्या स्वल्पतरा बभूव। उपनयनमप्याचारमात्रमभवत्। कन्यका-

१. आपस्तम्बे १.३.३—१०; मनुस्मृतौ २.४१

नामुपनयनं केवलं विवाहकाले धार्मिकविधानस्य पूर्तयेऽभवत्।[1] बाणस्तु कादम्बर्यां तपस्विन्या महाश्वेतायाः वर्णने तस्याः शरीरे ब्रह्मसूत्रस्योल्लेखं करोति।

उपनयनस्य पश्चाद् गुरुः शिष्यं शौचमाचारमग्निकार्यं सन्ध्योपासनं च प्रथममशिक्षयत। ततः परं वेदस्याध्यापनं चतुर्विंशतिवर्षपर्यन्तमभूत्। पंचविंशतितमे वर्षे समावर्तनसंस्कार आचार्येण सम्पादितः।

## समावर्त्तनम्

आचार्याश्रमेऽध्ययनं परिसमाप्य प्रायशो विद्यार्थिनः स्वगृहमागच्छन्। आश्रमाद् गृहागमनं समावर्तनम्। अस्मिन्नवसरे समावर्तनसंस्कारोऽक्रियत। समावर्तनसंस्कारे विद्यासम्पन्नस्य ब्रह्मचारिणो विधिवत्स्नानमभूत्। इदं परिलक्ष्य समावर्तनस्यापरनाम स्नानमेव। समावर्तनसम्बन्धि स्नानमिदं कृत्वैव स स्नातकोऽभवत्। पाणिनिस्तु स्नातकस्यापरपर्यायं स्रग्वीति निर्दिशति। इदं नाम तस्य मालाधारणमुद्दिश्य कृतम्। ब्रह्मचर्यकाले विद्यार्थी सर्वथा भोगविलासादिभ्यो विरक्तोऽभवत्। समावर्तने स शरीरस्य प्रसाधनं कृतवान्। स्नातकस्य वेशविन्यासः गृहस्थानामिवाभवत्।

वैदिकयुगादारभ्य प्रायः सदैव स्नातकः समाजस्य सर्वोच्चपुरुषोऽगण्यत। अथर्ववेदानुसारं—स स्नातो बभ्रुः पृथिव्यां बहु रोचते। समावर्तनकाले स्नातका आचार्यं प्रति कृतज्ञताभावं न्यवेदयन्। ते तमभिनन्दितवन्तः—"त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति।"[2] आचार्या अपि जीवनोपयोगिसनातनशिक्षामदुः—सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्।

१. स्मृतिचन्द्रिकायां पृ० २४; गोभिलगृह्यसूत्रे २.१.१६
२. प्रश्नोपनिषदि ६.८

 

देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि, तानि सेवितव्यानि, नो इतराणि। यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि, नो इतराणि।[१] बृहदारण्यकोपनिषदि 'द' अक्षरेण स्नातका उपदिष्टाः—दाम्यत दत्त दयध्वं च।[२]

स्नातकैः किं कर्तव्यमिति विषयमधिकृत्य कतिपयाचार्याः सन्देशं दत्तवन्तः। तद्यथा महाभारते आचार्यव्यासेन समादिष्टम्—

ब्राह्मणाय सदा देयं ब्रह्म शुश्रूषवे तथा।
भवन्तो बहुलाः सन्तु वेदो विस्तार्यतामयम्॥
नापरीक्षितचारित्रे विद्या देया कथंचन।
न नियोज्याश्च वः शिष्या अनियोगे महाभये॥
यथामति यथापाठं तथा विद्या फलिष्यति।
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु।
वेदास्याध्ययनं हीदं तच्च कार्यं महत्स्मृतम्॥

स्नातकास्तु—अन्योन्यं संविभाष्यैवं सुप्रीतमनसः पुनः।
विज्ञापयन्ति स्म गुरुं पुनर्वाक्यविशारदाः॥
शैलादस्मान्महीं गन्तुं कांक्षितं नो महामुने।
वेदाननेकधा कर्त्तुं यदि ते रुचितं प्रभो॥

व्यासः—शिष्याणां वचनं श्रुत्वा पराशरसुतः प्रभुः।
प्रत्युवाच ततो वाक्यं धर्मार्थसहितं हितम्॥
क्षितिं वा देवलोकं वा गम्यतां यदि रोचते।
अप्रमादश्च वः कार्यो ब्रह्म हि प्रचुरच्छलम्॥

स्नातकास्ते व्यासेनानुज्ञाताः तस्य प्रदक्षिणं कृत्वा, मूर्ध्नाभिवाद्य च जग्मुः।[३]

---

१. अग्रे द्रष्टव्या तैत्तिरीयोपनिषदि शिक्षावल्ली ११

२. बृ० उ० ५.२

३. महाभारते शान्तिपर्वणि ३२७—३२८ अध्यायौ।

कतिपयाश्चोपात्तविद्याः छात्राः आचार्याय दक्षिणादानमेव प्रथमं कार्यममन्यन्त । राजानः प्रायशः सादरं तेषामुद्देश्यपूर्तिमकुर्वन् ।[१] साधारणतस्तु दक्षिणा स्वल्पैवाभूत् । तद्यथा मनुः—

न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित् ।
स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः ।
धान्यं शाकं च वासांसि गुरवे प्रीतिमाहरन् ॥ २.२४५-२४६

स्नातकास्तु त्रिविधा अभवन्—विद्यया स्नातीत्येके । तथा व्रतेनाष्टचत्वारिंशत्परिमाणेन । विद्याव्रतेन चेत्येके । तेषु सर्वेषु स्नातकवृत्तिः । स्नातकस्याचारव्यवहारो जीवनविन्यासश्चोदात्तौ बभूवतुः । तद्यथा पारस्करानुसारं दन्तप्रक्षालनादीनि नित्यमपि । वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः ।

स्नातकानां जीवनविधानं मनुना निर्दिष्टम्—

क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः ।
स्वाध्याये चैव युक्तः स्यान्नित्यमात्महितेषु च ॥ ४.३५
उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।
उपवीतमलङ्कारं स्रजं करकमेव च ॥ ४.६६

स्नातकस्तु सर्वत्र मधुपर्केण सम्मानितोऽभवत् । प्रथममाचार्य एव तस्मै मधुपर्कसमर्पणमकरोत् । तस्य जीवनविन्यासः समाजायादर्शरूपेण प्रतिष्ठितः ।

समावर्तनस्य पश्चात् स्नातकस्य गृहस्थाश्रमे प्रतिष्ठायै गृहिण्या अपेक्षाऽभूत् ।[२] सा तु विवाहसंस्कारमाध्यमेन लभ्यासीत् ।

१. रघुवंशे कौत्सस्य रघोर्गुरुदक्षिणाप्राप्ते रम्या कथा वर्तते । पंचमसर्गो द्रष्टव्यः ।

२. भारतीयधारणानुसारम्—न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । सा तु अर्धाङ्गिनी । पत्नी भूत्वा सा यज्ञकर्मणि सहायाऽभूत् । तस्याः पुत्रं प्राप्य पुरुषः पूर्णोऽभवत् । पुत्रलाभेन पितॄणामृणाद् मुक्तिः सम्भाविता । 'आत्मा वै जायते पुत्रः' इत्यात्मजननायापि पत्न्या महती वर्तत आवश्यकता ।

## विवाहः

विवाहस्तु कुटुम्बाभिवृद्धये, प्राकृतिकसुखाय, धर्मसम्पादनाय चाभवत्। संस्कारस्यास्य यज्ञीयस्वरूपं प्रतिष्ठापितम्। तमधिकृत्य हर्षोल्लासमयलोकाचाराणां विकासोऽभवत्।

### वरवधूनां योग्यता

प्राचीनयुगे विवाहस्य बहुविधमहत्त्वं दृष्ट्वा स्पष्टमेव प्रतिभाति यत् तस्मिन्युगे वरवधूनां चयने स्वाभाविकी चिन्ताऽभवत्। योग्यवरेण वरेण्यायाः कन्याया जीवनं हर्षोल्लासमयं भवति, सुयोग्यपत्न्या च कुल-कुटुम्बयोः प्रतिष्ठा वर्धते। अन्यथा सर्वतो विनाश इति विदितं सर्वेषाम्। वरवधूनां योग्यतायाः परीक्षा बाह्याभ्यन्तरदृष्टिभ्यामक्रियत। बाह्यतस्तु सौन्दर्यं पुरुषत्वं नारीत्वमवस्था च दर्शनीयानि। आभ्यन्तरदृष्ट्या तयोर्विद्वत्ता चरित्रं कुलं च परीक्षणीयानि।

पुरा वैदिकयुगे विवाहावस्था गृहस्थाश्रमस्य योग्यतायामापन्नायामेव समीचीनाऽमन्यत। साऽवस्था क्रमशः वराय वध्वै च पंचविंशतिवर्षं षोडशवर्षं च मता।[1] स्मृतियुगे कन्यकानां विवाहावस्था स्वल्पीकृता। दशवर्षीया द्वादशवर्षीया वा कन्या परिणेयेति मतम्।[2] विष्णुपुराणानुसारं तु—'वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम्'। अपरं च—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥ मनु ९.९४

मारीचिस्तु पंचवर्षीयां कन्यां विवाहाय सर्वोत्तमाममन्यत।[3] कामसूत्रानुसारं तु वरकन्ययोरवस्थान्तरं त्रिवर्षमात्रमेव भवेदिति मतं समीचीनं प्रतिभाति।

---

१. सुश्रुतसंहितायाम् ३५.८

२. वसिष्ठस्मृतौ १५; महाभारतस्यानुशासनपर्वणि ३३ अध्यायतः। ब्रह्मपुराणे १.५; वैखानसे १.६; पराशरस्मृतौ ७.८—९

३. संवर्तस्मृतौ ६५-६६, पराशरमाधवीये १.२ मारीचिमतमुद्धृतम्।

बाह्यदृष्टितः शारीरिकसौन्दर्यमपेक्ष्यते। वैदिककालत एवास्मै प्रयोजनाय स्वयंवरविधिः प्रचलितः।[१] तस्मिन्युगे कन्यकानां सौन्दर्यनिरूपणाय शाश्वतमानदण्डाः सुप्रतिष्ठिता आसन्। तद्यथा—एवमेव हि योषां प्रशंसन्ति पृथुश्रोणिं विमृष्टान्तरां सा मध्ये संग्राह्या।[२]

सूत्रयुगे लक्षणसम्पन्नान् स्वस्थान् पुरुषांश्च वररूपेण चेतुं विधानमासीत्। मनुस्तु कन्यकायाः सौन्दर्यं बहु मन्यते। तद्यथा—कन्यारत्नं दुष्कुलादपि ग्रहणीयम्। कामसूत्रानुसारं तु रूपशीललक्षणसौन्दर्यस्वास्थ्यैः सम्पन्नस्य वरस्येदृशैर्गुणैः सम्पन्नायाः कन्याया विवाहो भवितुमर्हति।[३]

भरद्वाजस्तु समर्थयन्नेवाह—

यस्यां मनोऽनुरमते चक्षुश्च प्रतिपद्यते।
तां विद्यात्पुण्यलक्ष्मीकां किं ज्ञानेन करिष्यति॥ १.११

यदि कुपुरुषेण दुष्टकन्यया सह वा विवाहोऽभवत् तर्हि विवाहसम्बन्धः विच्छेदनीय एवेति केषांचिन्मतम्।[४] अनुलोमविवाह एव प्राचीनयुगे सम्मत आसीत्। अनया रीत्या ब्राह्मण-क्षत्रिय-वैश्य-वराणां क्रमशः चतुस्त्रिद्विवर्णोत्पन्नाभिः कन्याभिर्विवाहो भवितुमर्हति। सगोत्रसपिण्डसप्रवरविवाहानां निषेधोऽभवत्।

**विवाहभेदाः**

पुरा विवाहस्याष्ट भेदा आसन्—ब्राह्मः, दैवः, आर्षः, प्राजापत्यः, आसुरः, गान्धर्वः, राक्षसः, पैशाचश्च। अस्मिन् प्रकरणे विवाहशब्दस्यार्थो विशिष्टः। यादृशेन विधिना कन्या गार्हस्थ्यधर्मसम्पादनाय प्राप्ता स विधिरेव विवाह इत्यत्राभिप्रेतम्। अस्मिन्प्रकरणे विवाहः संस्कारद्योतको नैव। उपर्युक्तविधिभिः कन्यां संस्काराय सम्प्राप्य होमविधिः परिणयश्च विहितौ। देवलेनेदमधिकृत्य निर्दिष्टम्—

१. ऋग्वेदे १०.२७.१२; १.११५.२। अथर्ववेदे २.३०; ३.२५
२. शतपथे १.२.५.१६
३. कामसूत्रे ३.१.२
४. वराहगृह्यसूत्रे १०.१, ६

प्राप्तेषूर्ध्वं विवाहेषु विधिर्वैवाहिकः स्मृतः ।
कर्तव्यश्च त्रिभिर्वर्णैः समयेनाऽग्निसाक्षिकः ।।

पुरा भारते बहुविधेषु सांस्कृतिकस्तरेषु विविधवर्गाणां जनाः बभूवुः। तद्यथा—ब्रह्मपरायणाः वेदवादिनो वा ब्राह्मणाः, देवपरायणा यज्ञवादिनो वा ब्राह्मणाः, मन्त्रद्रष्टारः ऋषयः, प्राजापत्यपरायणाः मानवाः,[१] समृद्धिशालिन आर्येतरा असुराः, भोगकलाविलासपरायणा गंधर्वाः, बलशालिनो युद्धपरायणा राक्षसाः, छलपरायणाः पिशाचाश्च ।[२] स्ववर्गस्य वैशिष्ट्येन विवाहार्थं कन्याग्रहणं तेषु तेषु वर्गेषु प्रचलितम् । ब्राह्मणा ऋषयो मानवाश्चार्यवर्गीया बभूवुः । आर्यवर्गीया द्विजा ब्रह्मचर्यव्रतेन स्नातका भूत्वा शान्तोदात्तोपायैर्विवाहार्थं कन्यां प्राप्नुवन् ।

ब्राह्मविवाहे वेदविदे ब्राह्मणायालङ्कृता कन्या प्रदत्ता । बौधायनानुसारम् 'श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने कन्या देया स ब्राह्मः' । अस्मिन्विवाहे वरस्य वेदवित्त्वं महत्त्वपूर्णमासीत् । दैवविवाहे यज्ञस्य ऋत्विजे दत्ता कन्या दक्षिणारूपैव । ब्राह्मदैवविवाहौ ब्राह्मणस्यैव, नेतरेषाम् । ब्राह्मणानामृषिवर्गे वरात् गोमिथुनस्य ग्रहणं कृत्वैव तस्मै कन्याप्रदानस्य प्रचलनमभवत् । तस्मिन्युगे गोमिथुनस्य मूल्यमद्यतनैकरूप्यकादपि न्यूनमभवत् । तस्यां परिस्थितौ गोमिथुनस्य ग्रहणं शुल्करूपं नासीत्; अपितु साम्प्रदायिकरीतिरेवासीत् । आर्षविवाहोऽपि ब्राह्मणवर्ग एव प्रचलित आसीत् ।[३] सामान्यतो ब्राह्मणा एव ऋषयो दृश्यन्ते ।

---

१. तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् । प्रश्नोपनिषद् १.१५

२. एष्वष्टवर्गेषु चत्वार आद्या आर्या बभूवुः । अपर आर्येतरा आसन् । आर्या द्विजाः—ब्राह्मणाः क्षत्रिया वैश्याश्च प्रायशो बभूवुः । असुरराक्षसाः प्रायः सर्वे क्षत्रिया वैश्या वा बभूवुः, केचिदेव ब्राह्मणा बभूवुः । गन्धर्वा अपि केचित् क्षत्रियाः प्रायः वैश्याः शूद्रा वा बभूवुः । सर्वे पिशाचास्तु शूद्रतां प्रतिपन्नाः ।

३. वैदिकर्षीणां गोधनस्यातिशयता सुविदितैव ।

प्राजापत्यविवाहः आर्यवर्गे प्रायः सर्वाधिकलोकप्रिय आसीत्। स्नातका अस्नातकाः सर्वेऽपि गार्हस्थ्यधर्मनिर्वहणाय समयबन्धनं कृत्वा प्राजापत्य-रीत्या परिणीताः। आसुरविवाहस्तु प्रथममसुरवर्गेषु पश्चात् क्षत्रियवैश्य-वर्गेषु प्रतिष्ठितः। विवाहेऽस्मिन् कन्यायाः सौन्दर्यातिशयं प्रतिष्ठापयन्नेव वरस्तस्या ज्ञातिभ्यो धनमदात्। गान्धर्वविवाहस्य प्रचलनं प्रथमं गन्धर्व-वर्गेषु पश्चात् वैश्यशूद्रवर्गेषु च प्रतिष्ठितम्। गान्धर्वे तु वरकन्ययोः परस्परा-कर्षणमात्रेण समागमप्रवृत्तिरुद्भूता। परस्पराकर्षणं तु सौन्दर्यं नृत्य-संगीताभिनयकौशलं च दृष्ट्वैव सम्भूतम्। वरकन्ययोः परस्परमिलनं गन्धर्वेषु सुप्रचलितमासीत्। राक्षसविवाहः प्रथमं राक्षसवर्गेषु पश्चात् क्षत्रियेषु प्रचलितः। अस्मिन्विवाहे बलप्रयोगेण कन्याप्राप्तिर्भूता। राक्षसाः क्षत्रिया वा बलशालिनः बभूवुः। बलशालिनां कन्याहरणं प्रतिष्ठात्मक-मेवाभवत्। तेषां विवाहस्यापरं नाम क्षात्र एव। पैशाचविवाहः प्रथमं पिशाचेषु पश्चात् शूद्रेषु प्रचलितोऽभवत्। मन्वनुसारम्—

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः॥ ३.३४

उपर्युक्तविवाहास्तु प्रवृत्तिद्योतका एव। सर्वेषु वर्गेषूच्चाधमप्रवृत्तयो जना दृश्यन्ते। तेषां न केवलं विवाहोऽपितु सर्व एव जीवनविन्यास आत्मप्रवृ-त्त्यनुरूपो भवति। एभिर्विवाहोपायैः कन्यायाः वरणमभूत्, पश्चात् संस्कार-विधिरक्रियत।

**विवाहसंस्कारविधिः**

वैदिककाले विवाहसंस्कारस्य विधिः सरलोऽभूत्। स्नातकः इष्टमित्रैः सम्बन्धिभिश्च सह कन्याया गृहमागच्छत्, तत्र सर्वेषां च तेषां सत्कारः सुस्वादुभोजनादिभिः कृतः।[१] कन्यायाः पाणिग्रहणकाले वरोऽगायत्—

१. ऋग्वेदे १०.८५; १०.१७.१; ४.५८.६। अथर्ववेदे ६.६०; १४.२.५९

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः।
भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः॥

ऋग्वेदे १०.८५.३६

पिता देवानां विशेषतश्चाग्नेः समक्षं कन्यादानमकरोत्। नववध्वै उपस्थितजना आशीर्वचनं ददुः—

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम्।
क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे॥
इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु।
दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि॥
सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु॥

ऋग्वेदे १०.८५.४२, ४५, ४६

परवर्तियुगे आर्यवर्गस्य विवाहविधौ आर्येतरवर्गाणां विवाहविधीनामपि समन्वयोऽक्रियत। अस्यां दशायां भारतस्य विविधभागेषु स्थानीयविधीनां समवायात् विभिन्नरूपाः संस्कारविधयः समजायन्त। इदमेव परिलक्ष्या-श्वलायनो निर्दिष्टवान्—अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च। तान् विवाहे प्रतीयात्। यत्तु समानं तद्वक्ष्यामः—

पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखो वरः प्राङ्मुख्याः कन्याया आसीनायाः गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात् यदि कामयीत पुमांस एव मे पुत्राः जायेरन्निति। अङ्गुलीरेव स्त्रीकामः। रोमान्ते हस्तं साङ्गुष्ठमुभयकामः।

प्रदक्षिणमग्निमुदकुम्भं च त्रिः परिणयञ्जपति—'अमोहमस्मि सा त्वं सा त्वमस्यमोहं द्यौरहं पृथिवी त्वं सामाहमृक् त्वं ताविह विवहावहै। प्रजां प्रजनयावहै सप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतमिति।

वरः परिणीय परिणीयाश्मानमारोहयति—इममश्मानमारोहाश्मेव त्वं स्थिरा भव। सहस्व पृतनायतोऽभितिष्ठ पृतन्यत इति।

वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति। त्रिर्जामदग्न्यानाम्। प्रत्यभिघार्य हविरावपति। अवत्तं च प्रतिघार्यावपति। एषोऽवदानधर्मः। पश्चात् वरो हवनं कुर्वन् प्रार्थयत—

'अर्यमणं नु देवं कन्या अग्निमयक्षत। स इमां देवोऽर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा।

वरुणं नु देवं कन्या अग्निमयक्षत। स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा।

पूषणं नु देवं कन्या अग्निमयक्षत। स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहा।' इति

अविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् कन्या। अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थं (हवनम्)।

ओप्योप्य ह एके लाजान्परिणयन्ति। तथोत्तमे आहुती न सन्निपततः। अथास्यै शिखे विमुञ्चति यदि कृते भवतः।

ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः। 'प्र त्वा मुञ्चामि वरुणस्य पाशात्' इति। उत्तरामुत्तरया।

अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयति—इषे एकपदी। ऊर्जे द्विपदी। रायस्पोषाय त्रिपदी। मायोभव्याय चतुष्पदी। प्रजाभ्यः पंचपदी। ऋतुभ्यः षट्पदी। सखा सप्तपदी भव। सा मामनुव्रता भव। पुत्रान्विन्दावहै बहून्। ते सन्तु जरदष्टय इति।

आचार्य उभयोः सन्निधाय शिरसी उदकुम्भेनावसिंचति।

ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं वसेत्। ध्रुवमरुन्धतीं सप्तर्षीनिति दृष्ट्वा वाचं विसृजेत्—जीवपत्नी प्रजां विन्देयेति।

प्रयाण उपपद्यमाने—पूषा त्वेतो नयतु हस्तगृह्येति। यानमारोहयेत्।

अश्मन्वतीरीयते संभरध्वमित्यर्धर्चेन नावमारोहयेत्।

उत्तरेणोत्क्रमयेत्।

जीवं रुदन्तीति रुदत्याम्।

विवाहाग्निमग्रतोऽजस्रं नयन्ति।

कल्याणेषु देशवृक्षचतुष्पथेषु 'माविन्दन्परिपन्थिनः' इति जपेत्।

'वासे वासे सुमङ्गलीरियं वधूः ईक्षकानीक्षेत।

'इह प्रियं प्रजया मे समृध्यताम्' इति गृहं प्रवेशयेत्।

विवाहाग्निमुपसमाधाय पश्चादस्य आनुडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम्—आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा 'समञ्जन्तु विश्वेदेवाः' इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये।

**स्वयंवरः**

महाभारतादारभ्य भारतीयसाहित्ये स्वयंवरस्य विशदवर्णनं प्राप्यते।[१] स्वयंवरेषु निमन्त्रितानां वराणां कस्यचिदेकस्य रूपसौन्दर्येण, गुणातिशयेन पराक्रमौदात्त्येन वा जिता सती कन्या स्वयमेव जयमालया वरमलङ्कुर्वाणा तस्यैवाभूत्। चित्रमाध्यमेनापि पुरा स्वयंवरोऽभवत्। काश्चित् कन्यकाः स्वयोग्यवरान्वेषणाय सुरक्षिताः सत्यः परिभ्रमन्ति स्म। केषुचित् स्वयंवरेषु बुद्धिपरीक्षापि नियोजिता। कालिदासस्य विवाहकथा तादृशी वर्तते। पुरा कतिपयकन्यकाः स्वयंवरेभ्योऽपहृताः। ईदृशेषु स्वयंवरेषु युद्धावसरः स्वाभाविक एव। अस्मात्कारणादेव स्वयंवरस्य प्रचलनं विलुप्तमेव।

रामायणानुसारं रामस्य विवाहः स्वयंवरविधिनाऽभवत्। रामः शिवस्य धनुषो भङ्गं कृत्वैव सीतां प्राप्तवान्। सीतास्वयंवरमधिकृत्य जनकस्य प्रतिज्ञासीत्—

यद्यस्य धनुषो रामः कुर्यादारोपणं मुने।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम्॥ बाल० ६६.२६

विवाहोत्सवसमागमाय दशरथः धनाध्यक्षैः चतुरङ्गबलैः, वसिष्ठादिभिर्द्विजैः सङ्गतो विदेहानभ्युपेयिवान्। तस्मिन् युगे यज्ञस्यान्ते विवाहसंस्कारः

---

१. प्रथममृग्वेदानुसारं सूर्यायाः स्वयंवरो दृश्यते। स्वयंवरेऽस्मिन् सर्वे देवाः समागताः। तेषामाजौ विजयस्तत्रासीदश्विद्वयस्य।

श्रेष्ठो मतः। वरवधूपक्षयोः कुलेतिहासमधिकृत्य प्रवचनमभवत्। तस्य पश्चात् जनकः प्रतिश्रुतवान्—

सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च।
वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम्॥ बाल० ७१.२१

प्रतिश्रवानन्तरं पितृकार्यमक्रियत, पश्चाच्च वरस्यार्थे सुखोदयं गोदानादिकं कार्यं सम्पादितम्।

विवाहार्थं प्रपामध्ये वेदिः निर्मिता, समन्ततः गन्धपुष्पैरलंकृता च। तत्र सुवर्णपालिकानां साङ्कुराणां छिद्रकुम्भानामाङ्कुराढ्यानां शरावाणां सधूपकानां धूमपात्राणां शंखपात्राणां स्रुवाणां स्रुचां अर्घ्यपूरित-पात्राणां लाजपूर्णानां पात्रीणां संस्कृतानामक्षतानां च शोभा दर्शनीया बभूव। वेदिर्दर्भैरास्तृता। वेद्यां मन्त्रपुरस्कृतमग्निमाधाय वसिष्ठमुनिर्जुहाव। ततः सर्वाभरणभूषिता सीताऽऽनीता। तामग्नेः समक्षं संस्थाप्य रामाभिमुखे जनकोऽब्रवीत्—

इयं सीता मम सुता सहधर्मचरी तव।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना॥
पतिव्रता महाभागा छायेवानुगता सदा। बाल ७३.२७,२८

इत्युक्त्वा जनको मन्त्रपूतं जलं प्राक्षिपत्। ततोऽग्निप्रदक्षिणा कृता। अस्मिन्नवसरेऽप्सरसां नृत्यं गन्धर्वाणां गायनं चाभूताम्।

कुमारसंभवे पार्वतीपरिणयः स्वयंवरविधिना घटितो वर्तते। पार्वती-तपसा प्रीणितः शिवो निवेदितवान्—'अद्यप्रभृत्यवनताङ्गि तवास्मि दासः, क्रीतस्तपोभिः' इति। ततः सप्तर्षयः पार्वतीपितुः समीपं शिवार्थं कन्या-याचनाय गतवन्तः। कालिदासानुसारं विवाहसम्बन्धस्थापने स्वेच्छा-चारस्तु न श्लाघ्यः, अपितु—'विक्रियायै न कल्पन्ते सम्बन्धाः सदनु-ष्ठिताः'। प्रतिनिधिमण्डलमिदं कन्यापित्रे शिवेच्छां प्रोक्तवत्। पिता कन्यामातुः समर्थनमैच्छत्। यतः—'प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः।' तस्याः समर्थने जाते पिता कन्यां प्रत्यवदत्—

एहि विश्वात्मने वत्से भिक्षासि परिकल्पिता ।
अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥

ऋषयस्तु सर्वेषां समर्थनं प्राप्य शिवसमीपं गतवन्तः । अनेन प्रकरणेन प्राचीनयुगे विवाहसम्बन्धस्थापनस्य शालीना रीतिः स्पष्टा ।

कालिदासानुसारं विवाहोत्सवे कन्याया नगरस्य ग्रामस्य वा सर्वे कुटुम्बिनः सर्वत्रालङ्करणं कृतवन्तः । सामाजिकोऽयमुत्सवोऽभूत् । कालिदासानुसारं तु पार्वती विवाहप्रारम्भे—

अंकाद्ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम ॥

तस्मिन्नवसरे पार्वत्याः शरीरे बन्धुस्त्रियः मनोरमतमं मंगलप्रसाधनं चक्रुः । पार्वत्या माता हरितालेनार्द्रेण मनःशिलया च तस्याः तिलकं कृतवती । पश्चात् पार्वती कुलदेवताभ्यः प्रणता बभूव सतीनां च पादग्रहणं चकार । सर्वासां माङ्गलिकमाशीर्वादं प्राप्तवती पार्वती विवाहक्रियायै प्रस्तुता कृता ।

शिवस्य पाणिग्रहणानुरूपं प्रसाधनं मातृभिः सम्पादितम् । तेन सह सुशोभना वरयात्रा समारब्धा । सप्तर्षयः पौरोहित्ये नियुक्ताः । वरयात्रायाः प्रत्युद्गमनाय हिमालयबान्धवा गताः । श्वशुरः स्वयमेव शिवं स्वमन्दिरे प्रवेशयामास । शिवस्तु रत्नमर्घ्यं मधुमद्गव्यं नवे दूकूले च श्वशुरेणोपनीतानि प्रत्यग्रहीत् । पश्चात् शिवः पार्वतीसमीपं नीतः । गुरुणा दत्तं तस्याः करं शिवः जग्राह । ततोऽग्निप्रदक्षिणाः कृताः । अग्नौ लाजमोक्षं पुरोधाः कारयामास । पार्वती लाजधूमगन्धं स्ववदनं निनाय । पुरोधास्तु पार्वतीं भर्त्रा सह धर्मचर्यां कर्त्तुमादिदेश । शिवः पार्वतीं ध्रुवदर्शनाय प्रयोजितवान् । पार्वती तं दृष्ट्वा प्रोक्तवती—ध्रुवः दृष्टः । विवाहक्रियायामित्थं समाप्तायां गुरूणामाशीर्वादः वरवधूभ्यां प्रायुज्यत । पश्चात् जनाः तयोरुपर्यार्द्राक्षतारोपणं कृतवन्तः । तयोर्मनोरंजनाय नाट्याभिनयोऽप्सरोभिः प्रस्तुतः ।

विवाहानन्तरं पुनः गर्भाधानादिसंस्काराणां समारम्भो भवति ।

# आश्रम-व्यवस्था

मानव-जीवनं पुरा शतवार्षिकममन्यत। न तु पशुवदस्मिन् दीर्घजीवने तस्य केवलं जीवनोपाया एव संचेतव्या वर्तन्ते, अपितु स ज्ञानेन दर्शनेन रसवृत्त्या धर्मभावेन चाधिकतरमानन्दस्य प्राप्तये यत्नं करोति। अनेनोद्देश्येन स कदापि तपोमयं जीवनमधिकृत्याध्ययनं करोति, परिश्रमातिरेकं स्वीकृत्य धनमर्जति वा। कतिपयजनास्तु मुनिधर्ममनुसृत्य सर्वं गृहोचितं परित्यज्य ऋषिचर्याय वने वसन्ति। पशवस्तु प्रायशोऽनतिश्रमेण जीवनधारणायापेक्षितानि वस्तूनि स्वभावतः लभन्ते। मानवस्वभावस्तु विपरीत एव। स सततश्रमेणैवात्मनः सर्वोच्चसुखमभ्युदयं च साधयति। श्रमः तस्य चतुर्भिदः—अध्ययनात्मकः, सर्जनात्मकः, तपस्यात्मकः, योगात्मकश्च। इमाः श्रमप्रवृत्तीरधिकृत्य तस्य जीवनस्य चतुर्भागाः पंचविंशतिवर्षावधयः कृताः। इमे भागा एवाश्रमाः। आ समन्तात् श्रमोऽत्रेत्याश्रमशब्दस्य व्याख्या।[1] आश्रममाध्यमेन जीवनपर्यन्तमधिकाधिकः श्रमः क्रियते। अध्ययनात्मको ब्रह्मचर्याश्रमः। सर्जनात्मको गृहस्थाश्रमः। तपस्यात्मको वानप्रस्थः। योगात्मकस्तु संन्यास एव।[2]

## ब्रह्मचर्याश्रमः

जीवनस्य प्रथमे भागे प्राप्तस्य ज्ञानालोकस्य प्रकाशे जीवनयात्रा सानन्दा विधीयते। मानवजीवनस्य साफल्यस्य मात्रा तस्यार्जितज्ञानस्य मात्रयैव परिमिता। इदमेव ज्ञानस्य शाश्वतं सार्वत्रिकं च फलम्। इदमुद्दिश्य

---

१. आश्राम्यन्त्यत्र अनेन वा इत्यपरा व्याख्या।

२. महाभारतस्य शान्तिपर्वणि २४२. १५ प्रोक्तम्—
चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता।
एतामारुह्य निःश्रेणीं ब्रह्मलोके महीयते॥

सदैव सर्वत्र च मानवसमाजे बाल्यं शिक्षणाय कल्पितम्। भारते तु ज्ञानस्य प्रतिष्ठाया अनुकूलानि ज्ञानप्राप्तेरुद्देश्यान्यपराण्यपि वर्तन्ते।

**ज्ञानस्य प्रतिष्ठा**

भारतीयकल्पनानुसारं ज्ञानाधीनं हि देवत्वम्। वेदाचार्यास्तु मनुष्येषु देवा एव[१]। अपरं च—प्रिये स्वाध्यायप्रवचने भवतः। युक्तमना भवति, अपराधीनोऽहरहरर्थान् साधयते, सुखं स्वपिति, परमचिकित्सक आत्मनो भवति, इन्द्रियसंयमश्च एकारामता च प्रज्ञावृद्धिः यशो लोकपक्तिः, प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति, ब्राह्मण्यं प्रतिरूपचर्यां यशो लोकपक्तिम्, लोकः पच्यमानश्चतुर्भिः धर्मैर्ब्राह्मणं भुनक्ति—अर्चया च दानेन चाज्येयतया चावध्यतया च।[२]

उपनिषत्सु ब्रह्मज्ञानेन ब्रह्मत्वप्राप्तिः सम्भाविता।[३] त्रयो धर्मस्कन्धाः—यज्ञोऽध्ययनं दानमिति प्रतिष्ठिताः।[४] ब्रह्मचर्यरहितास्तु ब्रह्मबन्धव इति धिक्कृताः।[५] अविद्वांसो नरके पतन्तीति भयकारणमेवाज्ञानं मतम्। विद्यया देवलोको जय्यः। देवलोको वै लोकानां श्रेष्ठः। तस्माद्विद्यां प्रशंसन्ति।[६]

मनुः वेदाध्ययनेनैव ब्राह्मणत्वं प्रतिपादयति।[७] तथा हि—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ २.१६८

वेदाध्ययनं समर्थयन् मनुः प्राह—

---

१. शतपथब्राह्मणे २.२.२.६
२. शतपथे ११.५.७.१
३. मुण्डके ३.२.६
४. छान्दोग्ये १.२३.१
५. छान्दोग्ये ६.१.१
६. बृहदारण्यके ४.४.११; १.५.१६
७. मनुस्मृतौ २.१३५, १३६, १५५, १५८

बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम्।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम्॥ १२.९९

अपरं च—यावतो ग्रसते ग्रासान्हव्यकव्येष्वमन्त्रवित्।
तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुडान्॥ ३.१३३

स्नातकस्तु मनुना समाजस्य सर्वोच्चपुरुषो मतः।[1] ब्रह्मगतिरपि जीवन-कालें ब्रह्मतत्त्वज्ञस्य सुनिश्चितैव यथा—

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥ १२.१०२

पौराणिकयुगे वेदाध्ययनस्य महत्त्वं पूर्ववत् वर्तते। विष्णुपुराणा-नुसारं तु वेदाः मानवतायाः परिधानमेव। वेदविहीनो मानवो नग्नः पातकी च भवति।[2] राजानः सदैव विदुषामर्चनेनात्मानं बहु मन्यन्ते स्म।

पुरा तु विदुषां समक्षं धनस्य लौकिकप्रतिष्ठायाश्च महत्त्वं तृणवदासीत्। दिग्विजयिनो राजानोऽपि यदा विदुषां चरणरजसात्मानं पावयन्ति स्म तदा लोकवैभवस्य काऽपेक्षासीद्विद्वद्भ्यः।

**अध्ययनावधिः**

वैदिकयुगे द्वादशवर्षाद्वेदाध्ययनं प्रारब्धम्। प्रायशः चतुर्विंशतिवर्षपर्यन्तं वेदाध्ययनं कृतम्। कतिपयब्रह्मचारिणस्तु समस्तजीवनमेवाध्ययनाया-मन्यन्त। भरद्वाजस्तु त्रिभिरायुर्भिः ब्रह्मचर्यमुवास। तं ह इन्द्र उपव्रज्यो-वाच—यत्ते चतुर्थमायुर्दद्यां किमेतेन कुर्या इति। ब्रह्मचर्यमेवैतेन चरेयमिति होवाच।[3] वैदिकयुगे प्रत्येकस्य वेदस्याध्ययनाय द्वादशवर्षावधिर्निश्चितः। अतः द्वादश, चतुर्विंशतिः, षट्त्रिंशत्, अष्टचत्वारिंशत् वर्षा वेदाध्ययनाय नियताः।[4] मनुस्तु त्रयाणां वेदानामध्ययनाय षट्त्रिंशद्वर्षावधिं निश्चित्य विकल्पान् प्रस्तुतवान्—

1. मनुस्मृतौ २.१३९
2. विष्णुपुराणे ३.१७.५—८।
3. तैत्तिरीयब्राह्मणे ३. १०. ११।
4. गोपथब्राह्मणे २. ५।

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ।
तदधिकं पादिकं वा ग्रहणान्तिकमेव वा ।। ३.१

समीपस्थाचार्येभ्योऽधीत्य षोडशे वर्षे विद्यार्थिनः दूरस्थाचार्यसमीपमध्ययनार्थं गतवन्तः। तक्षशिलाया विश्वविद्यालये तादृशा विद्यार्थिनः प्रविष्टाः ।[१]

ब्रह्मचर्यव्रतायोपनिषद्युगे गृहस्था अपि स्वीकृताः। यदा कदा पिता स्वपुत्रेण सह कस्यचिदाचार्यस्य शिष्यो भूत्वा ब्रह्मचर्यमुवास।[२]

**विद्याधिकारिणः**

पुरा योग्यविद्यार्थिनां प्राप्तये गुरवः सदैव प्रयत्नशीला बभूवुः। प्रतिभाशालिन्या शिष्यपरम्परया आचार्यः परिश्रमेणार्जितं स्वज्ञाननिधिमक्षुण्णं कर्त्तुमियेष। कालिदासानुसारं तु—विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति।

वैदिककाले विद्याप्राप्तिसमर्थां प्रतिभां दृष्ट्वैवाचार्यः विद्यार्थिनः स्वीकरोति स्म। निष्प्रतिभास्तु गुरुगृहं परित्यज्य कृषौ वस्त्रनिर्माणे वा नियोजिताः।[३] विद्यार्थिनो मनोवृत्तिं परीक्ष्यैव व्यवसायनियोजनमक्रियत।[४]

सनातनरूपेण प्रतिष्ठितोऽयं सिद्धान्तो विद्यादानमधिकृत्य मनुनोद्धृतः[५]—

विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत्।।
विद्या ब्राह्मणमभ्येत्याह शेवधिष्टेऽस्मि रक्ष माम्।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा।।

---

१. असातमन्तजातके ६१।
२. बृहदारण्यके ६. २. ४; छान्दोग्ये ५. ११।
३. ऋग्वेदे १०. ७१. ६।
४. ऋग्वेदे ६. ११२. १।
५. निरुक्ते २. ४; वसिष्ठधर्मसूत्रे २. ८. ६।

यमेव तु शुचिं विद्यान्नियतब्रह्मचारिणम् ।

तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ २.११३-११५

याज्ञवल्क्येनाध्याप्यानामाकलनमित्थं कृतम्—

कृतज्ञाद्रोहमेधाविशुचिकल्याणसूचकाः ।

अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥ १.२८

विष्णुस्तु परीक्षितमेवाध्यापयितुमादिदेश ।[१] किंच अयोग्यविद्यार्थिनां परित्यागाय हारीतेन समादिष्टम्—

यो वै धीरः शुश्रूषुरध्यायवृत्तो यस्मिन् शोचेन्न व्यथेन्नापि धर्मः ।

तस्मै ज्ञानं श्रद्धया संधेयं नान्तर्दुष्टे कत्थने दुःखशीले ॥

उपनिषत्सु विद्यार्थिनां स्वीकरणात्प्राक् तेषां परीक्षणस्य वृत्तानि लभ्यन्ते । प्रथमं तावद् गुरुभिः सह संलापात् प्रागेव तपसो वार्ता दृश्यते ।[२] पिप्पलादस्तु कौसल्यस्य ब्रह्मिष्ठत्वं दृष्ट्वैव तं प्राणविद्याया दानाय स्वीचकार ।[३] कठोपनिषदि नचिकेतसः परीक्षाया वर्णनं वर्तते ।

**शूद्राणां विद्याधिकारः—**

वैदिकयुगे शूद्रा अपि वेदाध्ययनाय स्वीकृताः । बहवस्तत्रार्येतरा विद्वांसो वेदमन्त्राणां रचयितारो बभूवुः । परवर्तियुगे वेदाध्ययनं ब्राह्मणक्षत्रियवैश्येभ्यो नियतम् । तथापि बहवस्तत्रासन् महाग्रन्थाः शूद्राणामार्येतराणां चाध्ययनाय । महाभारतं पुराणानि दर्शनग्रन्थाश्च सर्वेभ्यो वर्णेभ्यो रचितानि । आश्वलायनगृह्यसूत्रे शूद्राणां समावर्तनविधिरुल्लिखितः ।[४] जातकेषु बहूनां शूद्रचाण्डालानां दार्शनिकज्ञानस्यौत्कृष्ट्यं निदर्शितम् ।[५] महाभारते विद्याक्षेत्रे आदिकालीना चातुर्वर्ण्यप्रवृत्तिर्निर्दिष्टा—

१. विष्णुधर्मसूत्रे २६.३.४
२. छान्दोग्ये ८.७.३
३. छान्दोग्ये ४.४
४. आ० गृ० ३.८
५. सेतकेतुजातके ३७७; सुत्तनिपाते चाण्डालाचार्यस्य मातङ्गस्य कथा प्राप्यते । ब्राह्मणा अपि तस्य विद्यार्थिनो बभूवुः ।

इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभादज्ञानतां गताः ।।
शान्तिपर्वणि १८८.१५

बौद्धसंस्कृतौ शूद्रा अपि संघे प्रविष्टाः सन्तः ज्ञानिनो बभूवुः । जैनसंस्कृतौ चाण्डालानामपि विद्याधिकारः समीहितः ।

**स्त्रीणां विद्याधिकारः**

सुकुमारीणां नारीणामध्ययनायापेक्षितं तपोमयजीवनं सामान्यतो भवितुं नार्हति । वेदाध्ययनाय स्वल्पा एव नार्यो वैदिककाले समागताः । किन्तु वेदाध्ययने तस्मिन् युगे ताभ्यः प्रतिबन्धो नावर्तत । तस्यां परिस्थितौ लोपामुद्रा, विश्ववारा, आत्रेयी, अपाला, काक्षीवती घोषा ऋषिका बभूवुः । ताभिः कृतानि सूक्तानि संहितासु संगृहीतान्यधुनाऽपि प्राप्यन्ते । अथर्ववेदानुसारं तु—ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ।[१] उपनिषत्सु मैत्रेयी गार्गी वाचक्नवी च प्रातःस्मरणीया विदुष्यो बभूवुः । तस्मिन्काले विदुषीः कन्यकाः पुत्रीरूपेण प्राप्तुं गर्भाधाने विशेषायोजनानि कृतानि ।[२]

कालान्तरे स्त्रिय आचार्या उपाध्यायाश्च बभूवुः ।[३] स्त्रीछात्रास्तु 'अध्येत्री माणविका चेति' विख्याताः । छात्रा वेदाध्ययनमपि कृतवत्यः । ऋग्वेदस्य बह्वृचः शाखायाः विद्यार्थिन्यः बह्वृच्यः सम्बोधिताः । कतिपयस्त्रियोऽस्त्रशस्त्रविद्यासु शिक्षिता अभवन् । तासां सर्वासां समावर्तनविधिः आश्वलायनगृह्यसूत्रे निर्दिष्टः ।[४]

महाभारतानुसारं स्त्रियो ललितकलासु शिक्षिताः । राजकुलदास्यश्चतुष्षष्टिविद्याविशारदाः, नृत्यादिकुशलाश्च बभूवुः । राजकुमारीणां शिक्षणस्योल्लेखाः सुविदिता एव ।

परवर्तिभारतीयसाहित्ये स्त्रीणां रचनाऽभावो नास्ति । गाथासप्तशत्यां कवयित्रीभी रचिताः पंचाशत्प्राया गाथाः प्राप्यन्ते । राजशेखरस्तु स्त्रीशिक्षा-

१. अथर्व० ६. ५. १८
२. बृहदारण्यके ६. ४. १७
३. पाणिनिसूत्रं ४. १. ५६; ३. ३. २१ अधिकृत्य काशिका

४. आश्वलायन० ३. ८. ११

प्रवृत्तिं निदर्शयन्नाह—पुरुषवद्योषितोऽपि कवयित्र्यो भवेयुः। संस्कारो ह्यात्मनि समवैति। न स्त्रैणं पौरुषं वा विभागमपेक्षते। श्रूयन्ते दृश्यन्ते च महामात्यदुहितरो गणिकाः कौतुकिभार्याश्च शास्त्रप्रहतबुद्धयः कवयः।[१] शङ्करमण्डनमिश्रयोः विवादे मिश्रस्य पत्नी निर्णायिका नियुक्तेति प्रथितमेव।

भारतीयधारणानुसारं सरस्वती पार्वती च विद्यायाः देव्यौ। अस्यां परिस्थितौ स्त्रीणामध्ययनाधिकारे बाधा भवितुं नार्हति।

## विद्यालयाः

विद्यालयस्तु भारते शाश्वतरूपेणाचार्याणां गृहमेवाभवत्। तस्मिन्नाचार्यगृहे विद्यार्थिनः आचार्यपुत्रैः सह निवसन्तः पठन्ति स्म। ब्रह्मयज्ञो सर्वेषां विदुषां ब्राह्मणानामध्यापनमेव कर्तव्यं मनुना निर्णीतम्।[२] ईदृशानां महर्षीणामाचार्याणां च गृहाणि प्रायः वनेषु ग्रामेषु वा स्थितानि। तेषामवस्थानं नगरेषु नासीदिति निश्चितमेव। ईदृशीषु स्थलीषु वनपर्वतोपनदप्रदेशेषु च ग्रीष्मर्तोः सन्तापो नासीत्। आचार्यकुलस्य गवार्थं शस्यं प्रचुरमविद्यत, हवनाय समिधः समजायन्त, विद्यार्थिनां स्नानाय सरोवरा नद्यो वाऽऽसन्। उपनिषत्सु ब्रह्मचर्यमरण्यवासस्य पर्यायो मतः। अरण्येषु वसतामृषीणां समीपमध्ययनाय विद्यार्थिनः समुपागताः।[३]

महाभारते कण्वव्यासवसिष्ठभरद्वाजपरशुरामादीनामाश्रमाणां वर्णनं लभ्यते। कण्वाश्रमस्तु मालिन्याः नद्याः समीपमवस्थितः। तस्य वर्णनसौरभ्यं व्यासवचनेनावगन्तव्यम्—

मनःप्रह्लादजननं दृष्टिकान्तमतीव च॥
शीतमारुतसंयुक्तं जगामान्यन्महद्वनम्।

---

१. काव्यमीमांसायां दशमाध्यायतः।
२. अध्यापनं ब्रह्मयज्ञः। मनुस्मृतौ ३. ७०
३. मुण्डक १.२.११—१२ छान्दोग्य ८.५.३

पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ॥
विहगैर्नादितं पुष्पैरलङ्कृतमतीव च ।
सर्वर्तुकुसुमवृक्षैः सुखच्छायैः समावृतम् ॥
प्रेक्षमाणो वनं तत् तु सुप्रहृष्टविहङ्गमम् ।
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥
महाकक्षैर्बृहद्भिश्च विभ्राजितमतीव च ।
मालिनीमभितो राजन् नदीं पुण्यां सुखोदकाम् ॥
नदीं चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः ।
सर्वप्राणभृतां तत्र जननीमिव धिष्ठिताम् ॥
अलंकृतं द्वीपवत्या मालिन्या रम्यतीरया ।
नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् ।
नातृप्यत् प्रेक्षमाणो वै तपोवनगुणैर्युतम् ॥

आदिपर्वणि ७० अध्यायतः

व्यासाश्रमो हिमालये प्रतिष्ठितः । भरद्वाजस्याश्रमो गङ्गाद्वारे आसीत् । आश्रमेऽस्मिन् धनुर्वेदोऽपि शिक्षितः । परशुरामस्याश्रमो महेन्द्रपर्वतेऽवस्थितः ।

रामायणानुसारं प्रयागे गङ्गायमुनयोः सङ्गमप्रदेशे भरद्वाजस्याश्रमस्तस्मिन्युगे प्रतिष्ठितः । मुनिभिः सह तत्र मृगपक्षिणामावासोऽभवत् । छात्राणामावासाय पर्णशाला निर्मिताः । हवनस्याग्नयो वृक्षा मृगपक्षिणश्च महत्त्वपूर्णा आसन् । आश्रमकुशलं 'शरीरेऽग्निषु शिष्येषु वृक्षेषु मृगपक्षिषु' पृच्छ्यते स्म ।[१] चित्रकूटे वाल्मीकेराश्रमः स्थितः । अस्य शोभामधिकृत्य रामायणे प्रोक्तम्—

मनोज्ञोऽयं गिरिः सौम्य नानाद्रुमलतायुतः ।
बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ॥

अयोध्याकाण्डे ५६.१४

---

१. अयोध्याकाण्डे ९० सर्गतः

रामायणकालीने दण्डकारण्येऽगस्त्यस्याश्रमोऽभवत्। नैसर्गिकी शोभा शान्तिश्चास्य भूमेः मनोरमे अभूताम्।

महाभारतयुगे तक्षशिलाविश्वविद्यालयः प्रसिद्धिमागतः। भारतस्य विभिन्नप्रदेशेभ्यो विद्यार्थिन उच्चशिक्षणस्य प्राप्तये तदा तक्षशिलामेव गतवन्तः। विद्यालयेऽस्मिन् वेदैः सहाष्टादशशिल्पानां हस्तिसूत्रस्य धनुर्वेदस्य च शिक्षा दत्ता[१]। पाणिनिः कौटिल्यश्च सम्भवतो विद्यालयेऽस्मिन् शिक्षितौ। त्रिद्यालयस्यावस्थितिरुपनदप्रदेशेऽभवत् विद्यालयभवनानि च गिरिप्रस्थे निर्मितानि बभूवुः।

जातकयुगे हिमाद्रौ बहवः शिक्षणाश्रमा अवस्थिताः। नैष्ठिकब्रह्मचारिणां महर्षीणां च विद्यालयास्तत्राभवन्। केषुचिद्विद्यालयेषु विद्यार्थिनां संख्या पञ्चशतपर्यन्ताऽभूत्।

पाणिनेर्जन्मभूमिः शालातुरी वैयाकरणाचार्याणामावासभूमिरभूत्। ह्वेनसांगमहोदयानुसारं नगरेऽस्मिन् व्याकरणज्ञानं परम्परानुसारं सातत्यं प्राप्यत। अध्ययनशीला अनुसन्धानपरायणाश्च ब्राह्मणा अस्य नगरस्य परमविख्याता बभूवुः[२]।

उपर्युक्तयुगे काशीपुरी वैदिकसाहित्यस्याध्ययनाध्यापनाभ्यां प्रसिद्धासीत्। बोधिसत्त्वेन प्रतिष्ठापिते काशीविद्यालये शतराष्ट्रेभ्यः समागता विद्यार्थिनो ब्राह्मणाः क्षत्रियाश्चाध्ययनपरायणा बभूवुः।[३]

परवर्तियुगे महर्षीणामाश्रमप्रदेशे देवमन्दिराणां निर्माणमभूत्। अग्निपुराणानुसारं तु—

तीर्थे चायतने पुण्ये सिद्धक्षेत्रे तथाश्रमे।
कर्त्तुरायतनं विष्णोर्यथोक्तात् त्रिगुणं फलम्॥ ३८.१५

---

१. सुसीमजातके धुसजातके च
२. ह्वेनसांगे वाटर्सकृते प्रथमे भागे पृ० २२२
३. नंगलीसजातके कोसियजातके च

आचार्याणां विद्यालयास्तु मन्दिरैः सम्बद्धाः। मन्दिराणां विद्यालयस्वरूपं ह्वेनसांगमहोदयस्य अधोलिखितोद्धरणेन प्रमाणितम्—

Beside the capital and close to the Ganges was the I—lan—na mountain, the dark mists of which eclipsed sun and moon; on this an endless succession of Rishis had always lodged and their teachings were still preserved in the Deva temples.[1]

मन्दिरेष्वध्यापनं पुण्यावहममन्यत। अधुनाऽपि धारानगर्यां सरस्वतीमन्दिराणि विराजन्ते, येषु महाराजभोजस्य काले विविधविद्यानामध्यापनमक्रियत।

ह्वेनसांगमहोदयस्तु निजभारतयात्रावर्णनप्रसङ्गे विद्यालयानां विवरणं प्रस्तुतवान्। तस्यानुसारम्—असमप्रदेशे कामरूपं वैदिकविद्यायाः महाकेन्द्रमभूत्। विद्यालयोऽयं राज्ञा भास्करवर्मणा प्रतिष्ठितः। काशीकलिङ्गोज्जयिनीचित्तौड़ादिभ्यः प्रदेशेभ्यः विद्यार्थिनस्तत्रागताः। तस्मिन् युगे काश्यां विंशतिः देवमन्दिराणि बभूवुः। मन्दिरसमीपं सर्वत्र वृक्षकुंजानां छायाऽऽसीत्, तेषां मध्ये निर्मलजलप्रस्रवाः प्रवाहिताः। भारतस्य विविधप्रदेशेष्वीदृशानां विद्यामन्दिराणां संख्या त्वगण्यैवासीत्।

गुप्तयुगीनशिक्षासंस्थानां परिचयः तत्कालीनकाव्यग्रन्थेषु प्राप्यते। रघुवंशे वसिष्ठस्य कादम्बर्यां जाबालेराश्रमाणां काव्योचितवर्णनेन तेषां रमणीयताऽधुनापि हृदयेऽङ्किता भवत्येव। हर्षचरिते बाणेन विन्ध्यवनाधिष्ठितस्य दिवाकरमित्रस्याश्रमस्य वर्णनं कृतम्। आश्रमेऽस्मिन् विभिन्नसम्प्रदायानां धर्माचार्याणां च परस्परविवादमाध्यमेन ज्ञानं समवर्धत। बाणस्तु स्वयमेव चतुर्दशवर्षपर्यन्तं गुरुकुलेष्वपठत्। तेषां विषये तेनालोचितम्—'शुकसारिकारब्धाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि

---

१. वाटर्स—ह्वेनसांग द्वितीयभागस्य पृ० १८८

साक्षात् त्रयीतपोवनानि बान्धवानां भवनानि भ्रमन् सुखमतिष्ठत् ।' गुरुकुलेषु सदैव वेदपाठोऽभवत्, यज्ञाग्निः प्रज्वलितोऽभूत्, हवनमक्रियत च ।

खीष्टस्य पश्चात् दशशताब्दादारभ्य मन्दिरेषु प्रतिष्ठितानां शिक्षण-संस्थानां प्रायश ऐतिहासिकोल्लेखाः प्राप्यन्ते । बीजापुरजनपदस्य सलोत्गी-ग्रामे राष्ट्रकूटराजस्य कृष्णस्य मन्त्रिणा नारायणेन प्रतिष्ठापितस्य त्रयीपुरुष-मन्दिरस्य प्रधानकक्षेऽध्यापनं कृतम् । विद्यार्थिनामुपयोगाय सप्तविंशति-च्छात्रालया निर्मिताः। एकादशशताब्दे 'एन्नारियम्' नगरे वैदिकविद्यालयोऽ-र्काटप्रदेशे स्थापितः । विद्यालयेऽस्मिन् वेदानां सूत्राणां वेदाङ्गानां दर्शनानां चाध्यापनाय षोडशाध्यापका नियुक्ताः । विद्यालयेऽस्मिन् चत्वारिंशदधिक-त्रिशतविद्यार्थिनो विविधविषयाणां शिक्षां गृहीतवन्तः । ईदृशा विद्यालयाः चिंगलीपुटे वेंकटेश्वरस्य मन्दिरे, हेब्बालनगरे भुजब्बेश्वरस्य मन्दिरे च स्थापिताः ।

दशमशताब्देऽग्रहारशिक्षणसंस्थानां प्रादुर्भावो दृश्यते । अग्रहारास्तु राजभिः समृद्धिमद्भिर्वा विद्वद्भ्यः प्रदत्ताः । अग्रहारभोगिनो विद्वांस आचार्य-पथेन समाजस्याभ्युदयं कुर्वन्ति स्म । अग्रहारसमकक्षाः संस्थाः घटिका ब्रह्मपुरी च तस्मिन्युगे प्रचलिता आसन् । ईदृशीनां संस्थानां दक्षिण-भारते प्राचुर्यमासीत् ।

राष्ट्रकूटराजवंशैः दशमशतके धारवाडजनपदे 'कदियुराग्रहारः' द्विशत-ब्राह्मणेभ्यो दत्तः । अस्मिन्नग्रहारे वेदकाव्यशास्त्रव्याकरणतर्कपुराणराज-नीतीनामध्यापनमभवत् । विद्यार्थिभ्यो निःशुल्कभोजनमपि तस्याग्रहार-स्यार्यैः प्रदत्तम् । सर्वज्ञपुरस्याग्रहारस्य सर्वे ब्राह्मणाः सर्वज्ञा एवाभवन् ।

उत्तरप्रदेशे विहारे बङ्गे चाग्रहारसमाः संस्थाः टोलनाम्ना विख्याताः । नागरिकाणां भूदानैरर्थसाहाय्येन च तत्रत्याचार्याणां विद्यार्थिनां च वृत्तयः प्रस्तुताः । आचार्या अपि विद्यार्थिनामावश्यकतापूर्त्यर्थं सचेष्टा बभूवुः ।

खीष्टस्य पश्चात् नवमे शतके शङ्कराचार्यो वैदिकशिक्षणाय विश्व-विद्यालयानां स्थापनां कृतवान् । तस्य विश्वविद्यालया मठा इति ख्याता

बभूवुः। तेषामवस्थितिर्भारतस्य चतुःसीमान्तप्रदेशे दृश्यते। तेन मठाः पुरीकाञ्चीद्वारकाबदरीषु प्रतिष्ठापिताः।

**बौद्धविद्यालयाः**

बौद्धविद्यालयानामादिप्रवर्तको गौतमबुद्धो बभूव। एषु विद्यालयेषु जीवनपर्यन्तं व्यक्तित्वविकासस्यायोजनं कृतम्। अनया दृष्ट्या गौतमस्यायोजनं वैदिकसंस्कृतेर्नैष्ठिकब्रह्मचर्यस्य समकक्षं प्रतिभाति। यद्यपि बौद्धसंस्कृतावरण्यवासस्य महत्त्वं साधनापथे स्वीकृतमेव, किन्तु भिक्षार्थं नगरसमीपमेव निवसनं समीचीनं सम्मतम्। गौतमस्य जीवनकालादारभ्य प्रायः नगराणां समीपमेव विहाराणां निर्माणमारब्धम्। तत्कालीनसमृद्धिमन्तः श्रीमन्त आत्मकल्याणार्थमसंख्यविहाराणां रचनां कृतवन्तः। विहारास्तु प्रायः सदैव निर्मातुरार्थिकपरिस्थित्यनुरूपमेव बभूवुः। वास्तुविधानानुरूपा स्वास्थ्यप्रदा सुखकरी च विहाराणां रूपरेखाऽवर्तत।

श्रावस्त्यां जेतवनविहारे विंशत्यधिकशतभवनान्यासन्। विहारेऽस्मिन्नुपदेशाय, समाधये, भोजनायाध्यापनाय च विभिन्नाः शाला अभवन्। औषधालयाः पुस्तकालया अध्ययनकक्षाश्च पृथक्पृथक् निर्मिताः। विहारपरिधौ स्थितं जलाशयं परितो मनोरमा छायासीत्। विहारोऽयं प्राकारैः परिवेष्टित आसीत्। विहारस्य पुस्तकालये वैदिकसंस्कृतेरपि शिल्पविज्ञानयोश्च पुस्तकानि संगृहीतानि। सर्वेषां धर्माणामनुयायिनोऽस्मिन् विहारे आवासमकुर्वन्। गौतमेनादिष्टम्—विहारभूमौ वृक्षारोपणं कुरु, राजमार्गमभितः वृक्षालङ्करणं भवतु।

गौतमेन सह सहस्राधिकविद्यार्थिनोऽपि परिभ्रमन्तः शिक्षां प्राप्तवन्तः। परिभ्रमन्नेव बुद्धो विहारेषु समागत्य शिक्षणमारब्धवान्। सर्वेषां विहाराणामनुशासनपूर्णव्यवस्थायै गौतमस्योत्तरदायित्वं मतम्। स स्वयमेव विहारदोषान् परिमार्जितुमुपस्थितोऽभवत्, अन्यथा विश्वस्तान् ज्येष्ठशिष्यान् प्राहिणोत्।

विहारेषु जीवनस्य सामान्यतोऽपेक्षितानि सर्वाणि वस्तूनि प्राप्तव्यानि

बभूवुः। स्नानागाराणि तत्रापूर्वकौशलेन रचितानि। जलाशयेषु जलस्य बहिष्करणाय नवजलस्यागमनाय च नालिकाः निर्मिताः। भोजनवस्त्रादिकानां पर्याप्तराशिः तेषु विहारेषु संचितः।

गौतमस्य पश्चात् बौद्धविद्यालयानां सर्वोच्चप्रतिष्ठापकोऽशोकोऽभवत्। तेनासंख्यका विहाराः कारिताः। ख्रीष्टतः प्रागेवाऽजन्तायां गुहाविहाराणामध्ययनार्थं रचना समारब्धा। ख्रीष्टस्य पश्चादष्टशतकपर्यन्तं तत्र विहाराणां रचना कृता। तेषां विहाराणां चित्रालङ्करणं मूर्त्तितक्षणं चातीव मनोरमे। अजन्तायाः प्राकृतिकसौन्दर्यं भारतेऽप्रतिममेव प्रतिभाति। ईदृशैर्गुहाविहारैर्दक्षिणभारतमनेकत्र समलंकृतं दृश्यते।

फाह्यानानुसारम्—कश्यपबुद्धस्य संघारामः पञ्चतलगुहाविहार आसीत्। प्रथमतलं हस्त्याकारमासीत्। अस्मिन् तले पंचशतगुहागृहाण्यासन्। द्वितीयं तु सिंहाकारं चतुःशतगृहसमायुक्तं तृतीयमश्वाकारं त्रिशतगृहयुक्तं चतुर्थं वृषभाकारं द्विशतगृहसमन्वितं पञ्चमं तु कपोताकारं शतगृहोपनिबद्धमासन्। विहारस्योपरिभागतो जलप्रपातः संघारामस्य द्वारसमीपं वक्रमार्गेणायातः। सर्वेषु गृहेषु गवाक्षा निर्मिताः। अधस्तादुपरि गन्तुं सोपानव्यवस्थासीत्।

फाह्यानानुसारं तस्मिन्युगे भारते सहस्राधिकविहारविद्यालया आसन्।

ख्रीष्टस्य पश्चात् सप्तमे शतके चीनदेशात् ह्वेनसांग इति ख्यातनामा भारतीयविद्याभिलाषुकोऽस्माकं देशे समागतः। स तु भारतस्य विविधप्रदेशेषु परिभ्रम्य विदुषां साहाय्येन ज्ञाननिधिं समवर्धयत। स्वयात्रावर्णने ह्वेनसांगो विशेषरूपेण सांस्कृतिकानां शैक्षणिकानां च संस्थानां निदर्शनमकरोत्। ह्वेनसांगानुसारं तत्कालीनभारते षट्सहस्राधिकविहाराः सार्धद्विलक्षभिक्षुविद्यार्थिनः तेषामाचार्याश्च बभूवुः।

पञ्चमशतकादारभ्य कतिपयविहारा विश्वविद्यालयरूपेण विकसिताः। नालन्दायाः वलभेः विक्रमशिलायाश्च विश्वविद्यालयाः समस्तैशियामहाद्वीपे प्रख्याता बभूवुः।

नालन्दाविश्वविद्यालयः

नालन्दासमीपमेका लघुनदी प्रवहति। प्राचीनयुगे तस्मिन्प्रदेशे वनराजेरपूर्वा शोभासीत्। अधुना तत्र शस्यश्यामला धरित्र्या रमणीयता विराजते। नालन्दाया नातिदूरं गिरीणां स्रोतसां च शोभा मनो हरति।

नालान्दा गौतमस्य प्रमुखशिष्यस्य सारिपुत्रस्य जन्मभूमिरस्ति। अत्रत्याम्रवणे कतिपयदिनान्युषित्वा गौतमः शिष्येभ्यः सदाचारस्य विनयस्य च शिक्षामदात्। अशोकस्तु नालन्दायां विहारस्य निर्माणमकारयत्। खीष्टतः पञ्चमशतकादारभ्य शक्रादित्यबुद्धगुप्ततथागतनरसिंहगुप्तवज्रादयो बहवो राजानस्तत्र विहारान् कारयामासुः। वैदेशिका राजानोऽपि नालन्दायां विहारान् कारितवन्तः। सुमात्रायाः राजा बालपुत्रो नवमे शतके तत्र विहारं रचयामास स्वमित्रेण राज्ञा देवपालेन चात्मार्थं पञ्चग्रामाणां दानं च कारितवान्।

राजभिः कृता विहारा तेषां राजपदयोग्या बभूवुः। ह्वेनसांगस्य समक्षं महाराजेन हर्षवर्धनेन तत्र कांस्यमन्दिरं रचितम्। मन्दिरेषु तेषु गौतमबुद्धस्य धातुनिर्मितमूर्तयः प्रतिष्ठापिताः।

नालन्दाविश्वविद्यालयस्य सघनवनकुंजेषु ह्वेनसांगस्य मनोऽरमत। मनोरमेषु कासारेषु च तत्र नीलोत्पलानां विकासोऽभवत्। काननवृक्षैस्तत्रत्यशोभा द्विगुणिता। तेषां रक्तकुसुमानां स्तबकैः सर्वेषां मनांसि हृतान्येव। तत्रत्याम्रमञ्जरीभिर्हरितपत्रैश्च नयनयोः सुखमजायत। विद्यालयस्य समीपमेव दश स्नानागाराणि निर्मितानि। तत्रत्यभवनानामुच्चतां सौन्दर्यं च निदर्शयन् ह्वेनसांगो लिखति—मानमन्दिरं प्रातःकालीनतुषारेषु लीनं भवति। उपरिभूमयः प्रासादानां मेघेष्वलक्षिता भवन्ति। पर्वतसमोच्चभूमिषु ललितकलानां शिक्षा दीयते। प्रसाधनकर्म च सर्वेषां भवनानामतीव मनोहरम्। मन्दिराणां भित्तिनिर्माणे इष्टकानां सन्धिरपरिलक्षितसंयोगस्थल एव वर्तते।

नालन्दाविश्वविद्यालयस्य ध्वंसावशेषा उत्खनिता एवाधुनाऽपि दर्शनीया वर्तन्ते। भवनानां विन्यासः कलात्मकविधिना कृतो दृश्यते।

व्याख्यानाय त्रिशतकक्षाः वर्तन्ते। विश्वविद्यालयीयजीवनविन्यासस्य सर्वाङ्गीणपरिचयो ध्वंसावशेषैः प्राप्यते।

खीष्टस्य पश्चात् द्वादशशताब्दे यवनाक्रान्तोऽयं विश्वविद्यालयः परिध्वस्तो विनष्टश्च।

नालन्दाविश्वविद्यालये दशसहस्रविद्यार्थिनः शिक्षां लब्धवन्तः। प्रतिदिनं शतव्याख्यानानामायोजनं कृतम्। विश्वविद्यालयेऽस्मिन् बौद्धेतर-विषयाणां व्याकरणतर्कसाहित्यादीनामपि शिक्षा दीयते स्म, वेदवेदान्त-सांख्यादिविषयाश्च शिक्षिताः। विद्यार्थिनस्तु चीनकोरियातिब्बततोखार-जापानादिविदेशेभ्यः समायाताः।

बलभिविश्वविद्यालयः

काठियावाडप्रदेशे स्थितोऽयं विश्वविद्यालयोऽष्टमशतकाब्दपर्यन्तं प्रावर्तत। संस्थेयं राजकुमार्या दुड्डया प्रतिष्ठापिता। शनैः शनैः विहाराणां संख्या समवर्धत। ह्वेनसांगस्य युगे तत्र शताधिकविहाराः बभूवुः विद्यार्थि-नश्च तेषु षट्सहस्रपर्यन्ता आसन्। गुणमतिः स्थिरमतिश्च तत्रत्य-प्रसिद्धावाचार्यौ बभूवतुः। वलभेः स्नातकाः सर्वत्र सम्मानिता बभूवुः। विश्वविद्यालयस्यास्य प्रमुखद्वारे श्वेताक्षरैः सर्वोत्कृष्टविदुषामाचार्याणां च नामानि लिखित्वा तेषां प्रतिष्ठा कृता।

विक्रमशिलाविश्वविद्यालयः

खीष्टस्य पश्चादष्टमशताब्दादारभ्य त्रयोदशशतकपर्यन्तं विश्वविद्या-लयोऽयं प्रावर्तत। विश्वविद्यालयस्य स्थापना पालवंशस्य राजा धर्मपाल उपगङ्गं गिरिप्रस्थे कृतवान्। अपरेऽपि पालवंशीया राजानो भवनानि निर्मायास्य संवर्धनं कृतवन्तः। अस्य विनाशो बख्तियारेण यवना-क्रमणकारिणा कृतः। स इमं विश्वविद्यालयं कस्यचिद्राज्ञो दुर्ग इति मतवान्।

विक्रमशिलाविश्वविद्यालये तत्कालीनभारतस्य सर्वोच्चविद्वांसः प्रतिष्ठापिताः। फलतः स समग्रैशियामहाद्वीपे प्रख्यातोऽभवत्।

विद्यालयेऽस्मिन् तिब्बतप्रदेशस्य छात्राणां कृते छात्रावास एको नियतः। द्वादशशतके विश्वविद्यालये त्रिसहस्रसंख्यका विद्यार्थिनोऽभवन्। प्रारम्भावस्थायामष्टाधिकशताचार्या नियुक्ताः। विश्वविद्यालयस्य प्रमुखद्वारे दीपङ्करातिशादीनां चित्राणि दर्शितानि। विद्यालयस्य षड्द्वारेषु तत्र द्वारपण्डिताः प्रतिष्ठिताः। तैः परीक्षिता अनुमताश्च विद्यार्थिनः संस्थायां प्रवेशमलभन्त।

एकादशशतकस्यान्तिमभागे बङ्गमगधयो राजा रामपालो रामावतीनगर्यां जगद्दलविहारं प्रतिष्ठापयामास। इयमपि संस्था नालन्दा-विक्रमशिला-विश्वविद्यालयाभ्यां सहैव विध्वंसिता। अस्याः संस्थायाः प्रमुखा आचार्याः—विभूतिचन्द्रः, दानशीलः, मोक्षाकरगुप्तः, शुभङ्करश्च बभूवुः। तिब्बतदेशादपि विद्यार्थिनोऽत्रागताः।

ओदन्तपुर्यां विहारोऽपि तस्मिन् युगे समवर्धत। विहारेऽस्मिन् सहस्रभिक्षवोऽवसन्। महानाचार्यः प्रभाकरोऽस्मिन्नेव विहारेऽशिक्षयत्। पालवंशीयराजैरस्याः संस्थायाः सम्पोषणं कृतम्।

### जैनविद्यालयाः

प्रारम्भिकयुगेऽनागाराणां दिगम्बराणां जैनाचार्याणां विद्यालया भवनेषु नाभवन्। आचार्यैः सह तेषां विद्यार्थिनः पर्यटनं कृतवन्तः। परवर्तियुगे चिरकालमेव गणधरैः सह विद्यार्थिनां पर्यटनरीतिरक्षुण्णाभूत्। शनैः शनैः कालान्तरे तेषां कृते गुहासु तीर्थेषु च मन्दिराणां निर्माणमक्रियत। एषां मन्दिराणां व्यवस्था प्रायः वैदिकबौद्धसंस्थानुरूपाऽभवत्।

## अध्ययनपरिधिः

भारतीयसंस्कृतेरादिकालेऽध्ययनस्य विषयाणां स्वरूपं किमासीदिति सुनिश्चितं नास्ति। सिन्धुसभ्यताया ध्वंसावशेषैः तत्कालीनभारतीयानां शिल्पकलाविज्ञानधर्मादिषु विषयेषु प्रावीण्यं प्रतीयते। तेषां विषयाणां शिक्षा दीयते स्मेति कल्पना तथ्यपरा। विद्यार्थिनस्तत्र लेखाभ्यासं

कुर्वन्ति स्मेति तत्रत्यलेखैः निश्चितमेव। योगाभ्यासप्रवृत्तयोऽपि तेभ्यः प्ररोचन्ते स्म।

**वैदिकाध्ययनविषयाः**

वैदिकयुगे विद्यार्थिनो वागर्थयोः प्रतिपत्तिं कर्त्तुं तपोमयसाधनां कृतवन्तः। वैदिकसाहित्यमृषिभिः रचितम्। तेषामृषीणां परम्परया विद्यार्थिभ्यः मन्त्ररचनाकौशलं शिक्षितम्। ऋषिभिरेतदर्थं वेदाङ्गानां शिक्षाकल्पनिरुक्तच्छन्दोज्योतिषव्याकरणानामध्यापनं विद्यार्थिभ्यः कारितम्। नित्यमाचार्याणां निर्देशने मन्त्ररचनाभ्यासं कृतवन्त एव विद्यार्थिनः सफला ऋषयो भवितुं समर्थाः। सामान्यत एव काव्यरचनाकौशलाय पूर्वसूरिणां काव्यानां कण्ठाग्रकरणमपेक्षितमासीत्। आचार्यपरम्पराभिः कथामाध्यमेन विद्यार्थिभ्यः धर्मदर्शनकाव्यपुराणेतिहासानां सूक्तरचनायामपेक्षितानां विषयाणां ज्ञानं कारितम्।

शनैः शनैः वैदिकसाहित्यं समवर्धत। तस्मिन्युगेऽन्ये विषयाः — अनुशासनविद्यावाकोवाक्येतिहासपुराणगाथानाराशंस्यादयो विशालतरा बभूवुः[१]। तेषामध्ययनमध्यापनं चावश्यमेवाभवताम्।

ब्राह्मणयुगे यज्ञविद्याया अध्यापनं महत्त्वपूर्णं समजायत। यज्ञविद्याया बोधाय पुराणेतिहासाख्यानसृष्टिविज्ञानादीनां विषयाणां व्याख्यानमपेक्षितं वर्तते।

उपनिषद्युगे वैदिकसंहितानां वेदाङ्गानां यज्ञविद्यानामध्यापने प्रचलिते सत्यपि ब्रह्मविद्यायाः सर्वोच्चं महत्त्वं प्रतिष्ठितम्। वेदवेदाङ्गादिषु निष्णाता विद्यार्थिनो पराविद्यां (ब्रह्मविद्याम्) शिक्षितुमागताः। पराविद्या तु कदापि सर्वप्रदेया न मता। तस्मिन् युगेऽपि सर्वसाधारणविषयाः — चत्वारो वेदा इतिहासपुराणं वेदानां वेदः (व्याकरणं), पित्र्यं, राशिः, दैवं, निधिः, वाकोवाक्यं, एकायनं, देवविद्या, ब्रह्मविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पविद्या, देवजनविद्या अध्याप्या आसन्।

१. अथर्ववेदे १५.६.११-१२; ११.७.२८; शतपथे ११.५.६.८।

खीष्टतः प्राक् पंचमशतके कस्मिंश्चिद्विषये विशेषज्ञानार्जनस्य रीतिर्दृश्यते यथा याज्ञिका वैयाकरणा अग्निष्टोमिका वाजपेयिकादयः क्रमशः यज्ञशास्त्रे व्याकरणे अग्निष्टोमे वाजपेये च निष्णाताः। सूत्रसाहित्यस्याभिनवमध्ययनं प्रारब्धम्। पाणिनिः कल्पभिक्षुनटसूत्राणामुल्लेखं करोति। रामायणभारतादयोऽध्यापनविषया बभूवुः।

पौराणिकयुगे चतुर्दशविद्यानामध्यापनं प्रचलितम्। षडङ्गवत्पुराणादीनामपि वेदार्थज्ञानोपयोगं दृष्ट्वा विद्यास्थानत्वं याज्ञवल्क्येन स्मर्यते—

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ इति,
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। इति च।

एभिः चतुर्दशविद्यास्थानैः सह चतुर्णामुपवेदानां संग्रहेण विद्यानां संख्याष्टादशाभवत्।[1]

**बौद्धाध्ययनविषयाः**

बौद्धाध्ययनविषयाणां समारम्भो गौतमस्योपदेशेभ्योऽभवत्। प्रारम्भावस्थायां गौतमः मानवेभ्य आचारपथस्य शिक्षां दत्तवान्। तेषां जीवनदर्शनं च परिशोधयितुं यथार्थसुखस्य पर्यालोचनं कृतवान्। सा तु गौतमस्य मध्यमा प्रतिपदा—भोगविलासानामतिशयता तपसा शरीरस्यातिकष्टं द्वे अपि त्याज्ये इति। द्वयोर्मध्ये वर्तनीयमिति मध्यममार्गः। मध्यममार्गेण निर्वाणं लभ्यम्। निर्वाणमुद्दिश्यार्यसत्यानि चत्वारि निर्दिष्टानि—दुःखं विद्यते, तस्य कारणं विद्यते, तस्य निरोधो भवितुमर्हति। निरोधस्य मार्ग अष्टाङ्गिक इति। एषां चतुर्णामार्यसत्यानां सम्यग्ज्ञानस्य पश्चात् किंचिदपि ज्ञेयमवशिष्टं न विद्यते। इदमेव सर्वोत्तमं ज्ञानमिति गौतमस्य मतम्।

गौतमस्य जीवनकालेऽध्ययनविषयाः—अट्ठकवग्गिकानि, सुत्तन्तपाठो, विनयो, धम्मो—बभूवुः। इमानि सर्वाणि गौतमस्योपदेशानां सङ्कलनानि

---

१. उपवेदाः—आयुर्वेदः, धनुर्वेदः, गन्धर्ववेदः, अर्थशास्त्रं च।

सन्ति। शनैः शनैः त्रिपिटकानां समाहारोऽजायत। कतिपयविद्यार्थिनस्तु त्रिपिटकधारिणो बभूवुः।[१] समाधियोगयोः शिक्षा सदैव प्रचलितासीत्।

गौतमस्य पश्चादपि त्रिपिटकानामध्ययनमध्यापनं च महत्त्वपूर्णौ बभूवतुः। परवर्तियुगे त्रिपिटकस्य दार्शनिकपृष्ठभूमिं रचयन्तो विद्वांसोऽभिनवग्रन्थानां प्रणयनं कृतवन्तः। तेषां ग्रन्थानामध्यापनं त्रिपिटकैः सह प्रारभ्यत।

ख्रीष्टतः पश्चात् सप्तमशतकस्याध्यापनविषयाः ह्वेनसांगस्य लेखेभ्यो ज्ञाता भवन्ति। तदनुसारं तु विहारेषु वैदिकसंस्कृतेः प्रामाणिकग्रन्थाः पाठिताः। पाणिनेर्व्याकरणस्य विहारेषु महती प्रतिष्ठाऽवर्तत। नालन्दाया विश्वविद्यालये वेदवेदान्तसांख्यादीनां शिक्षा दीयते स्म।

ह्वेनसांगः तोषासनविहारेऽभिधम्मं नगरधनविहारे सौत्रान्तिकानां विभाषाः नालन्दायां योगशास्त्रं चापठत्। अनेन प्रकरणेन सुनिश्चितं प्रतिभाति यदनुसन्धानपरायणा विद्यार्थिनः ज्ञानस्य विशिष्टक्षेत्रेषु शिक्षां प्राप्तुं यतन्ते स्म।

**जैनाध्ययनविषयाः**

जैनानामध्ययनविषयाणां नियतं स्वरूपं महावीरस्य पश्चादेव प्राप्यते। महावीरस्योपदेशाः तस्य जीवनकाले मौखिकमाध्यमेन विद्यार्थिभ्यः प्रदत्ताः। तस्य पश्चात् तेषां संग्रहोऽङ्गग्रन्थेषु कृतः। अङ्गसाहित्यमाश्रित्य परवर्तियुगे महाविशालसाहित्यस्य रचना तत्सम्बन्धिधर्मदर्शनादीन् विषयानधिकृत्य सम्भूता। सर्वेषां च तेषां ग्रन्थानामध्यापनं जैनविद्यालयेषु कृतम्। तेषां विद्यालयेषु समाधियोगयोः शिक्षा सुप्रतिष्ठिता।

लौकिकविषयानधिकृत्य जैनानां बहवो ग्रन्थाः प्रणीताः दृश्यन्ते। ज्योतिषायुर्वेदव्याकरणकोशच्छन्दोऽलङ्कारगणितराजनीत्यादिविषयाणां ग्रन्थानां शिक्षणं जैनविद्यालयेष्वभवत्। काव्यपुराणेतिहासादीनां शिक्षा गृहस्थाश्रमवासिभ्यः प्रधानरूपेणासीत्।

१. त्रिपिटकेन 'अभिधम्मविनयसुत्तानां' बोधो भवति।

## शिल्पकलानामध्यापनम्

भारते प्राचीनतमशिल्पकलानामादर्शाः सिन्धुसभ्यताया अवशेषेषु प्राप्यन्ते। तत्राचार्यपरम्परया नृत्यसंगीतवाद्यादीनां ललितकलानां चित्रमूर्तिवास्त्वादीनां शिल्पानां च विकासः सहस्रवर्षावधिरभूत्। एषां शिल्पकलानामध्यापनाय विद्यालया अभवन्न वेति सन्दिग्धो निष्कर्षः। भारते सदैव शिल्पाचार्यैः सह निवसतां नवच्छात्राणां शिल्पेषु प्रावीण्यप्राप्तेः रीतिः प्रावर्तत। सा रीतिर्वैदिककाले सिन्धुसभ्यताया युगेऽप्यासीत्।

शिल्पानां शिक्षणाय प्रथमः सुप्रसिद्धविद्यालयः तक्षशिलायामभवत्। तत्राष्टादशशिल्पाः शिक्षिताः। एषु शिल्पेषु गीतवाद्यनृत्यचित्रादिकैः सह व्यावसायिकविद्या अपि अन्तर्गणिताः।[१] जातकयुगे राजकुमाराः संगीतवीणावादनमूर्तिरचनाव्यजनकर्ममालाग्रन्थनादिकौशलेषु शिक्षिताः। महाभारतानुसारं गान्धर्वविद्यालयेषु नृत्यगीतवाद्यादीनां शिक्षा दीयते स्म। अर्थशास्त्रे राजभिः गीतवाद्यपाठ्यनृत्तनाट्याक्षरचित्रवीणावेणुमृदङ्गपरचित्तज्ञानगन्धमाल्यसंयूहनसंपादनसंवाहनवैशिककलादीनां शिक्षणाय व्यवस्था कर्तव्यासीत्।[२] नाट्यशास्त्रेऽपि नाट्याचार्यैः नाट्यसम्बन्धिकलानां शिक्षणस्योल्लेखो विद्यते। भरतमुनिः स्वयमेव ईदृश्याः संस्थाया आचार्योऽभवत्। राज्ञ आश्रित्य शिल्पकलानां संवर्धनस्य बहुश उल्लेखाः काव्यग्रन्थेषु विद्यन्ते। कामसूत्रानुसारं तु नागरिकाणां सुरुचिः प्रधानत्वेन कलात्मिकाऽऽसीत्। कलानां शिक्षा च प्रतिष्ठितसंस्थासु दीयते स्म।

न केवलं साधारणजनाः कलाप्रावीण्यं प्राप्नुवन्, अपितु ब्राह्मणकुमारा अपि वेदवेदाङ्गैः सह कलानामध्ययनं कृतवन्तः। बाणस्य पूर्वजा नृत्यगीतवादित्रेष्वबाह्या बभूवुः। हर्षस्य भगिनी राज्यश्रीर्नृत्यगीतादिषु विदग्धासीत्। मन्दिरेषु देवार्चनाय नृत्यगीतवाद्याभिनयादिषु साधनरूपत्वेन प्रतिष्ठितेषु

---

१. लाभगरहजातके २८७; असातमन्तजातके ६१; चुल्लधनुग्गहजातके ३७४

२. गणिकाध्यक्षप्रकरणात्

ललितकलानामुच्चवर्गेषु समादरोऽजायत। एकादशशतके 'एन्नारियम्' मन्दिरे रूपावतारस्य (चित्रमूर्तिवास्तूनाम्) शिक्षाऽदीयत।

बौद्धविहाराणां रचनाविधानस्य पर्यवेक्षणाय कतिपयभिक्षवः वास्तुकलायाः शिक्षां नवकर्मिका भूत्वा गृहीतवन्तः। विहारेषु चित्रमूर्त्यादीनां रचना कतिपयैर्भिक्षुभिः कृता। विदेशेषु गत्वा तत्रापि भारतीयशिल्पानां शिक्षा बौद्धभिक्षुभिः दत्ता।

जैनसंस्कृतावपि शिल्पादीनां शिक्षणं महत्त्वपूर्णं मतम्। हस्तलिखित-जैनग्रन्थानां प्रान्तभागेषु बहुविधानि चित्राणि लेखकानां पाठकानां च कला-पूर्णरुचिं निदर्शयन्ति।

नृत्यगीतवाद्यादीनां शिक्षणं वैदिकेतरसंस्कृतिषु नात्यधिकं सम्भावित-मिति तासां वैराग्यपरायणत्वेन निःसन्दिग्धमेव।

## सैन्यशिक्षणम्

सैन्यशिक्षणं राज्यसंस्थया सह प्रादुर्भवति। उपनिषत्सु क्षत्रविद्याया उल्लेखो विद्यते। महाभारतानुसारं तु महर्षीणामाश्रमेषु वेदैः सह धनुर्वेदस्य शिक्षा ब्राह्मणाचार्यैर्दत्ता। भरद्वाजद्रोणपरशुरामादयः प्रमुखा ईदृशा आचार्याः। धनुर्वेदः, अश्वपृष्ठं, गदायुद्धं, असिचर्म, गजशिक्षा, नीतिशास्त्रं च पाठितानि। द्रोणाचार्यस्तु तत्कालीनराज्येभ्य आगतेभ्यो राजकुमार-शिष्येभ्यो बहुविधां युद्धविद्यामशिक्षयत्। विद्यार्थिनः हस्त्यश्वरथधनुर्वेद-यन्त्रनागरात्मकानि सूत्राणि विषयोगं चाशिक्षन्त। तक्षशिलाविश्वविद्या-लये ब्राह्मणकुमारा अपि वेदानामध्ययनेन सह धनुर्वेदं पठितवन्तः।

परवर्तियुगस्य सैन्यशिक्षणमधिकृत्य बाणेन कादम्बर्यां सिप्रानद्याः तटे स्थितस्य राजकीयविद्यामन्दिरस्य तुरङ्गवाह्यालीविभागस्य वर्णनं कृतम्। तस्यां संस्थायां राजनीतिव्यायामशस्त्रविद्यारथचर्यागजपृष्ठतुरंगमहस्तिशिक्षा-यन्त्रप्रयोगविषापहरणसुरुङ्गोपभेदतरणलंघनप्लुत्यारोहणसर्वभाषादीनां शिक्षा प्रदेयाऽऽसीत्।[1]

---

१. कादम्बर्यां पूर्वभागे पृ० ७४-७८।

## राजनीतिशिक्षणम्

राजनीतेरध्ययनं सदैव धर्मशास्त्रान्तर्गतमेवाभूत्। धर्मसूत्रग्रन्थेषु वर्णाश्रमधर्मस्य निरूपणां कुर्वन्तः सूत्रकाराः राज्ञां प्रजां प्रति कर्तव्यमुत्तरदायित्वं च प्रतिपादयन्ति स्म। सूत्रस्मृतिपुराणेतिहासादयः प्रायः सदैव पाठ्यक्रमे समन्विता बभूवुः। अर्थशास्त्रं तु प्रधानत्वेन राजनीतिग्रन्थः। अर्थशास्त्रानुसारं राजकुमारैः दण्डनीतिरवश्यमेवाध्येतव्या। दण्डनीतिस्तु सा विद्या या—अलब्धलाभार्था लब्धपरिरक्षिणी रक्षितविवर्धनी च।[१] अर्थशास्त्रे प्रायशो राजनीतेः प्रमुखाचार्याणां मतानि विवृतानि। तेषां सर्वेषामध्यापनं देशकालानुरूपं कृतम्।

## व्यावसायिकविषयाः

व्यावसायिकशिक्षां विद्यार्थिन आचार्येभ्यस्तेषां नवकर्मिका भूत्वा प्राप्तवन्तः। विद्यालयेष्वपि व्यावसायिकशिक्षणस्य व्यवस्थाऽवर्तत। तद्यथा तक्षशिलायां व्यावसायिकशिल्पानि—तक्षणकृषिपशुपालनव्यापारमृगयेन्द्रजालादीनि बभूवुः। महाभारतानुसारं तु पाण्डवाः द्यूतप्रसाधनकर्मपाकविद्याऽश्वविद्यागोपालनादिषु प्रवीणा बभूवुः। अर्थशास्त्रानुसारं राजकुमारैः वार्ताऽध्येतव्या। वार्ता खलु कृषिः पशुपालनं वाणिज्यमेव। कलिङ्गदेशीया राजकुमारा नौसंचालने शिक्षिताः।[२]

## आयुर्वेदः

आयुर्वेदस्य विज्ञानं भारतेऽतीव प्राचीनमस्ति। अथर्ववेदस्योपवेदोऽयं महर्षीणां परम्परया सततं समवर्धत। बौद्धयुगे तक्षशिलाविद्यालये सर्वप्रथममायुर्वेदस्य प्रतिष्ठितशिक्षणप्रणाल्याः समारम्भो दृश्यते। विद्यालयेऽस्मिन् जीवकः सप्तवर्षपर्यन्तमायुर्वेदं पठितवान्। छान्दोग्योपनिषद्युल्लिखिता

---

१. अर्थशास्त्र १.४.६

२. Hunter : Orissa Vol. I. P. 197.

सर्पविद्या सत्यमेवायुर्वेदस्य शाखा प्रतिभाति। आयुर्वेदसंहितासु सुदीर्घाऽऽचार्यावली वर्णिता दृश्यते। सा तु शिष्यपरम्परयैव निर्मिता।

परवर्तियुगे बौद्धविद्यालयेषु चिकित्साशास्त्रस्याध्यापनं सविशेषं दृश्यते। नालन्दाविश्वविद्यालये शल्यचिकित्सायाः औषधिचिकित्सायाश्च पाठ्यक्रमौ शिक्षितौ। इत्सिंगानुसारमष्टाङ्गिकमायुर्वेदशिक्षणमभवत्। आयुर्वेदस्याध्ययनं सर्वेषां कृतेऽनिवार्यमासीत्।

उपर्युक्ताध्ययनक्षेत्राद्बहिरपि बहवो विषयाः शिक्षिताः। बाणानुसारं पुरुषलक्षणं, पुस्तकव्यापारो, लेखकर्म, द्यूतकला, शकुनिरुतज्ञानं, रत्नपरीक्षा, दन्तव्यापारो, यन्त्रप्रयोगो, विषापहरणं, रतितन्त्रं च शिक्षितानि। यन्त्रप्रयोगस्तु महाभारतस्य यन्त्रसूत्रैः सम्बद्धः प्रतिभाति। ह्वेनसांगोल्लिखितेषु विषयेषु विज्ञानविद्यायाः स्थानं वर्तते। विज्ञानमधिकृत्य यन्त्रसिद्धान्तो ज्योतिषं च शिक्षिते। अन्येऽपि बहवो विषया विज्ञानाध्याये समुपस्थिता अध्ययनाध्यापनपरिधौ समागताः।

## शिक्षणविधिः

वैदिकसंस्कृतौ यज्ञादिसमारम्भेषु प्रयुक्तानां मन्त्राणां पाठः शुद्धा भवितव्या इति मान्यता प्रारम्भत एव दृश्यते। अशुद्धपाठेनानिष्टस्य सम्भावना मता। अतो वेदाध्यापने गुरुभिः स्वयमेव शुद्धपाठः प्रस्तुतः, शिष्यैः स पाठोऽनुकृत इति सनातनपद्धतिः। अनुब्रुवाणोऽध्येति न स्वपन्निति ऋग्वेदानुसारं निदर्शनम्। वैदिकयुगे नित्यमेव नवीनस्तुतिभिः देवाः प्रीणिताः। अस्मै प्रयोजनाय विद्यार्थिनस्तु काव्यरचनाभ्यासमकुर्वन्। शिक्षकास्तेषां रचनां परिशोधयन्ति स्म।

भारतदेशे संस्कृताध्ययनाध्यापने प्रायः सदैव कण्ठाग्रविद्याया माहात्म्यं सम्मतम्। विशुद्धपाठस्य कण्ठाग्रकरणाय बहुविधाः पाठाः प्रस्ताविताः, यथा—संहितापाठः, पदपाठः, क्रमपाठः, जटापाठः, घनपाठश्च। केषुचित् पाठेषु पदानि परस्परं स्थानं विपरिवर्तयन्ति पुनः पुनः त्रयोदशवारमपि समापतन्ति।

कण्ठाग्रकरणमेव समीहमाना बहवो विद्यार्थिनः सूक्तानामर्थं न विदुः। ईदृशं पाण्डित्यं हास्यास्पदं मतम्। निरुक्तानुसारं तु—

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥
यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्[1]॥

अस्यां परिस्थितौ सदैवार्थज्ञानस्य विद्यार्थिभ्यो महत्त्वमासीत्।

दर्शनविषयकज्ञानाय परिषत्सु विद्यार्थिनां पृच्छा प्रोत्साहिता। तस्या उदाहरणमृग्वेदे वर्तते—

पाकः पृच्छामि मनसा विजानन्देवानामेना निहिता पदानि।
वत्से वष्कयेऽधि सप्त तन्तून्वि तत्निरे कवय ओतवा उ॥
इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः।
शीर्ष्णः क्षीरं दुहते गावो अस्य वव्रिं वसाना उदकं पदापुः॥

शतपथब्राह्मणेऽध्यापनक्षेत्रे प्रश्नोत्तरस्य रूपमीदृशं वर्तते—

प्रश्नः—किं स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः। कथं स्विदस्य काव्यम्। कथं सन्ततोऽग्निभिरिति। कथं स्विदस्यानपप्रोषितम्भवति।

उत्तरम्—यो जविष्ठो भुवनेषु। स विद्वान्प्रवसन्निवदे तथा तदस्य काव्यं तथा सन्ततोऽग्निभिरिति मन एवैतदाह मनसैवास्यानपप्रोषितम्भवतीति।[2]

यज्ञविद्यासम्बन्धिव्याख्यानानि ब्राह्मणग्रन्थेषु प्रायशः प्राप्यन्ते। तेषु व्याख्यानेषु प्रक्रियात्मकस्पष्टीकरणं रहस्यानि च विद्यन्ते।

उपनिषत्सु महर्षीणामाचार्याणां च विद्यार्थिभ्यः प्रदत्तानि व्याख्यानानि वर्तन्ते। व्याख्यानमाध्यमस्योल्लेख ईशोपनिषदि विद्यते—

अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे॥

१. निरुक्ते १.१८.१६

२. शतपथे ११.३.१.५-६

प्रश्नोत्तरमाध्यमेनोपनिषद्युगेऽपि शिक्षा प्रायोऽभवत्। यथा केनोपनिषदि शिष्यः पृच्छति—

ओ३म्।

केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति॥

अतः परमाचार्यो ब्रह्मविद्यामधिकृत्य व्याख्याति।

कश्चिद्विद्यार्थी याचत आचार्यम्—उपनिषदं भो ब्रूहीति। व्याख्यान्ते प्रोवाचाचार्यः—उक्ता त उपनिषद्। ब्राह्मीं वाव ते उपनिषदमब्रूमेति।

तस्मिन्युगे व्याख्यानविषयस्य गरिमापि निदर्शितः। केनोपनिषदि भाषणान्ते ब्रह्मज्ञानमाहात्म्यमधिकृत्य प्रोक्तम्—यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति।

कठोपनिषदि यमाचार्यः 'ओ३म्' पदस्य व्याख्यां कृत्वाह—

एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम्।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥

ईदृशैर्वचनैः विद्यार्थिनामुत्साहः संवर्धितः।

ब्रह्मज्ञानस्य रहस्यानि बोधगम्यानि कृतान्युपमामाध्यमेन। बुद्धिशरीरात्मनां परस्परं सम्बन्धं विवेचयता प्रोक्तमाचार्येण—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥

यदा कदाचार्याः चाक्षुषकल्पनायाः प्रयोगं कुर्वन्ति स्म। यथा—आचार्यशिष्ययोः संवादः—

न्यग्रोधफलमत आहरेति। इदं भगव इति। भिन्द्धीति। भिन्नं भगव

इति । किमत्र पश्यसीति । अण्व्य इवेमा धाना भगव इति । आसामङ्गैकां भिन्द्धीति । भिन्ना भगव इति । किमत्र पश्यसीति । न किंचन भगव इति ।

यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति ।

विविधोदाहरणैराचार्य इमं विषयं दशकृत्वोऽबोधयत् ।

उपर्युक्तेन व्याख्यानेन स्पष्टं प्रतीयते यदाचार्याणां वाणी मधुराऽऽसीत् । शिष्यस्य सम्बोधने ते सोम्यपदस्य प्रयोगं कृतवन्तः । शिष्यस्तु भगव-पदेनाचार्यं समबोधयत् ।

शिष्यस्योत्साहसंवर्धनायाचार्यस्य सन्देश आसीत्—उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत । प्रवचनस्यारम्भे स शिष्यं प्रत्याह—सह नौ यशः । सह नौ ब्रह्मवर्चसम् । सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु । मा विद्विषावहै ।

अनेन प्रकारेण शिष्याचार्याणां पारस्परिकभावनाभिरुदात्तं वातावरण-मसृज्यत ।

शिक्षणविधौ तपसः प्रतिष्ठासीत् । भृगुः वारं वारं तपः कृत्वैव ब्रह्मणः स्वरूपमजानात् ।

आचार्याः प्रश्नं पृष्ट्वा विद्यार्थिनां दुर्बोधपदमशुद्धं मतं च ज्ञात्वा विषयप्रतिपादनमकुर्वन् ।

आचार्याणां व्याख्यानेभ्यो बोधं प्राप्य विद्यार्थिनो मनननिदिध्यास-नाभ्यां तस्य परिपोषणं कृतवन्तः ।

सूत्रस्मृतियुगीनः शिक्षणविधिर्मनुकृतैरेभिः श्लोकैः परिचीयते—

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

अध्येष्यमाणां तु गुरुर्नित्यकालमतन्द्रितः।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत्॥
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।
स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यति॥
प्राक्कूलान्पर्युपासीनः पवित्रैरेष पावितः।
प्राणायामैस्त्रिभिः पूतस्तत ॐ कारमर्हति॥ २.७०–७५

अध्ययनारम्भे ओङ्कारविधिरनुपेक्षणीय इति प्रतिपादयन्नापस्तम्बो लिखति—ओङ्कारः स्वर्गद्वारं तस्माद् ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत। विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म।[1]

गुरुणा मधुरा वाणी प्रयोज्येति मनुना निर्दिष्टम्—

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम्।
वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता॥ २.१५९

**अध्यापनसत्रम्**

वैदिकसंस्कृतौ श्रावणमासस्य पूर्णिमातिथावुपाकर्मविधिनाध्यापनारम्भोऽभवत्। तदाप्रभृति पंच मासानध्ययनमक्रियत। पौषपूर्णिमायामुत्सर्जनविधिनाध्यापनं समापितम्।

**अनध्यायाः**

अनध्यायानां सूची गौतम-सूत्रमाध्यमेन देया। 'आकालिका (निर्घात) भूमिकम्पराहुदर्शनोल्काः। स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निषु। अह ऋतौ। विद्युति नक्तं चापररात्रात्। त्रिभागादिप्रवृत्तौ सर्वम्। उल्का विद्युत्समेत्येकेषाम्। स्तनयित्नुरपराह्णे। अपि प्रदोषे। सर्वं नक्तमार्धरात्रात्। अहश्चित् सज्योतिः। विषयस्थे च राज्ञि प्रेते। विप्रोष्य चान्योन्येन सह। संकुलोपाहितवेदसमाप्तिच्छर्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रम्। अमावस्यायां च। द्व्यहं वा। कार्त्तिकी-

---

१. आपस्तम्बे १.१३.६—८

फाल्गुन्याषाढी पौर्णमासी। तिस्रोऽष्टकास्त्रिरात्रम्। अन्त्यामेके। अभितो वार्षिकम्। सर्वे वर्षविद्युत्स्तनयित्नुसंनिपाते प्रस्यन्दिनि संनिपाते त्रिरात्रम्। ऊर्ध्वं भोजनादुत्सवे। प्राधीतस्य च। निशायां चतुर्मुहूर्तम्। नित्यमेके नगरे। मानसमप्यशुचिः। श्राद्धिनामाकालिकम्। अकृतान्न-श्राद्धिकसंयोगे च। प्रतिविद्यं च यान् स्मरन्ति॥

उपर्युक्तसूत्रवर्णनस्य प्रपंचेनैव स्पष्टं प्रतिभाति यदवकाशतालिका पुराऽपि संवर्धनपरासीत्।

बौद्धशिक्षणविधिः

बौद्धशिक्षणविधिर्गौतमेन प्रवर्तितः। स तु प्रायशो व्याख्यानपरः। गौतमस्तु सर्वजनबोधाय सरलशब्दानां माध्यमेन सुग्राह्यविचाराणां परम्परया निगूढमपि तत्त्वमनायासेनैव बोध्यं कर्तुं समर्थतम आचार्योऽभवत्। तस्य व्याख्यानानि प्रभावोत्पादकानि। स्वकीयां शिक्षणपद्धतिं पर्यालोचयन् स प्राह—यथा सागरस्य गाम्भीर्यं शनैः शनैः वर्धते तथैव धर्मशिक्षापि शनैः शनैरवगन्तव्या। पदं पदमेव गच्छन्नर्हन् भवितुं योग्यः। शिक्षा मातृभाषामाध्यमेन ग्रहणीयेति गौतमस्य घोषः।

पारस्परिकविमर्शेन भिक्षूणां ज्ञानसंवर्धनं कारितम्। शिष्यास्तु परस्परं शिक्षका बभूवुः। भिक्षवो व्याख्यानप्रक्रियायै शिक्षिताः। तेऽपि व्याख्यातारो बभूवुः।

अध्ययनक्षेत्रे तर्कबुद्धिः सर्वत्र प्रयोज्येति गौतमादेशः। तेनोपदिष्टम्—पुस्तकेषु प्राप्यते, आचार्यः कथयति, लोके प्रतिष्ठितेयं परम्परा—ईदृशैः मनोभावैः कस्यापि वचनस्य ग्राह्यत्वं न विद्यते। तदेव सत्यं विजानीहि यस्मिन् विषये त्वया स्वयमेव प्रतीतं यत् कुशलमिदमनवद्यमिदं सुखमिदं हितमिदं वा।

मौखिकशिक्षायाः प्रचलनमासीत्। विद्यार्थिनस्तु प्रश्नोत्तरमाध्यमेनात्मनः शङ्कानां परिहारं कुर्वन्ति स्म।

**जैनशिक्षणपद्धतिः**

जैनशिक्षणपद्धतिः प्रथमं विरक्तानां कृतेऽभवत्। इयं प्रायशो बौद्धशिक्षणपद्धतिसमाना वर्तते। महावीरस्वामी जैनसंस्कृतेः सुप्रसिद्धः प्रथमाचार्यो बभूव। तस्मादेव जैनशिक्षणपद्धतेः प्रवर्तनमभूत्। महावीरानुसारं तु शिष्येभ्यस्तथैव शिक्षा दातव्या यथा पक्षिणः शावकेभ्योऽन्नं ददति। व्याख्यां कृत्वैव स्वप्रवचनस्य ग्राह्यता संवर्धनीयेति महावीरस्य मतम्।

परवर्तियुगे शास्त्राणां पाठस्य प्रचलनमभूत्। सूत्राणां वृत्तिः पुनः पुनः पृष्ट्वा बोधनीयेति विधानमासीत्। कण्ठाग्रकरणस्य विधिः पूर्ववत् प्रचलितोऽभवत्। पठितस्य मननं चिन्तनं चापेक्षिते। जैनशिक्षणस्य पंचाङ्गानि सन्ति—वाचना, पृच्छना, अनुप्रेक्षा (मननम्), आम्नायः (कण्ठाग्रकरणम्) तथा धर्मोपदेश इति।

## ब्रह्मचारिनियमाः

भारते विद्यार्थिजीवनं तपोमयं मतम्। तपसा त्यागेन च विद्यार्थिनां चित्तवृत्तयोऽध्ययनमुख्यो भवन्तीति भारतीयानां शाश्वतधारणा। इत्थमेव सांसारिकबन्धनानि—भोगविलासमनोरंजनादीनि विद्याप्राप्तिमार्गे बाधाः। ब्रह्मचर्यशब्दः तस्यैव तपोमयजीवनस्य प्रतीकमस्ति। ब्रह्मचर्यं तु ब्रह्मणः (वेदस्य) प्राप्तये चर्यं (जीवनविधिः) कथ्यते।[1] तपसा ब्रह्म विजिज्ञासस्वेति सिद्धान्तः। तपो ब्रह्मेति।[2] विष्णुपुराणानुसारं तु—

स्वाध्यायसंयमाभ्यां स दृश्यते पुरुषोत्तमः।
तत्प्राप्तिकरणं ब्रह्म तदेतदिति पठ्यते॥ ६.६.१

---

१. ब्रह्म वेदः तदध्ययनार्थं व्रतमप्युपचाराद् ब्रह्म। ब्रह्म चरितुं शीलमस्य यद्वा ब्रह्म तपो ज्ञानं वा चरति अर्जयत्यवश्यम् इति ब्रह्मचारिशब्दस्य व्याख्या।

२. तैत्तिरीयोपनिषदि भृगुवल्ल्यां २

वैदिकयुगस्यादिकालतः विद्यार्थिजीवने तपसः प्रतिष्ठा कृता। तदेव परिलक्ष्याथर्ववेदे प्रोक्तम्—स आचार्यं तपसा पिपर्ति। स देवांस्तपसा पिपर्ति। ब्रह्मचारी समिधा मेखलया श्रमेण लोकांस्तपसा पिपर्ति। तौ रक्षति तपसा ब्रह्मचारी तत् केवलं कृणुते ब्रह्म विद्वान्।

वैदिकयुगे ब्रह्मचारी धरातले शेते स्म, न तूच्चासने। स संगीतनृत्य-परिभ्रमणादिभ्यो दूरोऽभवत्। ख्यातिनिद्राक्रोधात्मप्रशंसासौन्दर्यसुगन्धा-दिभिः स कदापि न वशीकृतः।[1]

उपनिषद्युगे ब्रह्मचर्यं तु तपसः मौनस्यानाशकायनस्यारण्यायनस्य स्वरूपमेव सम्मतम्।[2] भृगुस्तु ब्रह्मज्ञानाय वारं वारमतप्यत।[3] कतिपय-विद्यार्थिनः गुरोः गवां चारणं कृतवन्तः।[4]

वैदिकयुगस्य पश्चात् ब्रह्मचारिजीवनस्य विस्तृतनियमाः सूत्रस्मृति-ग्रन्थेषु दृश्यन्ते। ते नियमाः ब्रह्मचारिणो भोजनमावासं वस्त्रं शयनं तपः शौचं स्वभावं चाधिकृत्य निर्मिताः।

### भोजनम्

ब्रह्मचारी भिक्षान्नं भुक्तवान्। स भिक्षान्नादाचार्यनिर्दिष्टानि वस्तू-न्येवाखादत् भोजनपात्रे स किंचिदपि नात्यजद् भुक्त्वा च पात्रममार्जयत्। स क्षारलवणमधुमांसभोजनं न कृतवान्। भोजनकाले मौनं निर्लोभत्वं च विहिते। बौधायनस्तु विद्यार्थिभ्यो यथेष्टभोजनमात्राया व्यवस्थां कृतवान्।

### आवासः

विद्यार्थी आचार्यगृहे वसति स्म। अन्यत्र निवासस्य व्यवस्था नासीत्। रात्रौ ब्राह्ममुहूर्त्ते उत्थाय स आचार्यपादान् प्रणमति स्म। दिवा स नाशेत।

---

१. गोपथब्राह्मणे २.५—७; २.१ ६

२ प्रश्नोपनिषदि १.२, छान्दोग्ये ८.५

३ तैत्तिरीयोपनिषदि भृगुवल्ल्याम्

४ छान्दोग्ये ५.४.५

रात्रौ शयनात् प्रागेव गुरोः चरणौ धावति स्म। तेनाज्ञप्तः शयनाय गतवान्। तस्याधःशय्या निर्दिष्टैव।

वस्त्रम्

विद्यार्थिनः द्वे परिधाने—उत्तरीयं वासश्च बभूवतुः। प्रारम्भिकयुगे विविधवर्णानां विद्यार्थिनामुत्तरीयं विभिन्नपशूनां चर्मणैव निर्मितम्। उत्तरीयं यज्ञोपवीतवद् धृतम्। वाससा कटिप्रदेशादधोभाग आच्छादितः। ब्रह्मचारिणां वस्त्राणि शरीरालङ्करणाय नाभवन्निति स्पष्टमेव।[1] शरीर-संस्काराय स नित्यमेव स्नानमकरोत्।

तपः

ब्रह्मचारिणस्तपोऽधिकृत्य मनुना निर्दिष्टम्—

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥ २. १६४
मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः॥ २. २१९

हारीतानुसारं तु विद्यार्थी जटी दीर्घनखरोमा भवतु।

स्वभावः

ब्रह्मचारिणा क्षमाशीलेन जितेन्द्रियेण विनयिना परिश्रमशीलेन कर्तव्यपरायणेन कर्मण्येन आत्मविजयिना स्फूर्तिशीलेन क्रोधरहितेन ईर्ष्यारहितेन च भवितव्यम्। कदापि तेनात्मप्रशंसा परनिन्दा वा न कर्तव्या। तेन कटुभाषणं न कर्तव्यम्।

ब्रह्मचारिजीवनविधिमनुशासतापस्तम्बेन निर्दिष्टम्—न प्रेक्षेत नग्नां स्त्रियम्। ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत्। उपानहौ छत्रयान-

---

१ कथं स्यात् शरीरालङ्करणं यतो यमेन निर्दिष्टम्—
दण्डं कमण्डलुं चैव मौञ्जीं च रशनां तथा।
धारयेद् ब्रह्मचर्यं च भैक्षान्नाशी गुरौ वसन्॥

मिति च वर्जयेत्। न स्मयेत। नोपजिघ्रेत् स्त्रियं मुखेन। न हृदयेन प्रार्थयेत्। नाकारणादुपस्पृशेत्।[१]

महाभारतेऽपि विद्यार्थिनस्तपोमयं जीवनं निर्दिष्टम्। यथा—

सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम्।
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत् सुखम्॥

उद्योगपर्वणि ४.०६

परवर्तियुगे महाभारते आरुणिवेदोपमन्यूनामादर्शचरितगाथाः वर्णिताः। आरुणिर्गुरोः कृषिकर्मणि सहायतामकरोत्। वेदो विविधकष्टान्यनुभूयापि गुरुसेवां प्रसन्नमना अकरोत्। उपमन्युस्तु गुरुपरीक्षापीडितोऽन्धः सञ्जातः कूपे पतितश्च।

अपराधी विद्यार्थी दण्डनीय आसीत्, किन्तु कठोरदण्डविधानं नाभवत्। गौतमस्तु कठोरदण्डदायिनमाचार्यमेव दण्डनीयं मन्यते।

## बौद्धानुशासनम्

गौतमबुद्धः विद्यार्थिजीवने कष्टत्वविधानं परिहार्यमिति घोषितवान्। सा तु मध्यमा प्रतिपदा जीवनविधेः नातिसुखकरी न दुःखकरी च। तेन निर्णीतानि दश शिक्षापदानि संक्षेपेणैव भिक्षूणामनुशासनपूर्णजीवनविधिं निदर्शयन्ति। तद्यथा—

(१) पाणातिपाता वेरमणी (२) अदिन्नादाना वेरमणी (३) अब्रह्मचरिया वेरमणी (४) मुसावादावेरमणी (५) सुरामेरयमज्जपमादट्ठाना वेरमणी (६) विकालभोजना वेरमणी (७) नच्चगीतवादितविसूकदस्सना वेरमणी (८) मालागन्धविलेपनधारणमण्डनविभूसनट्ठाना वेरमणी (९) उच्चासयन-महासयना वेरमणी (१०) जातरूपरजतपटिग्गहणा वेरमणी।

बौद्धसंस्कृतौ भिक्षुविद्यार्थिनः समाजे विचरन्ति स्म। तेषां जीवनविधिर्गौतमेन प्रकाशमय उदात्तश्च कृतः। स्वकीयप्रशंसनीयाचरणैः

---

१. आपस्तम्बे १. ७. ३—११।

समाजे प्रतिष्ठां प्राप्य तस्य समाजस्य मार्गप्रदर्शनं भिक्षूणामपि कर्तव्यं निर्धारितम्।

विहारे भिक्षूणां जीवनं सांघिकमासीत्। ईदृशे जीवनविधौ परस्परं सहिष्णुता सहानुभूतिः सहायभावना गुरूणां सेवा नितान्तमपेक्षिता भवन्ति। विहारजीवनस्यादर्शव्यवस्था गौतमेन सर्वाः परिस्थितीः पर्यालोच्य कृतासीत्। तेन विहारेषु भोजनवस्त्रावासस्नानादिकानां समीचीनः प्रबन्धः कृतः।

फाह्यानह्वेनसांगादीनां लेखैर्ज्ञायते यत् परवर्तियुगेऽपि विहारेषु भिक्षूणामनुशासनं जीवनविन्यासश्चानुकरणीये अभवताम्।

## जैनानुशासनम्

जैनशिक्षणविधौ तपसोऽतिमहत्त्वमासीत्। तत्र तपस्तु प्रायः शरीराय कष्टकरमस्ति। दिगम्बरा अनागारा कष्टसहासीत् प्रथमाचार्यस्य महावीरस्य जीवनवृत्तिः। शरीरस्य शुद्धिरपि नापेक्षिता। उपर्युक्तावस्था तु प्रारम्भिकयुगे दृश्यते।

परिवर्तियुगे माणवकानां शिक्षणाय तेषां साधारणतः सुखप्रदसंस्थाः प्रादुर्भूताः। माणवकास्तु भिक्षावृत्त्या प्राप्तं वस्त्रं धृतवन्तः। भिक्षुणीभ्यः चत्वारि वस्त्राणि निर्धारितानि। भोजनाय विद्यार्थिनः भिक्षवो वा याचनां कुर्वन्ति स्म।

## आचार्याणां व्यक्तित्वम्

वैदिकशिक्षणविधौ देवानां व्यक्तित्वानुरूपमाचार्यस्य व्यक्तित्वं प्रतिष्ठितम्। इन्द्राग्निसवितरो देवा आचार्या एव। एषां देवानां सर्वज्ञत्वं चेतनाप्रदानत्वं तमसोऽपाकरणं बुद्धिवर्धनं व्रतस्थापनं च वैदिकसाहित्ये प्रायशो निर्दिष्टानि। आत्मगुणैः तेषां देवानां समाना एवाचार्या अभवन्। आचार्यास्तु मन्त्रद्रष्टारः कवयो बभूवुः। ते पुरुप्रिया आसन्। ऋग्वेदानुसारमेव—

तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ।। ३.८.४

प्रथमाचार्यः पितैवाभवत् । ऋषयस्तु गृहस्थाः स्वपुत्रानपाठयन् । पुत्रैः सह बहवो ग्रामीणबालका अपि तत्रागत्य पठन्ति स्म । स ऋषिर्न केवलं स्वपुत्राणामपितु सर्वेषां बालकानां पिता बभूव । इदमेव परिलक्ष्य धारणा भूता—

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः ।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः ।।[१]

अनेन प्रकारेण मातृत्वमपि सिद्धमाचार्यस्य । स तु स्वयमेव ब्रह्मचारी बभूव । बहूनामाचार्याणां जीवनं तपोमयमभवत् ।[२]

आचार्यस्तु वेदाध्यापनं धनप्राप्तये नामन्यत । सूर्यो यथा प्रकाशं ददाति, नदी जलं ददाति तथैवाचार्यो विद्यार्थिभ्यो ज्ञानं ददाति । कथितं च शतपथे—प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनोहरहरर्थान् साधयते सुखं स्वपिति ।[३]

उपनिषत्सु बहूनामाचार्याणां व्यक्तित्वं निदर्शितम् । पिप्पलादस्तु नाम्नैव तपस्वी प्रतीतः । तस्य जीवनविधौ वैभवानां स्थानं नासीत् । सत्यनिष्ठ आसीत्स आचार्यो यः शिष्यमशिक्षयत्—सत्यं वद, धर्मं चर । स्वाध्यायान्मा प्रमदः । यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि । शिक्षा इमास्तेनाचार्येण निजव्यक्तित्वे प्रतिष्ठापिता इति निश्चितमेव । कश्चिदाचार्यो निजव्यक्तित्वस्य विश्लेषणमेव कुर्वन्नाह—

'आ मा यन्तु ब्रह्मचारिणः । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । श्रुतं मे गोपाय । आवहन्ती । वितन्वाना । कुर्वाणाऽ-

---

१. अथर्ववेदे ११.५.३
२. अथर्ववेदे ११.५.१६; शतपथे १४.१.१.२८
३. शतपथे ११.५.७.१

चीरमात्मनः। वासांसि मम गावश्च। अन्नपाने च सर्वदा।'
आचार्योऽकामयत—

यथापः प्रवता यान्ति। यथा मासा अहर्जरम्।
एवं मां ब्रह्मचारिणः। धातरायन्तु सर्वतः॥
प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व।[1]

शिष्याचार्ययोर्दृढैकत्वं समुपस्थितमनेन वाक्येन—

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु।

रामायणमहाभारतादिषु तत्कालीनप्रख्याताचार्याणां—भरद्वाजागस्त्यवसिष्ठवाल्मीकिव्यासद्रोणपरशुरामादीनां व्यक्तित्वं तु विदितं सर्वेषाम्। अगस्त्यमधिकृत्य रामायणे निगदितम्—

अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा।
दक्षिणा दिक् कृता येन शरण्या पुण्यकर्मणा॥
ततः शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत्।
औदार्येणावगच्छामि निधानं तपसामिमम्॥[2]

रामोऽपि महर्षीणां दर्शनेनात्मानं बहु मन्यते स्म।

सूत्रस्मृतिपरम्परानुसारमाचार्यस्य व्यक्तित्वं पूर्ववदुच्चतरं दृश्यते। आचार्यस्तु शिष्याणामध्यापनायात्यधिकं श्रमं करोति स्म। तस्य जीवनविधिर्ब्रह्मचर्यनिष्ठः सन् विद्यार्थिभ्य आदर्श आसीत्। स स्वशरीरं नालङ्कृतं भूषितं वा कृतवान्। स्वयमप्यर्धरात्रत उत्थाय स्वाध्यायमकरोत्। ब्राह्ममुहूर्त्ते सोऽध्यापनं कृतवान्। पश्चादपि नाशेत। सोऽधमपुरुषैः सह सम्बन्धं नाकरोत्। व्यर्थकार्याणि तृणभंजनादीनि नाकरोत्।

परवर्तियुगीनाचार्याणां वर्णनं रघुवंशे कादम्बर्यां च दृश्यते। जाबालिवसिष्ठादीनामादर्शः तत्कालीनर्षीणां समक्षमविद्यत।

---

१. तैत्तिरीयोपनिषदि शिक्षावल्ली ४
२. अरण्यकाण्डस्य एकादशद्वादशसर्गतः।

ख्रीष्टस्य पश्चादष्टमे शतके शङ्कराचार्यस्य प्रादुर्भाव उल्लेखनीयः। शङ्करस्य प्रतिभाऽप्रतिमासीत्। अष्टमे वर्षे एव स वेदादिषु परमप्रावीण्यं प्राप्तवान्। बाल्य एव स प्रव्रजितः। ततः परं जीवनपर्यन्तं स कर्मयोगी बभूव। अद्वैतवेदान्तस्य प्रकाशस्तम्भरूपा महामठा भारतस्य चतसृषु दिक्षु तेन प्रतिष्ठापिताः। तस्य दिग्विजयः सुविदित एव। तस्य शास्त्रविवादा दर्शनग्रन्थानां भाष्याणि च प्रख्यातानि।[1]

बौद्धाचार्याणां व्यक्तित्वं बुद्धस्य व्यक्तित्वानुरूपमेव दृश्यते। गौतमेऽदम्य उत्साहः, कल्पनातीता कर्मण्यता, आर्जवम्, प्रत्युत्पन्नबुद्धिः, शङ्कासमाधानस्यातिशयक्षमता चावर्तन्त। राजकुमार आसीत् बुद्धः। तस्य सम्पर्केण सर्वे प्रभाविताः सन्तो विचारयितुमारब्धवन्तः—कीदृशमिदं ज्ञानं येन गौतमस्येदृश्युच्चता भव्यता वा।

मानवतां प्रति गौतमस्यापरिमेया सहानुभूतिरासीत्। स सार्वजनीनहितायाऽसंख्यान् शिष्यान् देशेषु विदेशेषु च प्रेषितवान् तानादिशच्च— 'विश्वस्य सर्वेभ्यः प्राणिभ्यो दयाभावं धारयत। सर्वेषां कल्याणाय, लाभाय, मङ्गलाय च चेष्टध्वम्। तदेव जीवनदर्शनं विज्ञापयत यदादौ मध्येऽवसाने च कल्याणमयं वर्तते।'

गौतमस्य वाणी मधुरासीत्। धीर एव विकारहेतौ सति स चित्तविक्रियां नान्वभवत्। शत्रवोऽपि सस्नेहं वर्तिताः तस्य शरणं ययुः। इत्थं भूतेऽपि तस्यानुशासनमतिसफलमासीत्।

परवर्तियुगेऽपि बहवो बौद्धाचार्याः स्वयुगेषु चरित्रज्ञानयशोबलेन च सर्वत्र प्रतिष्ठिताः। तेषां व्यक्तित्वप्रभयैवाऽऽकृष्टा विद्वांसो ज्ञानपिपासवो विदेशेभ्योऽपि समागताः।

जैनाचार्याणां व्यक्तित्वं महावीरस्य व्यक्तित्वानुरूपं विकसितम्। सर्वेषां हिताय ते प्रयत्नशीला बभूवुः। सरलजीवनं तैः स्वीकृतम्। उपाध्यायाः

---

१. सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

सम्यग्ज्ञानदर्शनचरित्रैः समायुक्ता बभूवुः। आचार्याः समाजं दर्शनज्ञान-वीर्यचरित्रतपोभिश्च सन्धारयितुं नियुक्ताः।

## गृहस्थाश्रमः

विवाहसंस्कारस्य पश्चात् स्नातका गृहस्था बभूवुः। भारते वैदिक-कालत एव गृहस्थानां जीवनविधिर्विविधप्रकारैरुत्तरदायित्वैः समायुक्तो दृश्यते। प्रथमं तावत्पंचमहायज्ञानां स्थानं वर्तते। एषां माध्यमेन गृहस्थाः देवतां मानवतां च प्रति कर्तव्यं सम्पादितवन्तः।

### महायज्ञाः

यज्ञस्तु त्यागवाचकः शब्दः। महायज्ञेषु सर्वेषां पोषणाय विविध-प्रकाराणां त्यागादीनां विधानं दृश्यते। अस्मै प्रयोजनाय ब्रह्मचर्याश्रमे गृहीतानि विद्या आचारः स्वास्थ्यबलं च सोपयोगानि बभूवुः। एभिरेव गृहस्थोऽधिकाधिकं धनं प्राप्नोत्, तेन च यज्ञादिकं कर्म कृतवान्।

महायज्ञानां संक्षिप्तस्वरूपमीदृशं दृश्यते—

पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः।
एते पंच महायज्ञा ब्रह्मयज्ञादिनामकाः॥

मनुना प्रोक्तम्—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥ ३.७०

**ब्रह्मयज्ञः**

ब्रह्मयज्ञेन स्वाध्यायप्रवचनयोरभिव्यक्तिर्भवति। ब्रह्मचर्याश्रमप्रकरणेन स्पष्टं प्रतिभाति यत् भारते सदैवाचार्या निःशुल्कमेव वेदवेदाङ्गानां शिक्षां ब्रह्मचारिभ्यो ददुः। तेषां कृते एव ब्रह्मयज्ञस्याध्यापनपरं स्वरूपम्। स्वाध्यायपरा एवाचार्या आसन्। अनेन प्रकारेण प्राचीनभारते दीन-हीनानामपि विद्यार्थिनां शिक्षा समभवत्। ब्रह्मयज्ञसम्पादनायैवाचार्या विद्यार्थिसमूहं समीहन्ते स्म। शतपथानुसारं ब्रह्मयज्ञेन स्वर्गप्राप्तिर्भवति।

 

सर्वोच्चोऽयं यज्ञः। देवा ब्रह्मयज्ञेन प्रीणिताः स्वाध्यायिभ्यः विविधानभ्युदयान् ददति। स्वाध्यायविषयास्तु वेदावेदाङ्गेतिहासपुराणादय आसन्। ब्रह्मयज्ञे व्यक्तिगताभ्युदयः समष्टिकल्याणं चान्तर्भूते।

न केवलमार्याः, अपि त्वार्येतरा अपि स्वाध्यायं कुर्वन्ति स्म। रामायणानुसारं यातुधानानां स्वाध्यायः प्रसिद्धः। ब्रह्मयज्ञस्य प्रतीकमधुना सन्ध्याविधौ गायत्रीमन्त्रपाठ एव वर्तते।

### दैवयज्ञः

दैवयज्ञे देवप्रीत्यर्थं स्तुतिः हवनादिको यज्ञश्च कृतौ। वैदिककालीना आर्या देवानां कृपयैवात्माभ्युदयं मन्यन्ते स्म। यज्ञमाध्यमेन ते देवानां सान्निध्यमनुभूतवन्तः। देवसान्निध्येन मानवानां व्यक्तित्वविकासस्य सम्भावनासीत्। वैदिकधारणानुसारं देवास्तु कर्मण्याः सत्यपरायणा उदाराः पराक्रमसम्पन्नाः सहायशीलाः सन्ति। मानवा अपि देवसान्निध्येनैषां गुणानामात्मनि प्रतिष्ठां कृतवन्तः।

वैदिकगृहेषु सायं प्रातः हवनमग्निहोत्रविधानेनाक्रियत। हवने प्रायशोऽग्नेः स्तुतिः कृता। मध्याह्ने सोमयज्ञः सम्पादितः। अन्येभ्यो देवेभ्यो विविधा यज्ञा विहिताः।

### पितृयज्ञः

पितरस्तु देवा एव। तेभ्यस्तर्पणविधानं प्रतिष्ठापितम्। शतपथब्राह्मणानुसारं पितॄणां परितृप्तये स्वधया सह सोमहविर्जलादिकं समर्पितम्। पितृयज्ञेन स्वर्गलाभस्य सम्भावना मता।[१] तस्मिन् युगे पितृभ्यो वंशजानां रक्षासहायतादेराशा कृता।

पौराणिकयुगे प्रतिदिनमन्नजलदुग्धफलमूलादिभिः श्रद्धया श्राद्धकरणं विहितम्। अयं नित्यश्राद्धविधिः। पितृयज्ञस्य माध्यमेन पितृणामुच्चादर्शः प्रोत्साहनायैव भवतीति निःसन्दिग्धमेव। पितृकल्पनया मरणाद्भयं दूरमभवत्।

---

१. पितृयज्ञेन सुवर्गं गमयति। तै० ब्रा० १६८

भूतयज्ञ:

'सर्वे सुखिनः सन्तु' इति भारतीयानां सनातनधारणा। भूतयज्ञेन सर्वेषां प्राणिनां परितृप्तये नित्यमेव बलिरदीयत। उपनिषत्स्वग्निहोत्रमाध्य-मेन सर्वेषां प्राणिनां भरणपोषणयोः योजना कृता—

'यथेह क्षुधिता बाला मातरं पर्युपासते।
एवं सर्वाणि भूतान्यग्निहोत्रमुपासते॥'[1]

संविभागो हि भूतानां सर्वेषामेव दृश्यते।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना॥ वनपर्वणि २.५३

मनुः बलिवैश्वदेवमाध्यमेन सर्वेषां परितृप्तये बलिविधानमकरोत्। वैश्वदेवविधौ सोमाग्निविश्वेदेवकुहूप्रजापतिद्यावापृथिवीभ्य आहुतिः कृता। पश्चात् यमेन्द्रवरुणसोमेभ्यः सानुगेभ्यो बलिः समर्पितः। मरुद्भ्यो बलि-र्द्वारि, अद्भ्योऽप्सु, वनस्पतिभ्यो मुसलोलूखले च क्षिप्तः। दिवाचरेभ्यो भूतेभ्यो बलिर्दिने नक्तंचारिभ्यो रात्रौ च प्रदत्तः। सर्वात्मभूतये बलिः पृष्ठवास्तुनि पितृभ्यश्च दक्षिणतः प्रदत्तः। भूतयज्ञस्य माहात्म्यं निष्कर्ष-यता मनुना प्रोक्तम्—

शुनां च पतितानां च श्वपचां पापरोगिणाम्।
वायसानां कृमीणां च शनकैर्निर्वपेद् भुवि॥
एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति।
स गच्छति परं स्थानं तेजोमूर्तिपथर्जुना॥ ३.९२-९३

भूतयज्ञस्य दार्शनिकपक्षः यजमानमुखेन निर्दिष्टः—

भूतानि सर्वाणि तथान्नमेतदहं च विष्णुर्न ततोऽन्यदस्ति।
तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम्॥
चतुर्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसंघाः।
तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवन्तु॥

---

१. छान्दोग्य ५.२४.५

भागवतपुराणे भगवान् स्वयमेव प्रोक्तवान्—

सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम्।
भूरात्मा सर्वभूतानि भद्रपूजापदानि मे॥ ११. ११. ४२

**अतिथियज्ञः**

वैदिककालादारभ्य सदैव हि भारतेऽतिथियज्ञः सुप्रतिष्ठितोऽभवत्। ऋग्वेदानुसारं तु 'केवलाघो भवति केवलादी।' पुरुषास्तु सहस्रपोष्या भवितुमिच्छन्ति स्म। अतिथिपूजनस्योत्कृष्टत्वमथर्ववेदस्यैभिर्वाक्यैरवगम्यते—यो विद्याद् ब्रह्म प्रत्यक्षम्। यद्वातिथिपतिरतिथीन्प्रतिपश्यति देवयजनं प्रेक्षते। स य एवं विद्वान् न द्विषन्नश्नीयान्न द्विषितोऽन्नमश्नीयान्न मीमांसितस्य न मीमांसमानस्य। सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति। सर्वो वा एषोऽजग्धपाप्मा यस्यान्नं नाश्नन्ति। इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति—पयः, रसं, ऊर्जां, स्फातिं, प्रजां, पशुं, कीर्तिं, यशः, श्रियं, संविदं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति। एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात् पूर्वो नाश्नीयात्। स य एवं विद्वान् क्षीरमुपसिच्योपहरति यावदग्निष्टोमेनेष्ट्वा सुसमृद्धे नावरुन्द्धे तावदेनेनावरुन्द्धे। स य एवं विद्वानुदकमुपसिच्योपहरति प्रजानां प्रजननाय गच्छति प्रतिष्ठां प्रियः प्रजानां भवति। निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद। उच्छ्रिष्टं निधनम्। निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद। आप्नोतीमं लोकमाप्नोत्यमुम्। ज्योतिष्मतो लोकान् जयति य एवं वेद।[1]

उपनिषत्सु पूर्ववदतिथिसत्कारः प्रतिष्ठितः। कठोपनिषदनुसारं तु—

आशाप्रतीक्षे सङ्गतं सूनृतां चेष्टापूर्ते पुत्रपशूंश्च सर्वान्।
एतद् वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे॥

महाभारतानुसारमतिथियज्ञस्य पञ्चाङ्गिनी दक्षिणा—

चक्षुर्दद्यान्मनोदद्याद्वाचं दद्याच्च सूनृताम्।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः॥ अनुशासनपर्वणि ७.६

---

१. अथर्ववेदे ९.६

शिलोञ्छवृत्तिकोऽपि ब्राह्मणोऽतिथियज्ञं करोत्विति मनुना निर्दिष्टम्। अतिथिः कालेऽकाले वाऽऽगच्छेत् तस्मै भोजनं दातव्यमेव। यतः—धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम्। मनुस्तु सर्ववर्णानामतिथीनर्चितुमादिदेश—

आसनाशनशय्याभिरद्भिर्मूलफलेन वा।
नास्य कश्चिद्वसेद् गेहे शक्तितोऽनर्चितोऽतिथिः॥ ४.२९

मनुनाऽऽतिथ्यस्वरूपं विधिवत् निर्धारितम्। तद्यथा—

आसनावसथौ शय्यामनुव्रज्यामुपासनाम्।
उत्तमेषूत्तमं कार्यं हीने हीनं समे समम्॥ ३.१०७

बौद्धसंस्कृतावपि विशेषमहत्त्वमतिथिसत्कारस्य दृश्यते। विहारेषु नित्यमेवातिथयो भिक्षवः समागताः। तेषां सत्कारार्थं विधानानि गौतमेन स्वयमेव रचितानि। बौद्धधर्मानुयायिनो गृहस्थाः पुण्यलाभायापि भिक्षूणामातिथ्यं कुर्वन्ति स्म। जैनसंस्कृतावपि सामान्यतोऽतिथिसत्कारस्य विधानं पूर्ववत् प्राप्यते।

अतिथियज्ञस्य भारतीयसांस्कृतिकाभ्युत्थाने महान् योगो वर्तते। असंख्या विद्वांसो महर्षयश्च भोजनवस्त्रावासादीनां चिन्ताभ्यो विनिर्मुक्ता ज्ञानविज्ञानदर्शनयोगादिप्रवृत्तिषु सर्वथा संलग्ना बभूवुः, यतो गृहस्थानामतिथयो भूत्वा ते सर्वाणि वस्तूनि सादरं प्राप्नुवन्। गृहस्था अपि स्वल्पदिनानां श्रमेणार्जितानि वस्तूनि प्रदाय तेभ्यो महर्षिभ्यश्चिरकालतपोभिरर्जितज्ञानदर्शननिधिं प्राप्तवन्तः। भारतीयसंस्कृतावाश्रमव्यवस्थाया मूलस्तम्भोऽयमतिथियज्ञः।

## आह्निकम्

गृहस्थस्तु रात्रेरन्तिमप्रहरे ब्राह्ममुहूर्ते वा जागरांचकार। ततः प्रभृति तस्य दिनस्यारम्भोऽभवत्। ब्राह्ममुहूर्ते स पवित्रविचारैर्मानसशुद्धिमकरोत्। तस्य पश्चात् शौचदन्तधावनस्नानसन्ध्यातर्पणपंचमहायज्ञा-

ग्निहोत्राणि कृतवान्। मध्याह्ने भोजनमकरोत्। पश्चात् जीविकोपार्जनाध्ययनाध्यापनानि सम्पादितवान्। सन्ध्यासमयः सन्ध्यादानशयनेभ्य आसीत्। इदमेवाह्निकमधिकृत्य देशकालानुसारं नियमाः प्रस्तुताः।

प्रातःकालीनसच्चिन्तनेनाभिनवोत्साहस्य संवर्धनं भवति। गृहस्थस्तु धर्मार्थौ चिन्तितवान्। आध्यात्मिकप्रवृत्तिषु चित्तस्याभिनिवेशाय जगतो जन्ममरणात्मकानि कष्टानि प्रतिदिनं प्रातःकाले चिन्तनीयान्येव निर्णीतानि।[1]

## शौचम्

शौचं नाम धर्मादिपथा ब्रह्मायतनं श्रियोऽधिवासो मनसः प्रसादनं देवानां प्रियं शरीरे क्षेत्रदर्शनं बुद्धिप्रबोधनं चेति भारतीया धारणा। मनुप्रोक्तं शौचविधानं सर्वेषां स्वास्थ्यसंवर्धनायैव।[2] अनेन विधानेन वायुजलाग्नीनामशुद्धिर्वर्जिता।

मुखशुद्धये दन्तधावनं निर्धारितम्। दन्तधावनकाष्ठस्याकारप्रकारौ व्याख्यातौ। सूर्योदयात्प्रागेव दन्तधावनं विधेयमिति व्यवस्था। दन्तधावनविधौ मौनावलम्बनं श्रेयस्करं मतम्। भोजनस्य पश्चादपि दन्तधावनेन मुखशुद्धेर्वैज्ञानिकं विधानं प्रतिष्ठितम्।

दन्तधावनस्य पश्चात् स्नानमक्रियत। स्नानं विना न किमपि धार्मिककृत्यं सम्पादनीयमिति व्यवस्थासीत्। केन विधिना स्नातव्यं कस्मिन् जले स्नातव्यं कदा वा स्नातव्यमिति धर्मशास्त्रायुर्वेदानुसारं व्यवस्थापितम्। स्नानकाले वैदिकमन्त्राणां पाठोऽपि कृतः। जले तिष्ठता देवर्षिपितृभ्यः तर्पणं कृतम्।

## सन्ध्यादिकम्

स्नानस्य पश्चात् सन्ध्या कृता। ततः परं सायं प्रातः हवनविधानमासीत्। तस्य पश्चात् स्वाध्यायः प्रारब्धः। स्वाध्यायपर्यन्तं कार्य

---

१. मनुस्मृतौ ४.९२

२. मनुस्मृतौ ४.४५—५२; ५.१३६ – १३९

दिवसस्य प्रथमप्रहरे समाप्तम्। तस्य पश्चात् मध्याह्नपर्यन्तं जीविकोपार्जनमक्रियत। अपराह्णे पंचमहायज्ञानां समारम्भ आसीत्। अतिथिभ्य आश्रितजनेभ्यश्च भोजनं प्रदाय स स्वयमेव भुक्तवान्। भोजनस्याल्पत्वे सति स स्वयमेव पत्न्याऽपत्यैश्च सह निराहारो भवतु, किन्तु दासेभ्यो भोजनं ददात्वेवेति नियम आसीत्।

**भोजनविधिः**

प्रसन्नमनाः प्रक्षालितहस्तपादमुखादिरप आचम्य गृहीतशोभनासनः पवित्रे रमणीये च वातावरणे भोजनं कुर्यादिति विधानम्। भोजनविधिमधिकृत्य धर्मशास्त्रेषु बहुला व्याख्या। तद्दिङ्मात्रनिर्देशो यथा—

पात्रेष्वर्थानुरूपेषु पुत्रभृत्यात्मजैः सह।
भूमौ पात्रं प्रतिष्ठाप्य मौनेनान्नं तु भोजयेत्॥
पवित्रपाणिः पुण्यं च लभेत् तत्राघमर्षणम्॥
पूजयेदशनं नित्यमद्याच्चेत्तदकुत्सयन्।
दृष्ट्वा हृष्येत् प्रसीदेच्चाप्यभिनन्देच्च सर्वशः॥

मनुस्मृतौ २.५४

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम्।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्तथा॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनः।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुंचति॥

विष्णुपुराणे ३.११.८७

न भुंजीताघृतं नित्यं गृहस्थो भोजनं स्वयम्।
पवित्रमथ हृद्यं च सर्पिराहुरघापहम्॥
एकवस्त्रो न भुंजीत कपाटमपिधाय च।
भूमौ चानन्तरीकृत्य भिन्नपात्रे न चाशनम्॥

यथा जलं निर्गमनेष्वपेयं नदीगतं तत्पुनरेव पेयम्।
तथान्नपानं विधिपूर्वमागतं द्विजातिपात्रान्तरितं न दुष्यति॥

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मविकर्तिनः ॥

मनुस्मृतौ ४.२१८

परपाकरुचिर्न स्यादनिन्द्यामन्त्रणाद्दते ॥

याज्ञवल्क्ये १.११२

लशुनं गृंजनं चैव पलाण्डुं कवकानि च ।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च ॥ मनुः ४.५

मांसमद्यादिसेवनमधिकृत्य च तत्र नियमा विहिताः ।

रात्रिकृत्यम्

शयनसम्बन्धिनो वैज्ञानिकनियमा विष्णुपुराणे निर्दिष्टाः —

कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही ।
गच्छेदस्फुटितां शय्यामपि दारुमयीं नृप ॥
नाविशालां न वा भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम् ॥
प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥ ३.११.१०८–११०

शयनात्प्राक् रात्रिसूक्तस्य जपो विहितः । विष्णुनमस्कारेण सहागस्त्य-माधवमहाबलिमुकुन्दकपिलास्तीकादीनां स्तुतिरक्रियत । शिरोभागे मंगलघटो जलपूर्णः स्थापितः, वरुणविषयकमन्त्रैः रक्षणं चात्मनः कृतम् ।

रात्रेर्द्वितीयप्रहरात्प्रारभ्य तृतीयप्रहरपर्यन्तं शयनीयम् । दिवास्वप्नस्तु निषिद्ध एव गृहस्थेभ्यः ।

## कर्मण्यता

ब्रह्मचर्याश्रमे विद्यार्थिनः गृहस्थेभ्यः समाजेभ्यो वात्मार्थमपेक्षितानि सर्वाणि वस्तूनि प्राप्तवन्तः । स्वभावत एव ते समाजस्योपकारवृत्तिमेवात्माभ्युदयाय कारणं मन्यन्ते स्म । ईदृशस्य सहायशीलस्य समाजस्यालङ्कारो

भवितुमेव तेषां स्वाभाविकी प्रवृत्तिरासीत् प्राचीनयुगे। विद्यार्थिनो यदा गृहस्थाश्रमे प्रविष्टाः तदा समाजं प्रति निजोत्तरदायित्वं परिपालयन्ति स्म।

वैदिकयुगे गृहस्थानां समृद्धेः प्रथमोपयोगो यज्ञाय सर्वेषां भरणपोषणाय चासीत्। सततोद्योगैः समृद्धिमन्तो भवितुकामाः ते वैदिकयुगीना दृश्यन्ते।[१] आत्मसमृद्धये ते देवानां सहायतां प्राप्तुकामाः नित्यमेव श्रेष्ठस्तुती रचितवन्तः। सहस्रपोष्यो भवितुं तेषां कामनाऽपि श्रमपरायणतां द्योतयति। कर्मण्यतामधिकृत्यैव तेषां कल्पनासीत्—

ऋतं सत्यं तपो राष्ट्रं श्रमो धर्मश्च कर्म च।
भूतं भविष्यदुच्छिष्टे वीर्यं लक्ष्मीर्बलं बले॥
समृद्धिरोज आकूतिः क्षत्रं राष्ट्रं षडुर्व्यः॥

अथर्ववेदे ११.७.१७-१८

जीवनपर्यन्तं ते कर्मण्यशरीरं धारयितुं कामयमानाः प्रार्थितवन्तः—

यावत् तेऽभिपश्यामि भूमे सूर्येण मेदिना।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम्॥ अथर्ववेदे १२.१.३३

वैदिकार्याणां समृद्धिरार्जवं च जीवन-विन्यासस्य स्पृहणीये बभूवतुः। जीवनसौरभ्यं तेषां निदर्शनीयमेव—

इहैव ध्रुवा प्रतितिष्ठ शालेऽश्वावती गोमती सूनृतावती।
ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय॥

एमां कुमारस्तरुण आ वत्सो जगता सह।
एमां परिस्रुतः कुम्भ आ दध्नः कलशैरगुः॥

पूर्णं नारि प्र भर कुम्भमेतं घृतस्य धारामम‍ृतेन सम्भृताम्।
इमां पातॄनमृतेना समङ्ग्धीष्टापूर्वमभि रक्षात्येनाम्॥[२]

---

१. ऋग्वेदे १.४८ १—१६

२. अथर्ववेदे ३.१२

उपनिषद्युगे गृहस्थानां जीवनं ऋषित्वसमन्वितमासीत्। तद्यथा—कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतानि, अन्यत्र तीर्थेभ्यः।[१] तदा गृहस्थस्य कामना-ऽऽसीत्—स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देव धारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। कुर्वाणाऽचीरमात्मनः। वासांसि मम गावश्च। अन्नपाने च सर्वदा।[२] ईशोपनिषदि च 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' निर्दिष्टम्।

महाभारते गृहस्थजीवनस्य समृद्धिशालिता प्रशस्ता।[३] गीतायां कर्म-योगस्यादर्शः मानवतां कर्मपरायणां निर्मातुमेवोपदिष्टः। तदनुसारं 'कर्म ज्यायो ह्यकर्मणः'।

मनुना चतुर्विधानां गृहस्थानां वर्णनं कृतम्—ज्ञाननिष्ठाः, तपोनिष्ठाः, स्वाध्यायनिष्ठाः, कर्मनिष्ठाश्च। तेषु ज्ञाननिष्ठा एव मनुना सर्वोच्चं प्रतिष्ठा-पिताः। मनुस्तु ब्राह्मणानां जीविकोपार्जनार्थं कञ्चिदपि श्रमं व्यवसायं वा समीचीनं न मन्यते। पौरोहित्यं विगर्हितमेव। कृषिपशुपालनादिकं न स्वीकरणीयम्। अयाचितदानमेव गृहस्थैर्ग्राह्यम्। यदि स दानं न प्राप्नोतु तर्हि शिलोञ्छवृत्त्या जीविकोपार्जनं कुर्यात्। तेन ब्राह्मणेभ्यः ऋतामृतादीनां वृत्तीनां निर्देशः कृतः। स्पष्टमेव तेन निर्दिष्टम्—

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः।
अक्लेशेन शरीरस्य कुर्वीत धनसंचयम्॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्॥

---

१. छान्दोग्ये ८.१५.१
२. तैत्तिरीये शिक्षावल्ल्याम् ४.१
३. शान्तिपर्वणि ८.२४

ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥[1]

मनुस्मृतौ ३. २-५

ब्राह्मणगृहस्थस्तु स एव सर्वश्रेष्ठो योऽश्वस्तनिकः।[2] अनेन प्रकारेण मनुः गृहस्थाश्रममपि तपोमयमेव कर्त्तुमियेष।

उपर्युक्तनिदर्शनेन प्रतिभाति यत् मनुना प्रणीतोऽयं गृहस्थजीवनविन्यासो नास्ति स्पृहणीयः। अस्मिन् जीवने सन्तोष एव परमं धनं विद्यते। अयं मनुमार्गो वैदिकसंस्कृतिपथात् दूर एव वर्तते। मनुमार्गः परवर्तियुगेऽपि सिद्धान्ततः सर्वदा प्रतिष्ठितः, किन्तु वैदिकजीवनविधिः विविधधनधान्यसम्पन्नः सन् कदापि न परित्यक्तः। पौराणिकमतानुसारमिह भारते गृहस्थानां तपस्विजीवनविधिः समृद्धजीवनविधिर्द्वावपि सदा प्रतिष्ठितौ। अस्यां दशायां पुराणेषु स्थाने स्थाने धनसमृद्धेर्निन्दा वर्तते। अन्यथा धनस्य धर्मसम्पादकत्वमधिकृत्य प्रशंसा कृता। भागवतानुसारम्—

यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा।
धनेनापीडयन् भृत्यान् न्यायेनैवाहरेत् क्रतून् ॥ ७. १७. ५१

यदि शिलोञ्छवृत्त्या जीविका न भवेत्तर्हि यज्ञाध्यापनैः धनार्जनं योग्यम्। शाश्वतोऽयं विचारो महर्षिभिः कृतः—

अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान्।[3]

## गृहस्थाश्रमस्य श्रेष्ठत्वम्

भारते सुदूरप्राचीनकालत एव गृहस्थाश्रमस्य वैदिकसंस्कृतौ श्रेष्ठत्वं सम्मतम्। तद्यथा महाभारते निगदितम्—

अस्य काव्यस्य कवयो न समर्था विशेषणे।
साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥ आदिपर्वणि २. ३६०

---

१. सत्यानृतं तु वाणिज्यम्। सेवा श्ववृत्तिः ॥ मनुस्मृतौ ३. ६
२. मनुस्मृतौ ३. ७, भागवते ७. ११. १६
३. महाभारतेऽनुशासनपर्वणि ६१. १६

मनुः गृहस्थस्य शेषाश्रमाणां भरणपोषकत्वं परिलक्ष्य प्राह—

यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्।
गृहस्थेनैव धार्यन्ते तस्माद् ज्येष्ठाश्रमो गृही॥

वसिष्ठोऽपि मनुं समर्थयन्नेव प्रोक्तवान्—

यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम्।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षवः॥

कालिदासः गृहस्थाश्रमस्य प्रशस्तौ प्रस्तुतवान् सर्वोपकारक्षम आश्रमोऽयम्।[1]

भारतीयेतिहासपुराणकाव्येषु गृहस्थानां बहवश्चरितगाथा लभ्यन्ते, याभिः तेषां सर्वोत्कृष्टत्वं प्रत्यक्षं भवति। भागवतानुसारं गृहस्थोऽपि निष्काम-कर्मयोगेन परमपदं तथैव प्राप्तुं शक्नोति यथा संन्यासी। इदं सर्वश्रेष्ठत्वं सिद्धमस्ति तादृशां गृहस्थानां येषां गृहस्थधर्मः संन्यासादपि कठिनतरः। अन्यथा यथा भागवते प्रोक्तम्—

यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम्।
तृप्यन्ति नेह कृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत धीरः॥
७. ९. ४५

गृहमेधिनामीदृशीं परिस्थितिं परिलक्ष्य बहवो जनाः ब्रह्मचर्याश्रमं न त्यक्तुकामा नैष्ठिकब्रह्मचर्यं स्वीकृतवन्तः। गृहस्था भूत्वाऽपि यथाशीघ्रं गृहस्थाश्रमं परित्यज्य पुराऽसंख्या विद्वांसो वानप्रस्था एवाभवन्।

## वानप्रस्थाश्रमः

गृहस्थाश्रमस्य श्रेष्ठत्वे सत्यपि कथं तस्य त्यागो विधेय इति प्रश्न आधु-निकयुगे साधारण एव। मानवजीवनस्योद्देश्यं मोक्ष एव। तस्य सिद्धये

१. रघुवंशे ५. १०

गृहस्थाश्रमस्य साधकत्वं सन्देहास्पदं मतं मनीषिभिः। यथा पूर्वमेव कथितं गृहस्थाश्रमोऽन्येषां भरणाय श्रेष्ठः, किन्तु तस्मिन्नाश्रमे गृहस्थस्यात्मविकासायावसरः स्वल्प एवासीत्। न त्वाधुनिकानां समक्षं मोक्षस्येषदभिप्रायो विद्यते। अतएव वानप्रस्थस्योपयोगितापि न दृश्यतेऽधुना।

## गृहस्थाश्रमस्य त्यागः किम् ?

गृहस्थजीवने वैदिकमहर्षिभिः कोऽपि दोषोऽभावो वा दृष्टो यतस्ते यज्ञदर्शनस्यारण्यकभागं नगरे ग्रामे वा न पठन्ति स्म। गृहस्था अपि तेषां स्वाध्यायान्निवारिताः। केवलमरण्यवासिन एवारण्यकाध्ययनस्याधिकारिणो मताः। अनेन प्रकरणेन स्पष्टं प्रतिभाति यत् ज्ञानप्राप्तये वनवासस्य महत्त्वं स्वीकृतम्, ग्राम्यजीवनस्य तस्यां दिशायां हीनत्वमपि प्रतिपादितम्।

कालान्तरे स्वर्गादपि गरीयान् मोक्षो विज्ञातः। वैदिकसंस्कृतेराद्यभागे स्वर्गकामा जनाः यज्ञैः स्वाभिमतं प्राप्नुवन्ति स्म। मोक्षप्राप्तये यज्ञानां साधकत्वं नास्तीति विदितं सर्वेषाम्। मोक्षाय केवलं ब्रह्मज्ञानमपेक्षितमिति प्रसिद्धम्। मोक्षकामाः जनाः शीघ्रमेव गृहस्थाश्रमं परित्यज्य गुरुशरणं गच्छन्ति स्म। तद्यथा—परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्[1]। याज्ञवल्क्यस्य वैराग्यकथा सुविदिता। स सर्वं गृहात्मकं परित्यज्य मोक्षार्थी भूत्वा भैक्षचर्यां स्वीकृतवान्।

उपनिषद्युगस्य ब्रह्मपरायणत्वं लोकप्रियतामवाप। पितरौ पुत्रस्य जन्मकालेऽपि तं ब्रह्मपरायणं कर्तुमीषतुः। यदा पुत्रोऽष्टवर्षदेशीयोऽभूत् तदा पितरौ तं वनप्रस्थानायानुज्ञातवन्तौ।[2]

गृहस्थजीवनस्य कष्टानि प्रायशोऽतिरंजितान्येव तत्कालीनसमाजस्य समक्षं प्रस्तुतानि। तद्यथा—विना परिश्रमं कदापि गार्हस्थ्यं न सम्भवति।

---

१. मुण्डकोपनिषदि १.२.१२
२. नंगुट्ठजातके १४४, असातमन्तजातके ६१

असत्यं विना कुतो गार्हस्थ्यम् ? दण्डेनापकारेण विनाऽपि गृहस्थाश्रमो न भवति। ईदृशं छिद्रैः पूर्णं कठिनं गार्हस्थ्यं कः स्वीकुर्यात् ?[१]

प्राचीनयुगे बहवस्तत्रासन् महाविद्यालयाः येषु केवलं प्रव्रजिता एव प्रविष्टाः। तेषु विद्यालयेषूच्चशिक्षालाभाय बहवो गृहस्थाः प्रव्रजिताः।[२]

वृद्धावस्थायामैन्द्रियकशैथिल्ये सति सर्वेषां हृदि विरागभावना स्वभावतो जायते एव। प्राचीनवातावरणे किमपि तत्त्वमद्भुतमेवासीत् यत्र केशे पलिते प्रव्रज्याकालः आयात इति सन्देशोऽवगतः।[३] राजाऽपि प्रव्रज्याग्रहणमेव कर्तव्यं मन्यते स्म। तदासीत् सुविधाऽपि मुनिजनोचिता। प्रव्रज्यापद्धतिस्तावत् प्रकाशमयी बभूव। पर्वतप्रदेशे इमे प्रव्रजिता विद्यार्थिसममेव व्यक्तित्वविकासाय श्रमपरायणा बभूवुः।

महाभारते तु गृहस्थजीवनस्य यत्र तत्र भयङ्करं चित्रं प्रदर्शितम्। कथामाध्यमेन निदर्शितं तत्र—मानवस्तु गृहस्थाश्रमे वसन् व्याधिभिः वृद्धावस्थया, कालेन, कामनाभिश्च विवशीकृतः सुखमनुभवन् तिष्ठति। तत्र महदाश्चर्यं खलु।[४]

यद्यपि स्थाने स्थाने गृहस्थाश्रमस्योत्कृष्टत्वं वर्णितमेव, किन्तु प्रायः स्पष्टत इदं लिखितं वर्तते यत् गृहे वसन्नेव यदि कोऽपि म्रियेत तर्हि बन्धनात् न स प्रमुच्यते।[५] भागवतानुसारं हि—

यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम्।
गृहेषु खगवत् सक्तस्तमारूढच्युतं विदुः॥ ११.७.७४

---

१. वच्छनखजातके २३५; भिसजातके ४८८

२. बहाछत्तजातके ३३६; सेतकेतुजातके ३७७

३. मखादेवजातके ६

४. स्त्रीपर्वणि ५,६,७ अध्यायतः

५. पद्मपुराणे सृष्टिखण्डे ४७.२५२—२५५

गृहस्थाश्रमस्तु 'अङ्गनाश्रमः'।[१] अतः शिशवोऽपि विरक्ताः सन्तो मोक्षपथगामिनो भवेयुः।[२]

## जीवन-विधिः

बहुविधास्तत्रासन् वानप्रस्थाः। जीवनविधिरपि विविधप्रकाराणां तापसानां वैविध्यपूर्ण एवासीत्। तेषु सर्वप्रमुखास्तु ते वानप्रस्था ये महर्षीणामाश्रमेषु तपसे तत्त्वज्ञानाय च वसन्ति स्म। ईदृशानां तापसानां गणा बभूवुः। प्रत्येकस्य गणस्य शास्तासीत्।[३] भोजनं तेषां वनस्य पत्रपुष्पफलमूलादिभ्यः प्राप्तम्। वनवृक्षेषु मध्ये तेषामाश्रमा बभूवुः। यत्र तत्र पर्णशाला आसन्। यदा कदा ते नगरं प्रत्यागच्छन्।[४] तपस्विभिः फलमूलभोजनं प्रशस्तमन्नभोजनं च कुत्सितं मतम्। कतिपय-तपस्विनः संघं निर्माय ग्रामसमीपं निवसन्ति स्म ग्रामेषु भिक्षितवन्तश्च।[५] मुनीनामजिनवस्त्रं परिधानीयमासीत्। कतिपयमुनयो वल्कलधारिणो बभूवुः।[६]

दक्षिणभारतीयानां मुनीनां जीवनविधिः वाल्मीकिरामायणे निदर्शितः। वानप्रस्थेषु तत्रासंख्या मुनयो बभूवुः। तत्रत्यमुनीनामाश्रमाणां वर्णनं ब्रह्मचर्याश्रमप्रकरणे प्रागेव कृतम्। अगस्त्यस्तु मुनिसम्राडासीत्। स तत्र राक्षसानां विनाशमपि कृतवान्।[७] वानप्रस्थास्तु तत्रागतानां महा-पुरुषाणां स्वागतं कृतवन्तः, तेभ्यः फलमूलादिकं च भोजनं दत्तवन्तः। मुनिभिः दर्शपौर्णमासादियज्ञाः कृताः। केचिन्मुनयो यज्ञार्थं गा अरक्षन्।[८]

१. भागवते ४. २६.५२—५५
२. भागवते ६.५.२१,३२
३. अम्बट्ठजातके १२४, केसवजातके ३४६, उदञ्चनिजातके १०६
४. गामणीचण्डजातके २५७
५. संकप्पजातके २५१
६. सेतकेतुजातके ३७७; संकप्पजातके २५१
७. अरण्यकाण्डतः ११.५५–६६; ८१–८३; १२.५४
८. बालकाण्डे ५२, ५३, ५५ सर्गेभ्यः

रामायणकालीनानां मुनीनां गणाः—वैखानस-वालखिल्य-सम्प्रक्षाल-मरीचिप-अश्मकुट्ट-शीर्णपर्णाशन - पत्राहार-तापस-दन्तोलूखलि-उन्मज्जक-गात्रशय्य-अशय्य-अनवकाशिक - मुनि-सलिलाहार-वायुभक्ष-आकाशनिलय-स्थण्डिलशायि-ऊर्ध्ववास-दान्त-आर्द्रपटवास -सजप-तपोनिष्ठ-पंचतपोन्वितादयः स्युः। नाम्नैव तेषां गुणाः जीवनवृत्तयश्च प्रतीता भवन्ति। प्रायः सर्वे ते ऐन्द्रियकसुखविहीना अभवन्।

कतिपयमुनयः सकुटुम्बा एव महाभारते दृश्यन्ते। एषु वसिष्ठः सुप्रसिद्धः। व्रीहिद्रोणः मुनिः वने शिलोञ्छकापोतवृत्त्या जीविकोपार्जनमकरोत्, पक्षे सकृद् भोजनं कृतवान्। स कापोतवृत्त्या संगृहीतेनान्नेन यज्ञमतिथिसत्कारं चाकरोत्।[1] रामायणानुसारमृचीकविश्वामित्रौ सकुटुम्बौ बभूवतुः।[2] महाभारतानुसारं बहवः ऋषयः शिष्यैः सह विचरणं कुर्वन्तो गृहस्थानामतिथयो बभूवुः।[3] केचिन्मुनयः दीर्घकालीनं यज्ञं कुर्वन्ति स्म। विविधप्रदेशेभ्यः समागता मुनयो नैमिषारण्ये द्वादशवार्षिकं सत्रं यज्ञमाध्यमेन व्यतीतमकुर्वन्।[4] महातपस्विनोऽपि केचिद् याजका बभूवुः। यज्ञसम्पादनाय ते परिभ्रमन्ति स्म।[5] वानप्रस्थानां शाश्वतव्रतविधानं महाभारते प्रोक्तम्। तद्यथा—

तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत्।
तानेवाग्नीन्परिचरेद्यजमानो दिवौकसः॥
नियतो नियताहारः षष्ठभक्तोऽप्रमत्तवान्।
तदग्निहोत्रं वा गावो यज्ञाङ्गानि च सर्वशः॥
अफालकृष्टं व्रीहियवं नीवारं विघसानि च।
हवींषि संप्रयच्छेत मखेष्वत्रापि पंचसु॥
वानप्रस्थाश्रमेप्येताश्चतस्रो वृत्तयः स्मृताः।

---

१. वनपर्वणि २६० अध्यायतः
२. बालकाण्डे ६१,६२ सर्गतः
३. वनपर्वणि २५६.८
४. शल्यपर्वणि ३७.४१—४३
५. शल्यपर्वणि ३६.१५—२०.

सद्यः प्रक्षालकाः केचित्केचिन्मासिकसंचयाः ॥
वार्षिकं संचयं केचित् केचित् द्वादशवार्षिकम् ।
कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव वा ॥
शान्तिपर्वणि २४५.६–६

साधारणतो वानप्रस्था दीर्घश्मश्रुकेशा आसन् ।[१] स्त्रियोऽपि वानप्रस्था वल्कलाजिनधारिण्यो बभूवुः ।[२]

महाराजा अपि महाभारतयुगे गृहस्थाश्रमस्य पश्चात् वानप्रस्था बभूवुः । वानप्रस्थस्य धृतराष्ट्रस्याश्रमे होमाग्निमृगसमूहमयूरकोकिलादीनां शोभाऽदृश्यत । तत्र फलमूलराशिः सुशोभितोऽभवत् । धृतराष्ट्रस्याश्रमे युधिष्ठिरो मुनिभ्यः कलशाजिनप्रवेणीस्त्रु कस्त्रुवाकमण्डलुस्थालीलौह-पात्राणि दत्तवान् । धृतराष्ट्रोऽपि युधिष्ठिरस्य स्वागतमकरोत् ।[३]

शनैः शनैः वानप्रस्थानां जीवन-विधानं कठोरतरमभवत् । तेषां भिक्षा-वृत्तिः दानग्रहणं च मनुना निषिद्धे । यदि वानप्रस्थाः गृहस्थेभ्यो भिक्षन्ते स्म तर्हि केवलमष्टग्रासमात्रभोजनायैवासीत् सा भिक्षा । भिक्षान्नमपि वने नीत्वैव खादनीयमासीत् । मनुना निर्दिष्टा वानप्रस्थवृत्तिः कठोरा सती सुग्राह्या न प्रतिभाति । तद्यथा—

अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः ।
शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ ६.२६
चान्द्रायणविधानैर्वा शुक्लकृष्णे च वर्तयेत् ।
पक्षान्तयोर्वाप्यश्नीयाद्यवागूं क्वथितां सकृत् ॥ ६.२०
भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् ।
स्थानासनाभ्यां विहरेत् सवनेषूपयन्नपः ॥ ६.२२
ग्रीष्मे पञ्चतापास्तु स्याद्वर्षास्वभ्रावकाशिकः ।
आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तपः ॥ ६.२३

१. आश्वमेधिकपर्वणि ४६ अध्यायतः ।
२. आश्रमवासिकपर्वणि १६ १५, २६.१२-१३,
३. आश्रमवासिकपर्वणि २६ अध्यायतः ।

तत्र पुरातनसुविधा प्रकृतिप्रदत्तं सौरभं च वानप्रस्थस्य विलुप्ते दृश्येते। मनुस्मृतौ रमणीयवनप्रदेशेषु ब्रह्मचारिभिः सह पुरा ऋषीणां जीवन-विधिः श्रेयस्करः सुग्राह्यश्चासीत्। मन्वनुसारं नवयुगे तु मुनीनां मरणमपि निःशरणमभवत्। तद्यथा—

अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः।
आ निपाताच्छरीरस्य युक्तो वार्यनिलाशनः॥ ६ ३१

अर्थशास्त्रानुसारं राजभिः मुनिभ्यो वनानि निर्धारितानि। तेषां वनानां सुरक्षा राज्ञा कृता।

पौराणिकयुगे वानप्रस्थाश्रमे शरीरं प्रत्युपेक्षाभावः समवर्धत। विधानानां कठोरत्वे सति वानप्रस्थाय रुचिरपि नाभूत् साधारणजनानाम्। फलतो वानप्रस्थावधिः स्वल्पीकृतः। तद्यथा—

चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः।
द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः॥ भागवते ७.१२.२२

आधुनिकयुगे तु वानप्रस्थः ऋषिपंचमीमाध्यमेन दृश्यते।

बौद्धसंस्कृतौ जैनसंस्कृतौ च व्यक्तित्वस्य विकासाय वनस्य महत्त्वं दृश्यते। बौद्धेषु तेऽरण्यसंज्ञिनो बभूवुः, येषां चित्तानि वनशोभासौरभादिभिः समाकृष्टानि। अङ्गुलिमालस्य चित्तं पर्वतानां वनानां च प्रशान्तावरमत। वनानां पुष्परंजितभूमावुपविश्य मुक्तिं बन्धनविहीनत्वं च भिक्षवोऽनुभवन्ति स्म। स्थविर उसभस्तु शरदो वनश्रीसौरभाभ्यामात्मविकाससन्देशमलभत। गौतमबुद्धेन घोषितम्—भिक्षवो यावद्वनेषु शयनासनानामुपभोगं कुर्वन्ति तावदेव तेषां वृद्धिर्भविष्यति[१]। स्वयमेव बुद्धो बहूनि दिनानि वनेषु न्यवसत्। परवर्तियुगे बौद्धभिक्षूणामावासाय विहाराः वनपर्वतभूमिषु निर्मिताः।

---

१. महापरिनिब्बान सुत्तन्त १. ६

जैनसाधूनां निवासः श्मशाने शून्यागारे गुहायां शिल्पशालायां वाभवत्। ऐन्द्रियसुखानां सर्वथाऽभावस्तेषां जीवनविधौ दृश्यते। कष्टसहनमपि व्यक्तित्वविकासाय साधनं मतम्। परवर्तियुगे श्वेताम्बरजैनमुनीनां जीवनं वस्त्रभोजनावासादिदृष्ट्या नातिविषमोऽभूत्।

## तपस्तत्त्वज्ञानं च

तपसः सर्वप्रथमोल्लेखः ऋग्वेदे वर्तते —

तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम्।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम्॥१०.१२६.३

श्लोकेऽस्मिन्तपः संवर्धनस्य साधनम्। इदमेव विकासस्य मूलकारणम्। मानव-व्यक्तित्वस्य विकासे तपसो महत्त्वं तादृशमेव सम्भावितम्। तपसो माहात्म्यमथर्ववेदे सुप्रतिष्ठितम्। तद्यथा—ब्रह्मचारी तपसोदतिष्ठत्। ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति। ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत।[१] वैदिकसाहित्येऽन्यत्र – तपोभिरेव देवानां देवत्वं सिद्धम्।[२] प्रजापतिस्तु सहस्रवर्षं तपस्तप्त्वाऽऽत्मशुद्धिं विधाय मृत्युपाशाद्विमुक्तः।[३] तपसा यज्ञेन इव सिद्धिर्लभ्या।[४] तस्य तपस्तेपानस्य एभ्यो लोमगर्तेभ्य ऊर्ध्वानि ज्योतींष्यायन्। तद्यानि तानि ज्योतींष्येतानि तानि नक्षत्राणि।[५] तपसा वै लोकं जयन्ति। तदस्यैतत्परंपरऽएव वरीयस्तपो भवति। परंपरं श्रेयांसं लोकं जयति।[६]

---

१. अथर्ववेदे ११.५
२. तैत्तिरीयब्राह्मणे ३. १२. १३. १
३. शतपथब्राह्मणे १०. ४. ४. १— ३
४. अथर्ववेदे १२. १. ३६
५. शतपथे १०. ४. ४. २
६. शतपथे ३ ४ ४:२७

उपनिषद्युगे तपसः प्रतिष्ठा संवर्धिता । तपस्तु ब्रह्मैव ।[१] ब्रह्मचर्यतपसोः परिधौ यज्ञेष्टसत्रायणमौनानशकायनारण्ययायनानि समन्वितानि ।[२] तपसो ज्ञानमयं स्वरूपं विनिश्चितम् ।[३]

रामायणानुसारं तपस्विनः प्रभा द्योतिता । तपसा मुनयो देदीप्यमाना बभूवुः । मुनयः प्रायो जपहोमादिषु संलग्ना अभवन् ।[४] यज्ञवत्तपसोऽवधिर्नियतः । तस्मिन् समाप्ते तपस्वी ब्रह्मचर्याश्रमान्ते स्नातका इव स्नानमकुर्वन् ।[५] कर्हिचित्तपोऽत्यन्तघोरमभवत् । तद्यथा रामायणे—

ऊर्ध्वबाहुर्निरालम्बो वायुभक्षस्तपश्चरन् ।
घर्मे पंचतपा भूत्वा वर्षास्वाकाशसंश्रयः ।
शिशिरे सलिले शायी रात्र्यहानि तपोधनः ।।

बालकाण्डे ६३.२३-२४

केचिन्मुनयस्तपःकालपर्यन्तं मौनव्रतं गृहीतवन्तः । ईदृशेन घोरतपसा जगत्सर्वमतप्यत ।[६]

तपसः प्रभावाद् ज्ञानस्यालौकिकशक्तेः प्रादुर्भावोऽमन्यत । तपस्विनस्तु तपोबलेनाप्रत्यक्षमपि ज्ञातुं समर्थाः । अपरेषां हृदिगतं वृत्तं तपसा ज्ञायत इति धारणासीत् । तपसात्मज्ञानसिद्धिः भूता । ते भावितात्मानस्तपस्विनः । तपसैव ब्रह्मसाक्षात्कारोऽपि सम्भवति ।[७] तापसानां कामाः साधनं विनापि पूर्णा भवन्ति । मन्वनुसारं तु—

---

१. तैत्तिरीयोपनिषदि भृगुवल्ल्याम् २.५
२. छान्दोग्ये ८.५
३. मुण्डके १.१.६
४. बालकाण्डे ५१ सर्गतः
५. बालकाण्डे ६३.१
६. अरण्यकाण्डे ६५.१३-१७
७. मनुस्मृतौ ११.२३६; ५.२६; रामायणे अरण्यकाण्डे १४.१५-१६; ५.४,४२

औषधान्यगदो विद्या दैवी च विविधा स्थितिः।
तपसैव प्रसिद्ध्यन्ति तपस्तेषां हि साधनम्॥ ११.२३७
प्रजापतिरिदं शास्त्रं तपसैवासृजत्प्रभुः।
तथैव वेदानृषयस्तपसा प्रतिपेदिरे॥ ११.२४४

केचित्तपस्विनः योगप्रक्रियासु संलग्ना बभूवुः।[1] मनुः वानप्रस्थेभ्यः श्रुतीनामुपनिषदां चाध्ययनं निर्धारयति स्म।[2] मुनीनामाश्रमेषु नवतपस्विनो दीक्षिता बभूवुः। कुलपतयो दीक्षिततपस्विभ्यः प्रवचनं दत्तवन्तः। आश्रमेषु मुनीनां व्यक्तित्वविकासस्यायोजनमध्ययनमाध्यमेन कृतम्।[3]

महाभारते त्रिविधानि तपांसि विनिश्चितानि—शारीरिकं वाचिकं मानसिकं च। ब्राह्मणगुरुप्राज्ञानां पूजा ब्रह्मचर्यमार्जवमहिंसादीनि शारीरिकं तपः। सुखदं सत्यं प्रियं लाभप्रदं च वचनं स्वाध्यायो नियतकर्मणामभ्यासश्च वाचिकं तपः। मनसः प्रसन्नता सौम्यता मौनं शुद्धभावना च मानसिकं तपः। निष्कामभावेन कृतं तपः सात्त्विकम्, आत्मप्रतिष्ठायै दम्भाय वा कृतं राजसम्, आत्मानं पीडयित्वा परान्वा पीडयितुं तपस्तामसिकं भवति।[4] शरीरस्य पीडनं हीनतप इति तत्त्याज्यमेव। मनोभावस्य निर्मलत्वं तपसः प्रथमं लक्षणं मतम्।[5]

तपसः साधारणस्वरूपमपि सुनिश्चितमेव। तदनुसारं ब्राह्मणस्य ज्ञानार्जनम्, क्षत्रियस्य प्रजापालनम्, वैश्यस्य पशुपालनादिव्यापारः, शूद्रस्य समाजसेवा एव तपः।[6] 'कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः' इति योगसूत्रेण तपः परिभाषितम्।

---

१. रामायणे अरण्यकाण्डे ६.६
२. मनुस्मृतौ ६.२६
३. महाभारतेऽनुशासनपर्वणि १० अध्यायतः।
४. गीतायाम् १७.१४ १६
५. महाभारते वनपर्वणि २००.८०-१०७
६. मनुस्मृतौ ११.२३५

गौतमस्तु कष्टदायकं तप आवश्यकं न मन्यते स्म। किन्तु बौद्धसंस्कृतौ गीतानुरूपं शारीरिकमानसिकवाचिकतपसां प्रतिष्ठा कृता। गौतमानुसारं तु सदसतोर्विवेकवान् पुरुषो मुनिः। स लोकस्य परलोकस्य च मननं करोति। अनासक्तो जनो मुनिः।[१] मुनिः शरीरस्य वेदनायाश्चित्तस्य मनोवृत्तीनां च पर्यालोचनं करोति। शरीरस्याशोभनां गतिं दृष्ट्वा सोऽनासक्तो भवति। स एव कायानुपश्यी योगी।[२]

जैनसंस्कृतौ बाह्याभ्यन्तरे तपसी प्रतिष्ठिते। बाह्येन —अनशनावमोदर्य-वृत्तिपरिसंख्यानरसपरित्यागादयः कायक्लेशा भवन्ति। आभ्यन्तरतपसः प्रायश्चित्तं विनयः वैयावृत्त्यं स्वाध्यायो व्युत्सर्गो ध्यानं चाङ्गानि भवन्ति।[३]

## संन्यासाश्रमः

संन्यासाश्रमे मानवः सर्वतन्त्रस्वतन्त्रो भूत्वा महान् विचारको भवितु-मर्हति। यावत्कालं मानवः स्थानकुटुम्बग्रामदेशकुलधर्मव्यवसायपदविशेषैः सम्बद्धो भवति तावदेव तस्य बौद्धिकविकासो विचारक्षेत्रं च सीमिते भवतः। संन्यासस्य विधानेनास्याः संकुचितसीमायाः परे भवितुं मानवोऽवसरं प्राप्नोति। संन्यासी निजव्यक्तित्वस्य निःसीमत्वं पर्यालोच्य स्वशक्तीना-मधिकतममुपयोगं कर्तुं समर्थः।

### संन्यासारम्भः

वानप्रस्थे मननचिन्तनस्वाध्यायतपोभिरेव ब्रह्मज्ञानं प्राप्यते। अतः परं तपस आवश्यकता न विद्यते। मुनिः ब्रह्मसंस्थो भवति। स ब्रह्मपयो भूत्वा ब्रह्मवदाचरति। ईदृशः मुनेर्वनवासो नापेक्षितः। स तु वनान्निष्क्रम्य संन्यासी भूत्वा गृहस्थसमाजेऽपि विचरन्नेव समाजस्य नेतापि बभूव।

---

१. धम्मपदे धम्मट्ठवग्गो १३-१४; सुत्तनिपाते पारायणवग्गो सभियसुत्तं च।
२ मज्झिमनिकाये सतिपट्ठानसुत्तन्ते
३. तत्त्वार्थसूत्रम् ६ १६-२०

वानप्रस्थस्यानिवार्यत्वं कदापि नासीत् वैदिकसंस्कृतौ। ब्रह्मचर्याश्रमाद् गृहस्थाश्रमाद्वा पुरुषाः संन्यासाश्रमं प्रविविशुः। यदा विरजेत् तदा प्रव्रजेदिति महती सुविधा सदासीत्।

## संन्यासिनो जीवन-विधिः

संन्यासी गृहमग्निं सुखं सुरक्षां च परित्यज्य मौनमवलम्ब्य निवसति स्म। भोजनार्थमेव ग्रामे आगत्य भिक्षते स्म। नासीत् तस्य लोकपरलोकस्य काचिच्चिन्ता। स तु नित्यमेव पर्यटत्। स जीर्णशीर्णानि वस्त्राण्यात्मार्थं कुतोऽपि प्राप्नोत् दिगम्बरो वाऽभवत्। स नित्यमध्यात्मपर आसीत्।[१]

गौतमानुसारं तु संन्यासी वर्षाकाले पर्यटनाद्विरतो बभूव। केवलं भिक्षार्थमेव ग्रामं प्रविवेश। भिक्षार्थमपि स विलम्बेन निर्गतः। केवलं नग्नत्वस्य निगूहनाय स परिधानं धारयति स्म। सर्वान् प्राणिनः प्रति तस्योपेक्षाभाव आसीत्। स किमपि कार्यं नाकरोत्।[२]

मन्वनुसारं तु संन्यासी नित्यमेवैकाकी विचरेत्। सकृदेव दिने भिक्षेत। भिक्षां लभेत न वा लभेत तस्य हर्षविषादौ न भवेताम्। भिक्षा तस्य प्राणयात्रिका भवेत्। स्वल्पभोजनमेकान्तवासश्च तस्यैन्द्रियकविषयेभ्यः परित्राणाय बभूवुः।

मनुवर्णितं संन्यासिरूपं विलक्षणमेव। तद्यथा—

कपालं वृक्षमूलानि कुचेलमसहायता।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम्॥ ६.४४

संन्यासिना केशनखश्मश्रूणि न वर्द्धितानि। स तेषां कर्तनं कारितवान्। तस्य सामग्री—भिक्षापात्रं दण्डः कमण्डलुश्चासीत्। तस्य पात्रं छिद्ररहितमभवत्। जलमात्रेण शुद्ध्यर्हैणालाबुफलेन काष्ठेन वा निर्मितानि पात्राणि स स्वीकृतवान्। अपरं च संन्यासी—

---

१. आपस्तम्बधर्मसूत्रे २. ६

२. गौतमे ३. ११-२३

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ।।

संन्यासिनो मानसिकवृत्तयः क्षमापूर्णा अभवन् । तेन मैत्रीभावना संवर्धिता । सहिष्णुता तस्य परमो गुणः । स कस्याप्यनादरं नाकरोत् । कस्यापि प्राणिनस्तस्माद् भयं नाभवत् । यदि कश्चित् पुरुषः तस्मै क्रुद्धवान् स तं प्रति भद्रवाणीं प्रयुक्तवान् । सांसारिकविषयेषु वार्त्तामपि स नाकरोत् । अध्यात्मचिन्तकः सोऽन्यवस्तुविषयेभ्यः सर्वथा निरपेक्षोऽभवत् । संसारिणोऽधिकृत्य सोऽशोचत्—

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ।।
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतवासमिमं त्यजेत् ।।
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते ।।

मनुस्मृतौ ६. ७६-७८

संन्यासिनो योगपथो मनुना निदर्शितः । स योगमार्गेण परमात्मनः सूक्ष्मतत्त्वानुशीलनं करोति । अज्ञानेन कृतां हिंसां परिमार्जितुमेव संन्यासी नित्यमेव स्नानस्य पश्चात् षट् प्राणायामान् करोति । स ध्यानयोगेन ब्रह्म प्राप्नोति ।

महाभारतानुसारं संन्यासिनो जीवनविधिर्मोक्षधर्म एव । संन्यासिन आश्रयस्तु वृक्षः, नदीतटः, शून्यगृहं वा भवेत् । स कुत्रापि स्थायिरूपेण न वसति । संन्यासी शरीरस्य परिमार्जनाय सचेष्टो न भवति । सर्वेषां प्राणिनां हिते रतो भवति । तस्य क्षमाऽनन्ता ।[१]

---

१. वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः।। आदिपर्वणि ११६.१५

महाभारतानुसारं कतिपयसंन्यासिनो तत्त्वज्ञाः सन्तोऽपि बालका इव निर्व्याजा बभूवुः। ते सदैव परितृप्ताः प्रकृतेः क्रीडामात्रमेव जगदिति तस्य वैषम्येण न प्रभाविताः। संसारस्य वैषम्यमेव हि तेषां दृष्टौ स्वाभाविकम्। ते संसारमधिकृत्य नान्वशोचन्। चिन्ताभिर्विहीना एव सुप्रसन्नास्ते। सर्वत्र सर्वथा च ते प्रशस्याप्रशस्यैर्भोजनवस्त्रादिभिः सन्तुष्टाः। अनियताऽऽसीत् तेषां जीवनवृत्तिः।[१] सेयमाजगरवृत्तिस्तेषाम्।

पद्मपुराणे संन्यासिनस्त्रिविधाः मताः—ज्ञानसंन्यासिनः, वेदसंन्यासिनः कर्मसंन्यासिनश्च। ज्ञानसंन्यासिनस्तु सर्वथा मुक्ता निर्द्वन्द्वा निर्भयाश्चात्मन्येव स्थिताः। वेदसंन्यासिनः कामपरिग्रहांश्च विहाय नित्यमेव वेदाभ्यासे रताः। ते मोक्षेच्छवो विजितेन्द्रियाश्च। कर्मसंन्यासिनस्तु स्वयमेव ब्रह्मणि लीनाः सन्तः महायज्ञपरायणा बभूवुः। एषु त्रयेषु ज्ञानसंन्यासिनः श्रेष्ठा मताः। तेषां ज्ञानमेव भोजनं परिधानं वाऽभवत्। ते जीवनमरणमधिकृत्यापि नाचिन्तयन्। अध्ययनश्रवणप्रवचनादिषु नासीत् तेषां प्रवृत्तिः। पद्मपुराणानुसारं संन्यासी कस्यचिदेकस्य पुरुषस्यान्नेन नावलम्बितः। वर्षर्तुं विहाय स कुत्रापि स्थायिरूपेण वासं नाकरोत्। स्नानशौचादिभिरात्मानं पवित्रं कृतवान्। सदैव स ब्रह्मदर्शने लीनः।[२]

केषांचित् संन्यासिनां जीवनविधिवैचित्र्येण कुतूहलमापन्ना अधमाः तेषां दुर्गतिमकुर्वन्। संन्यासिनो न कदापीदृशैर्व्यवहारैरकुप्यन्।[३]

संन्यासी बाह्यलक्षणैर्विमुक्तो भवत्विति भागवते प्रतिपादितम्। तद्यथा—

अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत्।
कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम्॥ ७. १३. १०

---

१. भागवते ५.५.३२–३३। शान्तिपर्वणि १७९ अध्यायतः।
२. स्वर्गखण्डे ५६ अध्यायतः। ३. भागवते ५.५

संन्यासिनां जीवनवृत्तिमधिकृत्य भागवते प्रोक्तम्—

ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः ।
सलिंगानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥
बुधो बालकवत्क्रीडेत् कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद् विद्वान् गोचर्यां नैगमश्चरेत् ॥ ११.१८.२८-२९

भागवतानुसारं संन्यासिनः सम्यक्प्रकारेणाध्यात्मिकज्ञानप्रपन्ना भवेयुः । यदि ज्ञानप्रपन्नत्वं न भवेत्तर्हि स गुरोर्ब्रह्मज्ञानं शिक्षेत । ज्ञानं विना संन्यासिवेषो वञ्चनमेव । तद्यथा—

यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः ।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥
सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा ।
अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥ ११.१८.४०-४१

भागवते संन्यासिभ्यो योगस्य माहात्म्यं सविशेषमेव । योगाधिकारी तु भागवतानुसारं तदा भवति—

यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।
अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ ११.२०.१८

भागवते त्रिविधः संन्यासो निदर्शितः—ज्ञानयोगात्मकः, कर्मयोगात्मकः, भक्तियोगात्मकश्च । कर्मसु तेषां फलेषु च विरक्ता ज्ञानयोगिनः । कर्म प्रति येषामासक्तिस्ते कर्मयोगिनः । येषां मनःस्थितिः ज्ञानकर्मणोर्मध्ये विपरिवर्तते ये तु भगवतः कथाऽर्चादिषु श्रद्धापरास्ते भक्तियोगिनः ।[१]

## योगः

योगस्तु भारते पुरातनतमः प्रतीयते । आर्येतराणां सिन्धुसभ्यतायां योगप्रणाली प्रचलितासीदिति तत्र प्राप्तया योगिनो मूर्त्या स्पष्टमेव । इन्द्रियाणां स्थिरधारणा तु योगः । इन्द्रियाणि वशीकृत्य योगिनोऽप्रमत्ता

१. भागवते ११. २. ५

भवन्तीति कठोपनिषदि निदर्शितम्।[1] चित्तवृत्तयोऽसंख्यासु दिशासु विपरिवर्तमाना न तावन्मात्रं फलदायिन्यो यावत्तु केवलमेकस्यां दिशि नियुज्यमानाः सत्यो भवन्ति। चित्तं तु ध्यानावलम्बिनां महत्साधनम्। यावन्मात्रं चित्तं शुद्धं सात्त्विकमेकपरायणं च भवति तावन्मात्रं तस्योपयोगिता वर्धते। यदा योगेनाभीष्टं प्राप्यते तदा चित्तस्यावश्यकताऽपि न वर्तते, चित्तं निष्प्रयोजनं च भवति। अयमेव चित्तवृत्तिनिरोधो योगः।

योगस्याष्टाङ्गानि—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः। यमेनाहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाणां सिद्धिर्भवति। नियमस्तु शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि। आसनं तु साधकस्य स्थिरसंस्थितिः। सा सुखप्रदा भवति। श्वासगतिरोधः प्राणायामः। प्राणायामेन धारणाशक्तिरुत्पद्यते। धारणा चित्तस्य स्थिरता भवति। प्रत्याहारेणेन्द्रियाणि विषयेभ्यो विनिवर्तन्ते। तानि तदा चित्तस्वरूपमनुसरन्ति। इत्थमिन्द्रियाणि वशीकृतानि।

धारणाध्यानसमाधयः संयम एव। धारणाया चित्तमेकस्मिन् स्थाने—नाभिचक्रे, हृदयकमले, मूर्ध्नि, नासिकाग्रभागे, सूर्ये, चन्द्रे वा बध्यते। तस्मिन्नेव प्रदेशे चित्तस्य स्थिरीकरणं ध्यानम्। ध्यानस्य सा सर्वोच्चावस्था समाधिर्यस्यां जातायां साधकाय ध्येयं विहाय न किंचिदपि वर्तते। समाधौ यदा चित्तवृत्तिनिरोधो भवति तदा ध्येयेन सह तादात्म्यं जायते। तादात्म्यमेव योगः।

योगपथिकस्य शत्रवोऽपि वर्तन्ते। तद्यथा सम्मानः नारीं प्रत्यासक्तिर्वा। भागवते नारीविवेचनमिदमधिकृत्य वर्तते—

सङ्गं न कुर्यात् प्रमदासु जातु योगस्य पारं परमारुरुक्षुः।
मत्सेवया प्रतिलब्धात्मलाभो वदन्ति या निरयद्वारमस्य॥
योपयाति शनैर्माया योषिद्देवविनिर्मिता।
तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम्॥ ३.३१.३९—४०

---

१. कठोपनिषदि ६. ११

योगेन स्त्रियः शूद्रो वा परमां गतिं लभन्ते ।[१]

योगस्य प्रतिष्ठा बौद्धजैनसंस्कृत्योरपि वर्तते। गौतमस्याष्टाङ्गिके मार्गे धारणाध्यानसमाधीनामन्तर्भावो दृश्यते। यमनियमादीनां सिद्धिः गौतमस्य दशशिक्षापदेषु चतुर्षु स्मृत्युपस्थानेषु च भवति। समाधयेऽरण्यवृक्षमूल-पर्वतगुहाश्मशानवनप्रदेशादयः समीचीना मताः। जैनमते महावीरस्वामिना स्वयमेव चित्तस्य समाधानं समाधिपथेन कृतम्।

यावत्कालं मानवः स्वसुखाय शरीराद्बहिर्वर्त्तमानान् पदार्थानपेक्षते तावदेव स निराशो भविष्यति। शरीरस्याङ्गानि जराजीर्णानि जायन्ते। न तैरपि शाश्वतसुखं लभ्यम्। यथा प्रथमपादे बाह्यवस्तूनि परित्यज्य शरीरमेवानन्दसाधनं कर्तव्यं तथैवोत्तरकाले शरीरमपि संन्यस्यात्मैवानन्द-साधनत्वेन ग्रहणीयः। शरीरमेवानन्दसाधनं कुर्वाणः मरणोत्तरकाले शरीरवान् भवति। योगेन यदाऽऽत्मैवानन्दसाधनं क्रियते तदा मरणोत्तर-काले मुक्तिर्लभ्यते, शरीरं न प्राप्यते। आत्मन आत्मन्येवानन्दग्रहणं सर्वोच्चानुभूतिः। यथा लोकपरेभ्यः शरीरं संसारश्चानन्दनिष्यन्दस्तथैव योगिभ्य आत्मा ब्रह्म चानन्दनिष्यन्दः।

## कर्मयोगः

संन्यासिनस्तु कर्माणि परित्यज्य योगेनाध्यात्मिकमानन्दं प्राप्तुं प्रयतेरन्। इयमेव संन्यासस्य सर्वोच्चप्रगतिः। अस्यां परिस्थितौ संन्यासिनां सामाजिकजीवनस्य कर्मक्षेत्रे न भवेत् कोऽपि सम्बन्धः। कर्म केन हेतुना त्याज्यम्? कर्मणः फलानि भोक्तुं संसारे जन्मग्रहणमवश्य-म्भावीति कर्मणः बन्धनस्वभावो विज्ञातः, अतएव कर्माणि परिहर्तव्यानि। कर्मणोऽकरणे मुक्तिर्भवति सुनिश्चितम्। कर्मणः परित्यागेन मुक्ति-लाभस्य योजना जैनबौद्धैरपि स्वीकृता।

उपर्युक्तकर्मसंन्यासस्यायोजनेन सह कर्मयोगस्य सिद्धान्तोऽपि पुरातन एव। कर्मफलाशां परित्यज्य यत् कर्म क्रियते न तत् बन्धनं भवति, मोक्षस्य

१. महाभारते शान्तिपर्वणि २४०. ३४

साधनमेव तद् भवति। जनककृष्णवसिष्ठव्यासादयः कर्मयोगिनः सन्ति। स्वयं संन्यासी भूत्वाऽपि शङ्करो यावज्जीवनमनवरतश्रमेण भारतस्याभ्युदयाय यतते स्म।

कर्मयोगस्य सिद्धान्तः प्रथममेव गीतायां सुविविक्तं वर्तते। गीतानुसारं तु—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते॥ ५.२

यथा संन्यासिने जीवनपर्यन्तं कर्मव्यापारस्यावश्यकता न वर्तते, तथैव कर्मयोगिनेऽपि जीवनपर्यन्तं कर्मणो विरमणं नापेक्षितम्।

**कर्मयोगाधिकारिणः**

साधारणपुरुषाः कर्मयोगस्याधिकारिणो न सन्ति। ते एव कर्मयोगिनो भवितुं समर्था ये योगयुक्ता विशुद्धात्मानो विजितात्मानो जितेन्द्रियाः सर्वभूतात्मभूतात्मानश्च सन्ति। ईदृशानां पुरुषाणां कर्मकरणमपि नैष्कर्म्यमेव। न ते किंचिदपि कुर्वन्ति। यथा गीतायां प्रतिपादितम्—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः॥ ४.२०
नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्॥ ५.६
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥ १८.४६

कर्मयोगिनो बुद्धिर्गीतायां विविक्ता—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथात्मानमकर्तारं स पश्यति॥ १३.२६
मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते॥ १८.२६

भगवद्भक्तोऽपि भवति कर्मयोगी। तद्यथा—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ १८.५६

कर्मयोगिनः कर्तव्यानि

कर्मयोगी तानि सर्वाणि कर्माणि न करोति यानि कश्चित् साधारण-पुरुषोऽपि करोति। निःसन्देहं तस्य शाश्वतकर्माणि—यज्ञदानतपांसि भवन्ति। एभिस्तस्य चित्तशुद्धिर्भवति। वर्णधर्मानुरूपं तस्य कार्याणि भवन्ति। कर्मयोगिने कर्म भगवदर्चनस्य सामग्री भवति। स एव महादेवोऽर्चनीयो यस्मात् सर्वेषां प्राणिनां प्रवृत्तिर्जायते, येन सर्वमिदं ततम्। इदमेव कर्मणो याज्ञिकस्वरूपम्। इदमेव मानवस्य सफलताया वास्तविकं रहस्यम्।

गीतानुसारं मानवलोकोऽयं कर्मभूमिः। नात्र कर्मणः पूर्णरूपेण त्यागः सम्भाव्यः। कर्मसंन्यासिनोऽपि कर्मणः सर्वथा न मुक्ताः। कर्मसंन्यासिकर्मयोगिनोरन्तरमियन्मात्रमेव भवति यत् संन्यासी स्वल्पतमं कर्म करोति; कर्मयोगी चाधिकाधिकं कर्म कुर्वन् लोककल्याणं विदधाति। कृष्णस्तु स्वकीयां कर्मयोगप्रवृत्तिं निदर्शयन्नाह—

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥ ३.२४

लोकसंग्रहणाय कर्मप्रवृत्तिरतिशयमपेक्षिता। लोकस्य रक्षणाय कर्मयोगी तादृशमेव प्रवर्तते यथेश्वरो लोकरक्षणाय कार्यपरः। ईश्वरादर्शानुरूपं हि समाजे सुव्यवस्थास्थापनं शान्तिविधानं चरित्रनिर्माणं च कर्मयोगिनां कर्तव्यानि। कर्मयोगी समाजस्यादर्शनेता भवति। आत्मज्ञानेन यो जीवनपथः कर्मयोगिना प्रकाश्यते तस्यानुसरणं समाजः करोति।

गीतायां कर्मयोगः संन्यासयोगो भक्तियोगश्च प्रतिष्ठिताः। एषु कर्मयोगः श्रेष्ठः। भक्तियोगेन संन्यासयोगेन च व्यक्तित्वस्य विकासं कृत्वापि निष्कामभावेन कर्मकरणमेवादर्शपथः। भारतीयसंस्कृतौ पदे पदे देवानां

चरितमादर्शरूपेण प्रतिष्ठितम्। देवानामादर्शानुकूलो वर्तते कर्मयोगः। देवाः सदैव कर्माभिरताः स्वकीयं मानवीयं च कल्याणं कृतवन्तः।

कृष्णेन कर्मयोगस्य वैशिष्ट्यं परिलक्ष्य गीतायां प्रतिपादितम्—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥ ६.४६

---

# सामाजिकसंस्थानम्

मानवसमाजे प्रायः सामञ्जस्यगतिका असंख्याः जनाः वसन्ति। बृहत्तमसमाजस्य कल्पना भारतीयैः ऋषिभिः उदारदृष्ट्या कृता। सा 'वसुधैव कुटुम्बकम्' इति वाक्येन प्रसिद्धा। 'सर्वेषां जनानां कल्याणं विधातुमेवास्माकं प्रवृत्तयो भवन्तु' इति भारतीयमनीषिणां विचारणा अनेन वाक्येन प्रसिद्ध्यति। अस्याः विचारणायाः व्यावहारिकस्वरूपं वैदेशिकानां भारतीयसमाजे प्रशान्तविधिना संस्थापनं निदर्शयति। व्यावहारिकदृष्ट्या साधारणजनानां प्रवृत्तयः सीमितक्षेत्रे एव प्रभावपराः दृश्यन्ते। तेन क्षेत्रेण तेषां सीमितसमाजस्योपकल्पनं भवति। तथा हि—जनाः प्रथमं स्वकीयस्य वर्णस्य जातेः वा परिधौ परस्परकल्याणं विहितवन्तः। बहूनां जातीनां वर्णानां वा पारस्परिकव्यवहारः सम्बन्धो वा समाजस्य सर्वाङ्गीणाभ्युदयाय भवेदिति सर्वेषां समीहा। ततः परं कौटुम्बिकसदस्यानां पारस्परिकसम्बन्धः महत्त्वपूर्णो दृश्यते। ग्रामेषु नगरेषु च प्रतिवेशिनां परस्परं सौहार्दसम्बन्धः तत्र सर्वेषां शान्तये समृद्धये च भवतीति सुविदितमेव।

पुरा भारतीयसमाजे समष्टिरूपेण व्यष्टिरूपेण वा जनाः पारस्परिकाभ्युदयाय कियन्मात्रमुदाराः सहानुभूतिपरा वा बभूवुरित्यस्मिन् प्रकरणे प्ररोचनीयम्।

## वर्णव्यवस्था

वर्णव्यवस्था विविधरूपा सती प्रायशः सर्वेषु देशेषु सर्वेषु कालेषु च प्रतिष्ठितैव दृश्यते। प्रथमं तावत् नृतत्त्वविज्ञानाधारेण प्रतिभाति यत् पुरा विश्वस्य विविधभागेषु विविधवर्गीया मानवा बभूवुः, येषां पारस्परिकान्तरं नेत्रगोचरमेवासीत्। यथाऽधुनापि 'अफ्रीकावासी' कृष्णः नीग्रो आङ्ग्लदेशवासिश्वेतपुरुषाद्भिन्न एव दृश्यते। अपरं च गुणायोग्यता-

विभागानुसारमन्तरं स्पष्टम्। तदधुनाऽपि 'आचार्योपाधिधारी' शास्त्रिणः सविशेषः मन्यते। व्यवसायानुरूपं वैभिन्न्यं संस्कृतौ ईषद्विकसितायां प्रारभते वर्धते च संस्कृतेः प्रगत्यनुसारं नित्यमेव।

वर्णव्यवस्था खलु मानवानां विविधवर्गेषूपर्युक्तलक्षणानुसारं विभाजनमेव। अस्मिन् प्रकरणे वर्णशब्दस्यार्थः कालान्तरे मूलार्थाद्भिन्नः संजातः। मूलतः वर्णस्यार्थो रङ्ग एव। रंगमधिकृत्य विविधवर्गेषु मानवानां यद्विभाजनं कृतं तद्वर्णानुसारं विभाजनं प्रथितम्। विभाजनस्येयं प्रक्रिया वर्णव्यवस्था बभूव। कालान्तरे व्यवसायानुरूपं गुणयोग्यतानुरूपं च यद्विभाजनमक्रियत तदपि वर्णव्यवस्थाशब्देन व्यक्तम्।[1]

## वर्णारम्भः

कस्मिंश्चिद्देशे प्रारम्भिकयुगे सर्वेऽपि मानवा एकवर्णा (रंगाः) भवन्तीति निःसन्दिग्धमेव। आदियुगे सर्वेषां जनानां रूपाकारयोग्यतादयश्च प्रायशः समाना दृश्यन्ते। कालान्तरे यदि जनसमूहः कश्चिदन्यवर्ण-(रंग) विशिष्टस्तस्मिन्देशे आगच्छति तर्हि वर्णं (रङ्गं) परिलक्ष्य तयोर्द्वयोः प्राचीननवीनयोरन्तरं निर्धारितं भवति। अपरं च यदि कस्मिंश्चिद्देशे एकवर्णा जनाः सन्ति तर्हि तत्रापि कालान्तरे विविधा वर्णाः 'कर्मक्रियाविशेषेण' संजायन्ते। तद्यथा महाभारते निगदितम्—

एकवर्णमिदं पूर्वं विश्वमासीद्युधिष्ठिर।
कर्मक्रियाविशेषेण चतुर्वर्णं प्रतिष्ठितम्॥

गौरवर्णानामार्याणां बहुवर्गेषु विभाजनं प्राचीनकालतो दृश्यते। तेषां विभाजनं कर्मक्रियाविशेषेण व्यवसायविशेषेणाऽऽसीत्। देवा ऋषयो मानवाश्च सर्वे आर्या बभूवुः। भारतवर्षे गौरवर्णानामार्याणां कृष्णवर्णानामार्येतराणां च परस्परं सम्मेलनमभवत्। तस्मात् कालादारभ्य वर्णस्य

---

१. भाषाविज्ञाने शब्दानामर्थविकासस्येयं सुविदितैव प्रक्रिया।

(रङ्गस्य) अनुसारं वर्णव्यवस्था समारभत। आर्यः आर्येतरश्च द्वौ वर्णौ गौरकृष्णौ बभूवतुः। आर्येतरेषु असुरगन्धर्वराक्षसादय आसन्।

परवर्तियुगे द्वयोः वर्णयोः—आर्यानार्ययोः परस्परं सम्मिश्रणमभवत्। तस्यां दशायां तयोः पारस्परिककर्मक्रियावैशिष्ट्यं वर्ण(रङ्ग)-वैशिष्ट्यं च विलुप्तमेव। आर्येतराः कतिपयजनवर्गाः साफल्येनार्याणां संस्कृतिं स्वीकृतवन्तः। आर्या अपि बहवः तथैवार्येतराणां संस्कृतिं स्वीकृतवन्तः। आर्याणामार्येतराणां च परस्परं वैवाहिकसम्बन्धा अपि बभूवुः। अनेन प्रकारेण रंगानुसारिणी वर्णव्यवस्थोन्मूलिताऽभवत्। इत्थमार्यवर्गस्य विविधसंस्कृतिसमूहानां—देवर्षिमानवादीनाम्, आर्येतरवर्गस्य च—असुर-राक्षसगन्धर्वपिशाचयक्षादीनां—संस्कृतिसमूहानां पारस्परिकवैभिन्न्यं विलुप्तम्। ते सर्वे मानवा बभूवुः। अतः परं वर्णशब्दः रङ्गद्योतको नाभवत्।

सम्मिलितेषु सम्मिश्रितेषु च सर्वेषु विविधवर्गेषु गुणकर्मविभागशः पुनरपि वर्णव्यवस्था प्रतिष्ठापिता।[१] स्वाभाविकः शाश्वतिकश्चायं विभागविधिः।

## आर्यीकरणम्

आर्यवर्गो महासागरवद् बभूव। आर्येतरा नदरूपा नामरूपे विहाय तस्मिन्निमग्ना बभूवुः। कतिपयार्येतरवर्गा आर्यवर्गैरसंस्पृष्टाः सन्तः दासा म्लेच्छा निषादा वा बभूवुः। आर्याणामार्येतरेभ्यो दानग्रहणं वैदिककालेऽपि दृश्यते।[२] दानग्रहणसम्बन्धेन पारस्परिकसहयोगः लक्ष्यते। बहव आर्येतरा ऋषयो भूत्वा वेदसूक्तानि रचितवन्तः। नागवर्गीयोऽर्बुदः आर्येतरोऽपि सन् मन्त्ररचयिता दृश्यते।[३] परवर्तिसाहित्यस्योल्लेखा—

१. चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। गीतायाम्।

२. विप्रऋषिर्बल्बूथतरुक्षुदासयोर्दानं गृहीतवान्। ऋग्वेद ८.४६.३२ महाभारतानुसारमगस्त्य इल्वलाद्दैत्यराजाद् दानमगृह्णात्। वन० ९९ अध्यायतः।

३. ऋग्वेदे १०.९४ सूक्तस्य। नागो जरत्कर्णं ऋग्वेदस्य १०.७६ सूक्तस्य ऋषिः।

नुसारं गन्धर्वा वेदपाठमकुर्वन्।[१]

अर्बुदस्तु यज्ञविधानस्य पण्डितप्रकाण्डमभवत्। स देवेभ्यः यज्ञसम्पादनविधेः शिक्षामददात्।[२] एभिरुदाहरणैः स्पष्टं प्रतिभाति यत् कतिपयानार्या वैदिकयुगेऽप्यार्यभाषायां धार्मिकविधिषु च परं प्रावीण्यमवापुः। धार्मिकक्षेत्रे आर्याणामार्येतराणां च सहयोगः समारभत। देवर्षय आर्येतराणामार्यीकरणाय समुत्सुका बभूवुः।[३]

आर्येतराः कन्या आर्यगृहेषु गृहीतास्तत्रार्येतरसंस्कृतिं प्रतिष्ठापयामासुः। ईदृशीषु स्त्रीषु जाताः बालका आर्या बभूवुः। त्वष्टाऽसुरकुलोद्भवां रचनां परिणीतवान्। तस्याः पुत्रो विश्वरूपः देवपुरोहितो बभूव।[४] महिदास ऐतरेयब्राह्मणस्य रचयिता दासीपुत्र आसीत्।

रामायणमहाभारतयोरार्याणामार्येतराणां च वैवाहिकसम्बन्धा वर्णिताः। तेषु जरत्कारोः नागकन्यया सह, भीमस्य राक्षसकन्यया सह, रावणपितुर्विश्रवसः राक्षसकन्यया सह विवाहाः प्रसिद्धाः।

आर्या आर्येतराणां मध्ये प्रतिष्ठिताः सन्तः तेषामार्यीकरणं सम्पादितवन्तः। शुक्राचार्यस्तु सुप्रसिद्ध एवासुराचार्यः। आचार्या अगस्त्यादयो विन्ध्यस्य पारं गत्वा दक्षिणभारतीयानामार्यीकरणं सम्पादितवन्तः।

महाभारतानुसारं यवनकिरातगान्धारचीनशबरबर्बरशकतुषारकङ्कपह्लवान्ध्रमद्रकपौण्ड्रपुलिन्दरमठकाम्बोजादय आर्येतराः। तेषामार्यीकरणाय राजधर्मो निर्धारितः—

मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम्॥

---

१. शतपथब्राह्मणे ३.२.४.६
२. ऐतरेयब्राह्मणे ६.१.१
३. ऋग्वेदे १०.६५.११
४. तैत्तिरीयसंहितायाम् २.५.१.१

वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ।
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।।
दानानि च यथाकालं द्विजेभ्यो विसृजेत्सदा ।।

अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एव च ।।

दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च दातव्या सर्वदस्युभिः ।।

उपर्युक्तार्यीकरणस्य परिणामस्तत्रोल्लिखितः—

दृश्यन्ते मानुषे लोके सर्ववर्णेषु दस्यवः ।
लिङ्गान्तरे वर्त्तमाना आश्रमेषु चतुर्ष्वपि ।।[१]

आर्याः स्वधर्मविधीनां सम्पादनावसरेष्वार्येतरान् सम्मिलितान् कुर्वन्ति स्म । रामस्य राज्याभिषेकावसरे न केवलमार्या अपि तु म्लेच्छा अपि निमन्त्रिता बभूवुः ।[२] विश्वजिद्यज्ञे यजमानस्यास्थायिरूपेण निषादगृहे प्रवासो निर्धारितः ।[३]

युद्धेऽपि बहव आर्येतरा आर्याणां सहाया भूत्वाऽयुध्यन्त । वानरादीनां सहायतया रामो विजयं लब्धवान् । देवगन्धर्वयक्षादयः सम्मिलिता गरुडेन सहायुध्यन्त ।[४] समुद्रमन्थनपराक्रमे देवासुरनागादीनां साहचर्यं सुप्रसिद्धम् । अस्मिन् साहचर्यस्य वातावरणे क्वचित् नागप्रमुखः शेषः तपः कुर्वन् दृश्यते । प्रह्लादः पित्रा निषिद्धोऽपि विष्णुभक्तो भवति ।[५] पौराणिकसाहित्ये इयं साहचर्यगाथा प्रायशो लभ्यते ।

---

१. महाभारते शान्तिपर्वणि ६५ अध्यायतः ।
२. रामायणेऽयोध्याकाण्डे ३.२५
३. कौषीतकिब्राह्मणे २५.१५
४. महाभारते आदिपर्वणि ३३.१६—१६
५. आदिपर्वणि ३६.२-५

आर्यीकरणेन क्वचिद्राक्षसा वेदाध्ययनरता तपस्विनो दृश्यन्ते। दानवा अपि ब्रह्मणः प्रसादं प्राप्तुं तपः कुर्वन्ति।[१] तथापि विशाले भारतदेशे अरण्यवासिनो बहव आर्यसंस्कृत्याऽसंस्पृष्टा जनसमूहाः सदैवासन् येऽधुनापि प्रायः सुदूरप्राचीनकालवद् जीवनयापनं कुर्वन्ति। त एव सम्भवतः यक्षपिशाचासुरादीनां वंशोद्भवाः सन्ति।

न केवलं भारतीया आर्येतरा अपितु वैदेशिका अपि भारत आगता आर्यसंस्कृतौ दीक्षिताः। अधुनाऽपि ग्रीकराजदूतस्य हेलिओदोरमहाभागस्य विदिशासमीपं गरुडस्तम्भस्तस्योत्कीर्णलेखश्च विद्येते। तस्य राजदूतस्योपाधिना भागवतपदेन स्पष्टं भवति यत् वैष्णवसम्प्रदायस्य द्वारं विदेशिजनेभ्योऽप्यनावृतमासीत्। परवर्तियुगे ये केचित् मगशकाभीरकुशनहूणादयो जना विदेशतो भारतमागत्य निवसन्ति स्म ते सर्वेऽपि शनैः शनैरार्यसंस्कृतौ दीक्षिताः।

खीष्टस्य पश्चाच्चतुर्थशतके बहवो वैदेशिकजातयः—गूर्जर-चाहमान-मैत्रकादय आगताः। ताः सर्वाः शनैः शनैः भारतीयार्यसमाजे समीकृताः।

## वर्णपरिवर्तनम्

**सिद्धान्तपक्षः**

भारतीयसमाजो वैदिकयुगे चातुर्वर्ण्यव्यवस्थाभिः संघटितः। सा व्यवस्था गुणकर्मविभागश आसीत्[२]। कस्यचिदपि पुरुषस्य जातिः तस्य गुणकर्मणोः विपरिवर्तनेन तस्मिन्युगे परिवर्तते स्म। इदमेव परिलक्ष्य यजुर्वेदे प्रोक्तम्—

किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम्।
श्रुतं चेदस्मिन् वेद्यं स पिता स पितामहः॥ कृष्णयजुर्वेद का०सं० ३०.१

---

१. वायुपुराणे ७०.५३-५५; मत्स्यपुराणे १२६.७-११

२. Any Aryan could become a priest—Radhakrishnan: Indian Philosophy. Vol. I p. 133
शतपथानुसारं जनको ब्राह्मणोऽभवत् ११.६.२.१०

तस्मिन्युगे सुरा यद्यसुरभाषाया: प्रयोगं कुर्वन्ति स्म तर्हि ते असुरा बभूवुः ।[१] यजमानस्तु नि:सन्देहं ब्राह्मण एवाभवत् ।[२] अश्वमेधविद्यामजानन्तो ब्राह्मणकुलोत्पन्ना अपि ब्राह्मणत्वाच्च्याविताः ।[३] छान्दोग्योपनिषदि मरणान्तरे जातिपरिवर्तनस्य सिद्धान्तः प्रतिपादितः—तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा ।[४]

सूत्रयुगे संस्कारविहीना जनाः पतितसावित्रीका व्रात्या वा कथिताः । तेषां बहिष्कार एवासीत्, उपनयनादिसंस्कारा यज्ञसम्पादनं वा तेभ्यो नासीत् ।[५] आपस्तम्बानुसारं 'धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ । अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ।' राजा पतितसावित्रीकं ब्राह्मणं शूद्रकर्मणि नियोजयेदिति विधानं बौधायनः कृतवान् ।[६]

महाभारतयुगादारभ्य प्रायः वृत्त्याचारानुसारं वर्णपरिवर्तनं विचारितम्[७] । तद्यथा—

> न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
> ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ।। शान्तिपर्वणि १८८.१०
>
> सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।
> त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ।।

---

१. शतपथे ३.२.१.२४
२. शतपथे ३.४.१.३
३. शतपथे ३.४.२.१७
४. छान्दोग्ये ५.१०.७
५. आश्वलायनगृह्यसूत्रे १.१९.५–७
६. बौधायनधर्मसूत्रे २.४.२०; १.५.६५
७. महाभारते जन्मना जातिरपि प्रतिष्ठिता । तद्यथा—
दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ।। वनपर्वणि २००.८८

शूद्रे चैतद् भवेल्लक्ष्यं द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥

शान्तिपर्वणि १८६. ७-८

सर्वोऽयं ब्राह्मणो लोके वृत्तेन तु विधीयते ।
वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ॥

अनु० १४३.५२

उपर्युक्तसिद्धान्तं प्रतिपादयता महाभारते निर्दिष्टम्—शोभनाचारेण शूद्रो ब्राह्मणो भवति ।[१] हीनजातावुत्पन्नः शूद्र आगमसम्पन्नो भूत्वा संस्कृतो द्विजो भवति ।[२] नीचवृत्त्या ब्राह्मणोऽपि पूर्णरूपेण शूद्रो भवति ।[३] 'जात्या ब्राह्मणादिवर्णा न भवन्ति । केवलं गुणचरित्राचारेण ब्राह्मणत्वसिद्धिर्भवति' ।[४] महाभारतानुसारं शूद्रा अपि ब्राह्मणत्वं प्राप्तुं शक्नुवन्ति । तद्यथा—

शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः ।
वैश्यत्वं लभते ब्रह्मन् क्षत्रियत्वं तथैव च ॥
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ॥

वनपर्वणि २१२.११-१२

अस्यां दशायां कस्यचित्पुरुषस्य स्वजीवनकाले हि वारं वारं जातिपरिवर्तनं सम्भवति स्म । तथाहि

तत्र वै ब्राह्मणो भूत्वा ततो भवति क्षत्रियः ।
वैश्यः शूद्रश्च वाहीकस्ततो भवति नापितः ॥

---

१. अनुशासनपर्वणि १४४. २६

२. अनु० १४४. ४६

३. अनु० १४४. ४७

४. शान्तिपर्वणि १८६. ३-४

नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः ।
द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते ।।

कर्णपर्वणि ४५.६-७

बहवः स्मृतिकारा जातिपरिवर्तनं सम्भवं मन्यन्ते । तद्यथा

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।
तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।
उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ।।
शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ।।

मनुस्मृतौ २.१६८; १०.४२-४३

अत्र्यनुसारं ब्राह्मणा दशकोटिकाः—देवमुनिद्विजराजवैश्यशूद्रनिषादपशुम्लेच्छचाण्डालाः—कर्मानुसृत्य भवन्ति ।[१] पराशरोऽपि तदेव समर्थयति—

अग्निकार्यात्परिभ्रष्टाः सन्ध्योपासनवर्जिताः ।
वेदं चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ।। ११. २६

पौराणिकयुगेऽपि वर्णपरिवर्तनमासीदेव । भागवतानुसारं—

यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यंजकम् ।
यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ।। ७. ११. ३५

ब्राह्मणत्वस्य कर्मणा सिद्धिः कठिनासीत् । बहवो ब्राह्मणाः जातीयकर्मणो विमुखाः सन्तः क्षत्रिया वैश्या वा बभूवुः । ब्राह्मणस्य जीवनविन्यासः सुखकरो नासीत् । केचिदेव क्षत्रिया वैश्या वा ब्राह्मणा भवितुमैच्छन् । प्राचीनयुगे निःसन्दिग्धमेव वैश्यानां शिल्पकारिणां शूद्राणां चाधिभौतिकप्रतिष्ठा ब्राह्मणेभ्य उच्चतरासीत् । अस्यां परिस्थितौ उच्चवर्णा-

---

१. अत्रिस्मृतौ ३७२-३८८

न्निम्नवर्णत्वप्राप्तिः सामान्यप्रवृत्तिरासीत्। बहवस्तत्रासन् जातिब्राह्मणा अपि येषां विषये पतञ्जलिना प्रोक्तम्—

तपः श्रुतं च योनिश्चैतद् ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥[१]

**व्यवहारपक्षः**

वैदिकयुगे सर्वेषामार्याणामार्येतराणां वात्मनः व्यवसायवरणस्य स्वातन्त्र्यमासीत्। व्यवसायमात्रेण केवलं कस्यापि पुरुषस्योच्चत्वं हीनत्वं वा न प्रमाणितम्।[२] एकस्मिन्नेव कुटुम्बे बहुविधव्यवसायेषु लग्ना जना निवसन्ति स्म। नवव्यवसायं प्रति तत्कालीनप्रवृत्तिरनेन श्लोकेन ज्ञायते—

कुविन्मा गोपां करसे जनस्य कुविद्राजानं मघवन्नृजीषन्।
कुविन्मा ऋषिं पपिवांसं सुतस्य कुविन्मे वस्वो अमृतस्य शिक्षाः ॥
ऋग्वेद ३. ४५. ५

जनकस्य ब्राह्मणत्वप्राप्तिः प्रागेव निर्दिष्टा। स याज्ञवल्क्यमशिक्षयत्। ततः परं ब्राह्मणोऽभवत्।[३] महाराजस्य शन्तनोर्भ्राता देवापिरासीत्। तस्य पौरोहित्ये राजा यज्ञमकारयत्।[४]

महाभारतानुसारं न केवलं विश्वामित्रो ब्राह्मणोऽभवत्; अपितु तस्य वंश एव सर्वथा ब्राह्मणः संजातः। तद्यथा—

ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः।
क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ॥

---

१. अष्टाध्यायीं २. २. ६ अधिकृत्य।
२. The priestly class was not necessarily superior to the warrior or the trading class.—Radhakrishnan: Indian Philosophy Vol. I p. 133
३. शतपथब्राह्मणे ११. ६. २. १०
४. ऋग्वेदे १०. ६८. ५; बृहद्देवतायाम् ७. १५५; निरुक्ते २. १०

तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः ।
तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥ शल्यपर्वणि ४.४८—४९

मनुनहुषादीनां राजर्षीणां वंशजेषु बहवो ब्राह्मणा बभूवुः ।[१] तद्यथा—

ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ।
ततोऽभवन्महाराज ब्रह्म क्षत्रेण संगतम् ॥

आदिपर्वणि ७५.१४

इन्द्रः स्वयमेव ब्राह्मणस्य कश्यपस्य पुत्र आसीत् । स स्वकर्मणा क्षत्रियोऽभवत् ।[२] ब्राह्मणानां वचनमात्रेणापि क्षत्रियस्य ब्राह्मणत्वसिद्धिः संजाता । भृगोर्वचनमात्रेण राजा वीतहव्यो ब्रह्मर्षितां गतः । तस्य वंशजेषु गृत्समत्सुतेजोवागिन्द्रादयो बहवो ब्रह्मर्षयो बभूवुः ।[३]

विष्णुपुराणानुसारमाङ्गिरसशौनककाणवायनमौद्गल्यब्राह्मणवंशाः क्षत्रियोद्भूताः ।[४] पृषध्रो गोवधाच्छूद्रोऽजायत ।[५] भागवतानुसारं महाराजस्य ऋषभस्य शतपुत्रेषु ज्येष्ठो भरतो राजा बभूव । अन्येषां एकाशीतिपुत्रा याज्ञिका ब्राह्मणा बभूवुः ।[६] गार्ग्यब्राह्मणानामुद्भवः राजवंशाद्भरताद्बभूव ।[७]

ऐतिहासिकयुगेऽपि जातिपरिवर्तनस्य कतिपयमहत्त्वपूर्णोदाहरणानि दृश्यन्ते । तद्यथा कदम्बवंशोद्भवो ब्राह्मणराजो मयूरशर्मा बभूव । तस्य वंशजास्तु वर्माणो बभूवुः, तेनोपाधिना क्षत्रियत्वं प्रकटितवन्तः । तस्य वंशस्य राजा काकुत्स्थवर्मा स्वदुहितॄः क्षत्रियेभ्यः दत्तवान् ।[८]

---

१. शल्यपर्वणि ३९. ५०—५६
२. शान्तिपर्वणि २२. ११— इन्द्रो वै ब्रह्मणः पुत्रः क्षत्रियः कर्मणाऽभवत् ।
३. अनुशासनपर्वणि ३०. ५७
४. विष्णुपुराणे ४. १९. १०
५. विष्णुपुराणे ४. १. १४
६. भागवते ५. ४. १३
७. भागवते ९. २१. १९-२०
८. Epigraphia Indica V page 24

जातिपरिवर्तनमधुनाऽपि यत्र तत्र दृश्यत एव। अस्मिन् शतके बहवो वैश्यशूद्रजातयः क्षत्रिया ब्राह्मणा वा बभूवुः भवन्ति च।

## वर्णानां पारस्परिकसम्बन्धः

वर्णानां पारस्परिकसौहार्देन समाजस्य सर्वाङ्गीणसमुन्नतिः सम्भवति, सर्वत्र शान्तिश्च प्रायशो विराजते। प्राचीनकाले यदि समुन्नतजातीनां चारित्र्यबलेन सर्वत्र प्रतिष्ठासीत्तर्हि वैश्यशूद्राणामाधिभौतिकसमृद्ध्या समाजे समादरणीयं पदमविद्यत। अस्यां परिस्थितौ नासीत् कोऽप्यवसरो वर्णानां पारस्परिकस्पर्धाया ईर्ष्याद्वेषयोर्वा।[1]

प्रथमं तावदनुलोमविवाहरीत्यैव पारस्परिकसम्बन्धो दृढतरो दृश्यते। इमेऽनुलोमविवाहाः केवलमपवादस्वरूपा एव नासन्; अपितु समृद्धिशालिभिः महापुरुषैः प्रायशो विविधवर्णोत्पन्नाः कन्यका अनुलोमरीत्या परिगृहीताः। इदं परिलक्ष्य महाभारते स्पष्टमेव निर्दिष्टम्—

जातिरत्र महासर्प मनुष्यत्वे महामते।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः॥
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः॥ वनपर्वणि ८०.३१-३२

वैदिककालादारभ्य ख्रीष्टस्य पश्चाद् दशशतकपर्यन्तमनुलोमविवाहस्य प्रचलनं पर्याप्तमासीत् यद्यपि शास्त्रकारा असवर्णविवाहस्य पूर्णानुमोदनं न कृतवन्तः।

चतुर्वर्णानां परस्परं साहचर्यं सङ्गतिः समागमश्च प्राचीनयुगे प्रशस्त एवासीत्। एकस्मादेव ब्रह्मणः पुरुषाद् वा सर्वेषां वर्णानामुत्पत्तिरिति सिद्धान्तेन क्रमशः मुखबाहूरुपदप्रदेशेभ्य उत्पत्तिरिति सिद्धान्तेन च तेषां परस्परं संगतिसंहननेन समाजशरीरस्य रचनाविधानमादर्शरूपेण सर्वानुकूलमेव स्वभावतः प्रसिद्धम्। बृहदारण्यके प्रोक्तम्—तदेतद् ब्रह्म क्षत्रं

१. इदमेवोद्दिश्याशोकेन लेखापितम्—'धंमानुसस्टिया आतीनं संपटिपती।' गिरिनगरस्य शिलालेखात्।

विट्शूद्रः। तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः।[१]

ब्राह्मणस्तु ज्ञानचारित्रतपोबलेन सर्वेषां गुरुरभवत्। तस्योच्चत्व-माध्यात्मिकश्रमेणैव सिद्धम्। प्रत्यक्षतः स आत्मविकासमकरोत्, किन्तु गौणरूपेण समग्रसमाजस्तेनोपकृत आसीत्। प्रजायै सत्पथप्रदर्शनं तस्यै-वोत्तरदायित्वमासीत्। अस्य परिपालने स सततप्रयत्नशीलोऽभवत्।[२] शतपथब्राह्मणे परिलक्ष्येदं कथितम्—लोकः पच्यमानश्चतुर्भिर्धर्मैः ब्राह्मणं भुनक्ति अर्चया च दानेन चाज्येयतया चावध्यतया च।[३] मनुना ब्राह्मण-स्योत्तरदायित्वं निरूपितम्—

उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्रह्मणश्चैव धारणात्।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः॥ १.९३
ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥ १.९९

मनुना व्यवस्थापितम्—

ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम्।
पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता॥२.१३५

मनुर्ब्राह्मणानां श्रेष्ठत्वं विधातुं नैवं कृतवान्। विचारणीयैवास्मिन् प्रसङ्गे मनुना कृताऽपरा व्यवस्था—

वित्तं बन्धुर्वयः कर्म विद्या भवति पंचमी।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्॥
पंचानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः॥

---

१. बृहदारण्यके १.४.१५
२. ब्राह्मणो वै प्रजानामुपद्रष्टा। तैत्तिरीयब्राह्मणे २.२.१
३. शतपथे ११.५.७.१। अन्यत्र ब्राह्मणानधिकृत्य कथितम्—सर्वाभ्युदय-कृद्धि सः। कात्यायनस्मृतौ १२.४। स विश्वं बिभर्ति—पराशर-स्मृतौ १२.५।

क्षत्रियः तु सर्वेषां वर्णानां रक्षको बभूव। स सर्वेषां हिताय युद्धं कर्तुं सदैवोद्यतोऽभवत्। अस्मात्कारणात् धनुः तस्य लक्षणं विनिश्चितम्।[१]

महाभारतानुसारं तु—

आत्मत्यागः सर्वभूतानुकम्पा लोकज्ञानं पालनं मोक्षणं च।
विषण्णानां मोक्षणं पीडितानां क्षात्रे धर्मे विद्यते पार्थिवानाम्॥[२]

अपरं च—चतुराश्रम्यधर्माश्च यतिधर्माश्च पाण्डव।
लोकवेदोत्तराश्चैव क्षात्रधर्मे समाहिताः॥
प्रत्यक्षं सुखभूयिष्ठमात्मसाक्षिकमच्छलम्।
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम्॥
क्षात्राद्धर्माद्विपुलादप्रमेयाल्लोकाः प्राप्ताः स्थापितं स्वं यशश्च।
पुत्रवत्पाल्यमानानि राजधर्मेण पार्थिवैः।
लोके भूतानि सर्वाणि चरन्ते नात्र संशयः॥[३]
चातुर्वर्ण्यं स्थापनात्पालनाच्च तैस्तैर्योगैर्नियमैरौरसैश्च।
सर्वोद्योगैराश्रमं धर्ममाहुः क्षात्रं श्रेष्ठं सर्वधर्मोपपन्नम्।
स्वं स्वं धर्मं ये न चरन्ति वर्णास्तांस्तान्धर्माननन्यथार्थान्विदन्ति॥[४]

क्षत्रियाणां सहायता तु सर्वेभ्य आसीत्। शरणार्थिनां ब्राह्मणादीनां वर्णानां रक्षणेन मरणोत्तरकाले क्षत्रियस्य सुगतिरिति महाभारतवचनम्।[५] ह्वेनसांगः क्षत्रियाणां सहायशीलत्वं स्वरचितग्रन्थे प्रमाणितवान्।[६]

---

१. अथर्ववेद १८. २. ६०
२. शान्तिपर्वणि ६४. २७
३. शान्तिपर्वणि ६४ अध्यायतः।
४. शान्तिपर्वणि ६५ अध्यायतः।
५. शूद्रं तु मोचयेद्राजा शरणार्थिनमागतम्।
प्राप्नोतीह कुले जन्म सद्द्रव्ये राजपूजिते॥ आदिपर्वणि १६१.२५
६. The second order is that of Kshatriyas, the race of kings. This order has held sovereignty for many generations, and its aims are benevolence and mercy. Watters Vol. I p. 158

भारते वैश्यानां संख्या वैदिककाले सर्वाधिकाऽभवत्।[१] ते वैश्याः समाजे सर्वेषामुपभोगाय धनधान्यान्युत्पादयन्ति स्म। तेषामुत्पादित-धनस्य सर्वभोग्यत्वमपि प्रतिपादितम्।[२] मनुना तु निर्दिष्टम्—वैश्यः सर्व-भूतेभ्योऽन्नं यत्नतो दद्यात्। निःसन्देहं वैश्यानां कर्मविधिरत्यन्तं कठिन एव। तेषां सत्प्रयत्नेन हि वैदिकजैनबौद्धसंस्कृतीनां प्रवर्तका उन्नायकाश्च जीवन-विन्यासस्यावश्यकवस्तूनि सम्प्राप्य सर्वेषामभ्युदयायाध्यात्मकर्मणि प्रयुक्ता भवितुं समर्थाः।

वैदिककालत एव शूद्राणां सामञ्जस्यपूर्णा गतिर्दृश्यते। तत्र शूद्रकृतेऽपि यशःप्राप्तये ब्रह्मर्षिभी रचिता मन्त्रा दृश्यन्ते।[३] शूद्राणामपि प्रियो भवितुं मन्त्रा विद्यन्ते।[४] बृहदारण्यकानुसारं शूद्राः पोषकाः सर्वेषाम्। तद्यथा—स शौद्रं वर्णमसृजत्। पूषणमियं वै पूषेयेयं हीदं सर्वं पुष्यति यदिदं किंच।[५] शूद्रास्तु सेवका इति धर्मशास्त्रेषु मतम्। अस्मिन् प्रकरणे सेवया तानि शिल्पकर्माण्यपि व्यक्तानि, यैरन्ये वर्णा आवश्यकवस्तूनि प्राप्नुवन्ति। तद्यथा मनुः—

यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।
तानि कारुककर्माणि शिल्पानि विविधानि च॥ १०.१००

सेवाधर्मस्तु पुरा क्षत्रियवैश्यशूद्रेभ्यः सर्वेभ्यो निर्धारित आसीत्। तद्यथा क्षत्रियो ब्राह्मणानां वैश्याः क्षत्रियब्राह्मणानां शूद्राश्च वैश्यक्षत्रियब्राह्म-णानां सेवां कुर्वन्तु इति धर्मशास्त्रकाराः।[६] शूद्राणां सामञ्जस्यमधिकृत्य महाभारते प्रोक्तम्—यदि स्वामी वृद्धो दुर्बलो वा भवेत्तर्हि स शूद्रेण सेवकेन

---

१. तैत्तिरीयसंहितायां ५. १. १०. ३
२. तैत्तिरीयसं० ७. १. १. ५
३. तैत्तिरीयसंहितायां ५. ७. ६. ४ काठकसंहितायां ४०.१३
मैत्रायणीसंहितायां ३.४.८ वाज.स. १८४८
४. अथर्ववेदे १६.३२.८, १६.६२. १ वाज. सं० २६.२
५. बृहदारण्यके १.४.१३
६. विष्णुस्मृतौ ११२

भर्तव्यः। यदि सोऽनपत्यस्तर्हि शूद्रेण तस्मै पिण्डो देय इति। स तु स्वयमेव विपत्सु स्वामिनो भर्त्ता भवेदिति।[१]

महाभारतानुसारं तु धर्मकामाः सर्वे लोकाः शूद्रं वैश्यं राजपुत्रं च संश्रिताः।[२] राजनीतिकक्षेत्रेऽपि चतुर्णां वर्णानां साहचर्यं सुप्रतिष्ठितमासीत्। वैदिककालीने रत्निपरिषदि ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्च सर्वे सदस्या भवितुं योग्याः मताः।[३] महाभारतानुसारममात्यपरिषदि चत्वारो ब्राह्मणाः, अष्ट क्षत्रियाः, एकविंशतिः वैश्यास्त्रयः शूद्राश्च सदस्या बभूवुः। यज्ञावसरेऽपि सर्वेषां वर्णानां प्रतिनिधय आमन्त्रिताः। सर्वे च ते सहस्रसंख्यकाः सत्कृताः पूजिताश्च।[४] यज्ञेषु प्रार्थनाऽभूत्—

रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचारुचम्।।[५]

## उपजातयः

चतुर्भ्यो वर्णेभ्यः कालान्तरे शतसंख्यका उपजातयः प्रादुर्भूताः। येन सिद्धान्तेन चतुर्वर्णा व्यवस्थितास्तेनैवोपजातीनामपि व्यवस्था दृश्यते। आदौ व्यवसायानुरूपं पित्रोर्जात्यनुरूपं च वर्णानां संघटनमक्रियत। प्रथमं तावद् व्यवसायानां संख्याऽगणितैव। तथा हि यज्ञविधौ षोडश पुरोहिताः षोडशविधकार्येषु संलग्नाः। तेषां सर्वेषां पदप्रतिष्ठाः समाना नासन्। तेषां षोडशनामानि बभूवुः। वैश्यानां सामान्यतस्त्रय एव व्यवसाया निर्धारिताः—कृषिः पशुपालनं वाणिज्यं च। तेषां प्रथमं द्वयं सर्वैः समानरूपेण स्वीकृतम्। वाणिज्यार्थमसंख्यातवस्तूनि

---

१. शान्तिपर्वणि ६०.३५

२. शान्तिपर्वणि ६३.६

३. शतपथे ५ ३.१.१ काठकसं० १५.४

४. बालकाण्डे १३.१८; १३.५ महाभारते सभापर्वणि ३३.४२

५. शुक्लयजुर्वेदे १८.४८

वर्तन्ते। तेषामेकैकस्य विक्रेतुः पदमपरविक्रेतृभ्य उच्चावचमभूत्। शूद्राणामसंख्यानि शिल्पानि वर्तन्ते। प्रतिशिल्पमेका जातिरिति सुनिश्चितमेव। तथाहि कांस्यकाराः, कैवर्ताः, कुम्भकाराः, चर्मकाराः, तैलिकाः, नटाः, नापिताः रजकाः, सुवर्णकाराः—इमे सर्वे शूद्रवर्गेऽपि स्वस्वोपवर्गकं निर्मितवन्तः। बौद्धसाहित्ये शूद्राणां व्यवसायानुरूपाणि जातीनां नामानि प्राप्यन्ते। तथा हि नलकारः, मणिकारः, गन्धिकः, तुन्नवायः, रजकारः, काष्ठहारः, उदहारः, सूपकारः, दौवारिकः, रूपदक्षः, हस्त्यारोहः, हस्तिपालः, पेशस्कारः, दौर्शिकः, प्रैषकारः, सन्धिकादयः। बहवो जातिभेदा निवासिनां देशनामान्यधिकृत्य दृश्यन्ते, तद्यथा—अम्ब-देशस्याम्बष्ठाः, मगधस्य मागधाः, विदेहस्य वैदेहकाश्च। वैदेशिकानां नामानि शकयवनखशकम्बोजद्रविडपारदपह्लवदरदशबरकिराताभिधानानि प्राप्यन्ते।

अनुलोमप्रतिलोमविवाहैः वर्णसंकराणामुत्पत्तिः कालान्तरे विहिता दृश्यते। तेषां वर्णसङ्कराणां नवानि नामानि प्राप्यन्ते अथवा पुरातनोपजातिष्वन्तर्भावो दृश्यते। वर्णसंकरजातीनामीषद्विज्ञानमधोलिखितया तालिकया भवति—

| पितुर्जातिः | मातुर्जातिः | सन्ततेर्जातिः |
|---|---|---|
| ब्राह्मणः | क्षत्रियः | मूर्धावसिक्तः |
| क्षत्रियः | वैश्यः | माहिष्यः |
| वैश्यः | शूद्रः | पारशवः |
| ब्राह्मणः | वैश्यः | अम्बष्ठः |
| ब्राह्मणः | शूद्रः | निषादः |
| वैश्यः | क्षत्रियः | मागधः |
| शूद्रः | ब्राह्मणः | चाण्डालः |
| ब्राह्मणः | अम्बष्ठः | आभीरः |

मन्वादिधर्मशास्त्रकारैः वर्णसंकराणां प्रत्येकशो व्यवसायादयो निर्दिष्टाः।

## जीविकासाधनानि

प्रारम्भिकवैदिकयुगे व्यवसायनिबन्धिनी वर्णव्यवस्थाऽर्धविकसिताऽऽसीत्। तस्मिन्युगे सामान्यतः त्रयः श्रेष्ठव्यवसायाः प्रचलिताः— कृषिः पशुपालनं याजनं च। प्रायशो जना एषु त्रिषु व्यवसायेषु व्यापृता बभूवुः। सर्वे आर्याः स्वरुच्यनुकूलं व्यवसायमचिन्वन्। अपरमपि कार्यं तेषामार्याणां समक्षमासीत्—आत्मरक्षणं युद्धं च। अनेन विना तस्मिन्युगे समाजे शान्तिरनुपलभ्यासीत्। युद्धेऽपि यदा कदा शत्रूणां सम्पत्तिः प्राप्ता।

उपर्युक्तव्यवसायेषु कालान्तरे यज्ञात्मकानि कार्याणि श्रेष्ठानि मतानि। यज्ञार्थं मन्त्राणां रचनाऽपेक्षितासीत्। ते मन्त्रद्रष्टार ऋषयः सर्वोच्चा एव। यज्ञैः युद्धे विजयोऽपि प्राप्तव्यः मतः, यतः देवाः यज्ञैः परितुष्टा यजमानस्य सर्वान्कामान् परिपूरयन्ति। आर्याणां यज्ञेषु, तेषां सम्पादकेषु, विनियोज्यमन्त्रेषु, मन्त्रद्रष्टृषु चातिशयश्रद्धाऽवर्तत। तत्कालीनसमाजे यज्ञसम्पादकानां सर्वोच्चप्रतिष्ठा सम्भाविता। तेभ्यः प्रायः समकक्षाः शस्त्रधारिणो राष्ट्ररक्षका योद्धारः सम्मानिताः। कृषिः पशुपालनं च समाजस्य पोषणाय महत्त्वपूर्णं वर्तते, किन्तु तयोः करणं नागाधपाण्डित्यं त्यागं वाऽपेक्षते। उदरभरणं तयोः प्रधानप्रयोजनं वर्तते। अत एव कृषकाः पशुपालका वा समाजे तृतीयस्थाने प्रतिष्ठापिताः।

व्यवसायानुरूपं वर्णसंघटनं यदाऽक्रियत तदा कस्यापि पुरुषस्य जातिस्तस्य प्रधानकर्मानुरूपा नियता। मन्त्रद्रष्टार ऋषयः याजकाः पुरोहिताश्च ब्राह्मणाः, शस्त्रधारिणः राजानश्च क्षत्रियाः, पशुपालकाः कृषकाश्च वैश्या अभिहिताः। ब्राह्मणक्षत्रियवैश्यानां सहायकाः सोपयोगानां ललितानां च कलाशिल्पानां कर्तारः शूद्रा अभिहिताः।

वैदिककाले कृषिपशुपालनयोः प्रतिष्ठाऽधिकासीत्। प्रायः सर्वे ब्राह्मणाः क्षत्रियाश्च कृषिपशुपालने कुर्वन्ति स्म। ऋषीणामाश्रमेषु राज्ञां वाऽऽधि-

पत्ये गवां सहस्राणि वर्तन्ते स्म। तेषां विशालभूभागाः शस्यश्यामला बभूवुः।

परवर्तियुगेऽनयोर्द्वयोर्व्यवसाययोर्हीनत्वमेव निदर्शितम्। ब्राह्मणेभ्यः कृषिः निषिद्धा। तद्यथा बौधायनः—

वेदः कृषिविनाशाय कृषिर्वेदविनाशिनी।
शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत्॥ धर्मसूत्रे १.५.१०१

ज्ञानभाण्डारस्य तस्मिन्युगे वैपुल्यमासीत्। स्वाध्यायपरायणा ब्राह्मणाः कृषिं त्यक्त्वा शिलोञ्छवृत्त्या जीवनयापनं कुर्वन्ति स्म, किन्तु बहवस्तत्रासन् तादृशाः ब्राह्मणा येषां विषये बौधायन एवं लिखति स्म—

प्राक् प्रातराशात्कर्षी स्यात्।[1]

मनुस्तु ब्राह्मणेभ्यः कृषिवृत्तिं परित्याज्यां मन्यते। तद्यथा—

ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम्।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम्॥ ४.५

मनुस्तु ब्राह्मणेभ्यो धनार्जनं गौणमेव मन्यते। तदनुसारम्—

यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः।
अक्लेशेन शरीरस्य कुर्वीत धनसंचयम्॥ ४.३

मनोर्विधानं नासीत्केवलं पुस्तकस्थम्, किन्तु व्यवहारतां च गतं दृश्यते। तद्यथा—प्रशीर्णं च पुष्पफलं देवकार्यार्थं व्रीहियवमाग्रयणार्थं श्रोत्रियास्तपस्विनश्चाहरेयुः।[2]

ब्राह्मणास्तु परमुखापेक्षिणो भोजनार्थं न भवेयुरिति बहूनां मनीषिणां परिदर्शनमासीत् प्राचीनयुगे। तद्यथा महाभारते—

---

१. धर्मसूत्रे २.२.८२। रामायणानुसारं तु ब्राह्मणाः फालकुद्काललांगलिनोऽप्यासन्। अयोध्याकाण्डे ३२.३०। अन्यत्रापि द्रष्टव्यम्-वसिष्ठधर्मसूत्रे २.३२-३४; पराशरस्मृतौ २.२-१६।

२. अर्थशास्त्रे सीताध्यक्षप्रकरणे ४१ सूत्रम्।

अपि शाकं पचानस्य सुखं वै मघवन् गृहे।
अर्जितं स्वेन वीर्येण नाप्यपाश्रित्य कञ्चन ॥
फलशाकमपि श्रेयो भोक्तुं ह्यकृपणं गृहे।
परस्य तु गृहे भोक्तुः परिभूतस्य नित्यशः ॥
सुमृष्टमपि न श्रेयो विकल्पोऽयमतः सताम्।
श्ववत् कीलालपो यस्तु परान्नं भोक्तुमिच्छति ॥
धिगस्तु तस्य तद्भुक्तं कृपणस्य दुरात्मनः।
यो दत्त्वातिथिभूतेभ्यः पितृभ्यश्च द्विजोत्तमः ॥
शिष्टान्यन्नानि यो भुंक्ते किं वै सुखतरं ततः।
अतो मृष्टतरं नान्यत् पूतं किंचिच्छतक्रतो ॥

वनपर्वणि १९३.२७-३५

महाभारतानुसारं कतिपयमहाब्राह्मणा आयुधाजीविनः कृषकाः पशुपालका वा बभूवुः। द्रोणाचार्यस्तु धनुर्वेदशिक्षक आसीत्। आयोदधौम्यः कृषकः पशुपालकश्चासीत्। ब्राह्मणेभ्यो बलीवर्दा दानरूपेण दीयन्ते स्म। अवश्यमेव तेषां कृषिकर्मणे एव बलीवर्दानामुपयोग आसीत्।[1] अर्थशास्त्रानुसारमपि राजा 'ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयानि प्रयच्छेत्'।[2] ब्रह्मदेयभूमिः कृषिकर्मणा आसीत्।

केषुचित्पुराणेषु ब्राह्मणान् स्वावलम्बिनः कर्तुं योजनाः वर्तन्ते। न ते परमुखापेक्षिणो जीविकायै भवेयुरिति भावनया पद्मपुराणे स्पष्टं निर्दिष्टम्—ब्राह्मणाः शस्त्रेण जीविकोपार्जनं कुर्वन्तु व्यापारं कृषि वा कुर्वन्तु, किन्तु ब्राह्मणोचितां धार्मिकसंस्कृतिं मा त्यजन्तु।[3]

१. सभापर्वणि ५३.२१
२. अर्थशास्त्रे अध्यक्षप्रचारे १.८
३. पद्मपुराणे सृष्टिखण्डे ४० अध्यायतः। स्कन्दपुराणे काशीखण्डे पूर्वार्धे ४० अध्यायानुसारं वैश्यशूद्रयोर्वृत्त्या ये ब्राह्मणा जीविकोपार्जनं कुर्वन्ति ते शूद्रसदृशाः सन्ति।

प्राचीनयुगे बहवस्तत्रासन् ब्राह्मणा नामधारिणा एव—ये चिकित्सकाः, परिचारकाः, निग्राहकाः, भिक्षवः, व्यापारिणः पुरोहिताः, कृषकाः, शिल्पिनः, योधाजीविनः, याजकाः वा बभूवुः।[१]

आरम्भिकयुगेऽध्यापनवृत्त्या धनार्जनं समीचीनं नो मतम्। राजानो यदा कदाऽध्यापकेभ्यो वृत्त्यै धनमन्नं वा दत्तवन्तः। परवर्तियुगेऽध्यापन-शुल्करूपेणोषद्धनग्रहणं कतिपयधर्मशास्त्रकाराः समीचीनं मन्यन्ते।

पौरोहित्यं वैदिकयुगे ब्राह्मणेभ्यः श्रेष्ठा वृत्तिरिति मतम्। प्रायः सर्वेषां राज्ञां समृद्धिशालिनां गृहस्थानां च यज्ञादिधर्मकार्यसम्पादनाय धार्मिक-क्रियासु कुशला वेदविद्यापरायणा ब्राह्मणाः पुरोहितपदे नियुक्ताः। राष्ट्रस्याभ्युदयकरणे पुरोहितानामुत्तरदायित्वं सविशेषमेवासीत्।[२]

मनुस्तु पौरोहित्यं निन्दनीयमेव मन्यते। पूगयाजकाः, गणयाजकाश्च श्राद्धे त्याज्या इति मनुमतम्। अपरं च—

प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि।
प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः॥ १०.१०६

भागवतपुराणेऽपि मनुमतस्य प्रतिपादनं दृश्यते। तद्यथा—

अकिंचनानां हि धनं शिलोञ्छनं
तेनेह निर्वर्तितसाधुसत्क्रियः।
कथं विगर्ह्यं नु करोम्यधीश्वराः
पौरोधसं हृष्यति येन दुर्मतिः॥ ६. ७. ३६

भिक्षावृत्तिर्दानग्रहणं च ब्राह्मणानां शाश्वतवृत्तिरभवत्। दानेन स्वर्गः सुलभ इति मत्वा ब्राह्मणेभ्यो दानाय सर्वे समुत्सुका बभूवुः। 'ब्राह्मणः पात्रमस्ति नास्ति वा' अस्य विचारं कर्तुं नासीदवसरः साधारणजनस्य।

---

१. सुत्तनिपाते वासेट्ठसुत्ते। ब्राह्मणवृत्तिरहितानामुत्तरभारतीयब्राह्मणानां परिचयः कुमारिलेन वार्त्तिके पृ० २०४ दत्तः—पशुव्यापारिणस्ते सन्तीति।

२. ऐतरेयब्राह्मणे ८. २४-२५, ऋग्वेदे १०. ९८।

शास्त्रकारास्तु भिक्षावृत्तिं सदैव निन्दन्ति स्म। भिक्षायै केवलं ब्रह्मचारिणः संन्यासिनो वा योग्या मताः। तद्यथा महाभारते—

नाब्रह्मचारी भिक्षावान् भिक्षुर्वाऽब्रह्मचर्यवान्।

शान्तिपर्वणि ७७.२२

पराशरस्तु योग्यब्राह्मणेभ्यो दानं समर्थयति—

ब्राह्मणस्य मुखं क्षेत्रं निरूपमकंटकम्।
वापयेत् सर्वबीजानि सा कृषिः सर्वकामिका॥

किन्तु व्रतहीनेभ्योऽनधीयानेभ्यो वा ब्राह्मणेभ्यो यदि कस्मिंश्चिदपि ग्रामे भिक्षा दीयते तर्हि सर्वेऽपि निवासिनस्तत्र दण्डार्हा भवन्ति। स ग्रामस्तु चोरमेव भोजयति।[१]

आपस्तम्बधर्मसूत्रानुसारं स्नातक आचार्यार्थं विवाहार्थं यज्ञाय पित्रोर्भरणपोषणाय वा भिक्षताम्। यदि कोऽपि नरोऽलसः सन्नेवात्मतृप्त्यर्थं याचते तर्हि तस्मै भिक्षादानं पापमेव। किन्तु भिक्षामाध्यमेन प्राप्तं धनं दीनहीनेभ्यो यदि दीयते तर्हि समीचीनत्वं वर्तते भिक्षाकर्मणः।[२] अन्येऽपि धर्मशास्त्रकारा अपवादात्मकपरिस्थितौ भिक्षा कर्तव्या—इति मन्यन्ते स्म।[३] मनुर्यज्ञसम्पादनाय भिक्षां समीचीनां मन्यते।

वेदेषु दानस्यातिशयं महत्त्वं दृश्यते। उपनिषदनुसारं—त्रयो धर्मस्कन्धाः—यज्ञोऽध्ययनं दानमिति प्रथमः। आत्मज्ञानाय दानस्य महत्त्वं स्वीकर्तव्यम्—तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा।[४] ईदृशैः प्रकरणैः स्पष्टं प्रतिभाति यद् ब्राह्मणाः दानं दद्युः। मनुः ब्राह्मणेभ्यो दानग्रहणमनुचितं प्रतिपादयति।

---

१. पराशरस्मृतौ १.६६
२. आपस्तम्बधर्मसूत्रे २.५.१०
३. वसिष्ठधर्मसूत्रे १२.२-३
४. बृहदारण्यके ४.४.२२

प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्।
प्रतिग्रहेण ह्यस्याशु ब्राह्मं तेजः प्रशाम्यति ॥ ४.१८६
हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान्घृतम्।
प्रतिगृह्णन्नविद्वांस्तु भस्मीभवति दारुवत् ॥ ४.१८८
न वार्यपि प्रयच्छेद् वैडालव्रतिके द्विजे।
न बकव्रतिके विप्रे नावेदविदि धर्मवित् ॥ ४.१९२

पराशरो दानविधिं विवेचयन्नाह—

अभिगम्योत्तमं दानमाहूयैव तु मध्यमम्।
अधमं याचमानाय सेवादानं तु मध्यमम् ॥

भागवतेऽपि प्रतिपादितम्—

प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदम्।
अन्याभ्यामेव जीवेत् शिलैर्वा दोषदृक् तयोः ॥११.१७.४१

क्षत्रियाणां जीविका सामान्यतो राजकर्मभिरभवत्। तेषामपि जीवकाऽऽनुषङ्गिकरूपेण कृषिपशुपालनव्यापारादिभिरासीत्।[1] प्रायः क्षत्रियाः सैनिकाः बभूवुः। आयुधजीविनस्ते राजवेतनभोगिन आसन्।

वैश्यशूद्राणां जीविका कृषिपशुपालनव्यापारादिभिरेव प्रधानरूपेणाभवत्। शूद्राणां शिल्पकर्म प्राचीनयुगे सुप्रतिष्ठितमासीत्।[2] सेवाकर्मणाऽपि शूद्राणां जीविका सम्भूता।

उपर्युक्तचातुर्वर्ण्यव्यवसायविधानं धर्मशास्त्रानुसारं सदैव प्रतिष्ठितमासीत्। अस्य प्रतिबन्धनं कठोरं नाभवत्। तद्यथा—बहवः वैश्याः शूद्राश्च राजानः बभूवुः। वैश्यशूद्राणां सेनाऽपि युध्यते स्म। ते स्वव्यवसायानां शिक्षका बभूवुः। तेषां विद्यालयेषु विद्यार्थिनो दूरतोऽपि समागताः।

---

१. काम्बोजसुराष्ट्रक्षत्रियश्रेण्यादयो वार्ताशस्त्रोपजीविनः। अर्थशास्त्रे भेदपादतः।

२. वैश्यः शूद्रस्तथा कुर्यात् कृषिवाणिज्यशिल्पकम् ॥ पराशरस्मृतौ २.१६

आपत्तिकालीना जीविकाऽपि सर्वेभ्यो वर्णेभ्यो निर्धारिता वर्तते धर्मशास्त्रेषु। तदनुसारं ब्राह्मणः क्षत्रियवैश्ययोः, क्षत्रियः ब्राह्मणवैश्य-शूद्राणाम्, वैश्यः शूद्रस्य च जीविकासाधनैः जीवनयापनं विपत्तौ कुर्वन्तु। तस्यां समाप्तायां पुनरपि स्वकर्म स्वीकुर्युरिति।[1]

## वर्णव्यवस्थाया विरोधः

जन्मना जातिनिर्धारणं केवलं परम्परावादिभ्य एव रोचते। बहवस्तत्रा-भवन् धर्मशास्त्रकारा येषां मते जन्मना जातिस्तु तावदेव वृथा यावत्कर्म-णाऽपि तस्या अभिव्यक्तिः न भवेत्। उच्चवर्णेषु न सर्वेषां पुरुषाणां वर्णो जन्मना कर्मणा चोभयविधिभ्यां साधारणयेन प्रतिष्ठापनीयोऽभवत्। यदा जन्मनाऽन्या जातिर्भवति कर्मणा च तस्या व्यतिरिक्ता जातिः प्रतिभाति तदा वर्णव्यवस्था मूलतो निरस्ता भवति।

सर्वप्रथमः प्रसिद्धो महापुरुषो गौतम एव जन्मना जातेर्विरोधं कृतवान्। तद्यथा—

न जच्चा वसलो होदि न जच्चा होदि बह्मणो।
कम्मुना वसलो होदि कम्मुना होदि बह्मणो॥

गौतमस्य संघे नासीत् जन्मना जातेरस्तित्वमपि। संघे जन्मना केवलं मानवजातिरासीत्। नापितोऽपि संघे प्रथमं प्रव्रजितः पश्चात्प्रव्र-जितानां क्षत्रियाणामपि वन्द्योऽभवत्। शाक्याः संघे समाविष्टाः सन्तः शाक्यत्वविहीना बभूवुः।[2]

अपरेऽपि भारतीयसंस्कृतेरुन्नायका अनुयायिनां जातिविहीनत्वमेव व्यवस्थितवन्तः। शङ्कराचार्य-रामानुज-रामानन्द-चैतन्यादयो जन्मना ........

---

१. भागवते ११.१७.४७-४६

२. चुल्लवग्गे ७.१.४

जातेर्निःसारत्वं प्रदर्शितवन्तः। तेषामनुयायिनः सर्वेभ्यः वर्णेभ्यो समागता दीक्षिताः सन्तः समाना बभूवुः।[१]

## वर्णव्यवस्थायाः समीचीनत्वम्

यावत्कालं वर्णव्यवस्थाया मूलाधारः कर्माभवत् तावन्मात्रं सा समाजायावश्यमेव लाभप्रदाऽऽसीत्। वैदिककाले जन्मना शूद्रोऽपि ब्राह्मणोचितानि कर्माणि कुर्वन् ब्राह्मण एव मतः। वैदिककालस्य पश्चात् जन्मना जातिः प्रायशो प्रसिद्धा दृश्यते। अपवादरूपेणैवोच्चतरकर्मभिरुच्चतरजातिरिह जन्मनि प्राप्तव्या मता।

जन्मना जातौ प्रसिद्धायामुच्चतरकर्मणि साधारणजनानां प्रवृत्तिः कथं भवेत्, यदि 'दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः' एव लोकधारणा स्यात्। इयं परिस्थितिः ब्राह्मणानां पतनायाऽऽसीत्, वैश्यशूद्रयोश्चाभ्युत्थाने धारणेयं बाधैवासीत्। हीनतरवर्णानामभ्युत्थानाय नासीत् किंचिदपि प्रोत्साहनम्।

विविधवर्णेषु विभिन्नजातिषु च पारस्परिकसाम्यभावस्याभावोऽपि वर्णव्यवस्थायाः सदोषत्वं निर्दिशति। शूद्रात् घृणा कथं तस्य महर्षेः हृदये

---

१. राधाकृष्णन् महोदय इमां प्रवृत्तिं परिलक्ष्य लिखति—The distinctions of caste do not touch the nature of the soul. At least they belong to the bodies and determine the duties which different individuals owe to society but caste has nothing to do with the qualities of soul. Some of the Alwars worshipped by the Brahmins were Śudras. Rāmānuja allows that no distinctions should be made among the lovers of God...........Rāmānuja preaches equality in worship and proclaims that Bhakta transcends all caste distinctions. He admitted the pariahs to the temple at Melkote. Indian Philosophy Vol II p. 708.

व्याप्नुयात् येन दृष्टम्—तदेतद् ब्रह्म ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः। राष्ट्रस्यैकमुखत्वमपि जातिव्यवस्थया किञ्चिद्विनष्टमेव दृश्यते। व्यावसायिकवैशिष्ट्यमेव वर्णव्यवस्थायाः शाश्वतगुणः प्रतिभाति।

## कुटुम्बम्

समाजस्य द्वितीयं संस्थानं कुटुम्बमेवास्ति। कुटुम्बस्यादर्शप्रतिष्ठां कामयमानेन ऋषिणा गीतम्—

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।
अन्यो अन्यमभिहर्यत वत्सं जातमिवाघ्न्या॥
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम्॥
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥

अथर्ववेदे ३.३०.१-३

वसुधैव कुटुम्बकमिति सिद्धान्तेन स्पष्टमेव प्रतिभाति यत् कुटुम्बमेव स्पृहणीयसंस्थारूपेण सम्प्रतिष्ठितम्, यस्य सदस्याः परस्परं सौहार्दं सहानुभूतिं विश्वासं सहायत्वं च तावन्मात्रमनुभवन्ति यावदन्यत्र दुर्लभमेव भवति। अन्यथा वसुधायाः कुटुम्बकत्वं कथमिच्छेत्? प्राचीनकाले कौटुम्बिकसदस्यतामात्रेण व्यक्तित्वस्य विकासाय प्रचुरावसरोऽविद्यत।

प्राचीनयुगे प्रारम्भत एव बृहत्कुटुम्बस्यायोजनं प्रमीयते। कुटुम्बस्य शाश्वतरूपेण सदस्याः—माता, पिता, पुत्रः, कन्या, भ्राता, स्वसा, पतिः, पत्नी चासन्। कुटुम्बेन सम्बद्धाः प्रतिवेशिनः सुहृदो भृत्याश्च भवन्ति। अपरेऽपि सत्पुरुषाणां कुटुम्बे वसन्ति स्म। तथा हि महाभारते—

चत्वारि ते तात गृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः सदा दरिद्रो भगिनी चानपत्या ॥
उद्योगपर्वणि ३३.७०

एतेषु प्रत्येकस्य कुटुम्बे का प्रतिष्ठा, किमुत्तरदायित्वं चासीदिति विवेचनीयम् ।

## मातापितरौ

भारते 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति प्रसिद्धमेव मातृगौरवप्रतिष्ठात्मकं वाक्यम् । पिता पुत्रस्य न केवलं जन्मदाता; अपितु तस्य व्यक्तित्वस्य विकासकर्त्ताऽपि भवति । पितुः शासने पुत्रस्य सर्वोच्चकल्याणं विहितम् ।[1] वैदिककुटुम्बे पितुर्निरङ्कुशाधिकारोऽपि दृश्यते । तद्यथा—ऋज्राश्वः स्वपित्राऽन्धीकृतो यतः स प्रजानां पशून् हिंसितवानिति श्रूयते । विश्वामित्रः स्वपञ्चाशत्पुत्रान् बहिष्कृतवान् । शुनःशेपस्य पिता तं विक्रीतवान् ।

शतपथब्राह्मणानुसारं यदा पिता प्रवासाद् गृहे समागच्छत् तदा पुत्राः तं शिवमुपस्पृशन्ति स्म, तस्मै सर्वाणि वस्तूनि प्रस्तुतानि कुर्वन्ति स्म च ।[2] पितरौ देवौ मतौ । तद्यथा—मातृदेवो भव, पितृदेवो भव ।

महाभारते पितृकर्तव्यं निर्दिष्टम्—

पित्रा पुत्रो वयस्थोऽपि सततं वाच्य एव तु ।
यथा स्याद् गुणसंयुक्तः प्राप्नुयाच्च महद् यशः ॥
आदिपर्वणि ४२.४

महाभारतानुसारं पित्रोः पूजनं सर्वधर्माणां गरीयः कार्यम्, तद्यथा—

मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
इह युक्तो नरो लोकान्यशश्च महदश्नुते ॥
यच्च तेऽभ्यनुजानीयुः कर्म तात सुपूजिताः ।
धर्माधर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ॥

---

१. पितेव कितवं शशास इति ऋग्वेदे २.३३.१२

२. शतपथे १२.५.२.८ ।

एत एव त्रयो लोका एत एवाश्रमास्त्रयः।
एत एव त्रयो वेदा एत एव त्रयोऽग्नयः॥
कीर्तिं पुण्यं यशो लोकान्प्राप्स्यसे राजसत्तम।
सर्वे तस्यादृता लोका यस्यैते त्रय आदृताः॥
दशैव तु सदाचार्यः श्रोत्रियानतिरिच्यते।
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश॥
पितॄन्दश तु मातैका सर्वां वा पृथिवीमपि॥
गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः।
येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः।
प्रीणाति मातरं येन पृथिवी तेन पूजिता॥

शान्तिपर्वणि १०८ अध्यायतः।

मात्रा समं तीर्थं गतिस्त्राणं प्रपा वा नास्ति। अथ किम्—

कुक्षौ संधारणाद्धात्री जननाज्जननी तथा।
अंगानां वर्धनादम्बा वीरसूत्वेन वीरसूः॥
शिशोः शुश्रूषणाच्छक्तिर्माता स्यान्माननाच्च सा॥
पिता स्वर्गः पिता धर्मः पिता हि परमं तपः।
पितरि प्रीतिमापन्ने सर्वाः प्रीणन्ति देवताः॥

स्कन्दपुराणे माहेश्वरखण्डे कुमारिकाखण्डे ४.८६-१०० श्लोकतः।

आदर्शजनपदस्येदमपि लक्षणमासीद्यत् तत्र—

न च पित्रा विभज्यन्ते पुत्रा गुरुहिते रताः।[1]

रामायणे रामस्य चरितगाथा पित्रोराज्ञापालने सर्वोच्चं सम्प्रतिष्ठिता। तस्मिन्नेव युगे महाराजेनाशोकेन पित्रोः परिपालनमनुवर्तनं च प्रजासु प्रतिष्ठापयितुकामेन शिलालेखेषूत्कारितम्—साधु मातरि च पितरि च सुसूसा।[2]

---

१. आदिपर्वणि ६३.११

२. गिरिनगरस्य तृतीये शिलालेखे।

ये तु पित्रोः परित्यागं कुर्वन्ति स्म तेषां समाजे बहिष्कारोऽभवत्। तथा हि—मातापित्रोरुज्झकः श्राद्धे नार्हति केतनम्।[१]

न केवलमिह जीवनकाले पित्रोः सन्तोषाय प्रयतितव्यम्, अपितु तयोर्मरणान्तरेऽपि प्रतिदिनं तर्पणं कर्तव्यमेव।

## पुत्रः

भारतीयसंस्कृतौ पुत्रस्य बहुविधं महत्त्वं विद्यते। तथाहि—

पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा॥ मनुस्मृतौ ६.१३८

'आत्मा वै जायते पुत्रः' इति सिद्धान्तेन सर्वश्रेष्ठोऽयं माध्यमः पुत्रनामा येन पितुरमरत्वं सिध्येत्। पुत्राद्विना पितृणामृणादपि मुक्तिर्न सम्भवति। यथा महाभारते प्रोक्तम्—

यतस्व यत्नवांस्तात सन्तानाय कुलस्य नः।
आत्मनोऽर्थेऽस्मदर्थे च धर्म इत्येव वा विभो॥ आदिपर्वणि १३.२४

ऋषयस्तु वैदिकयुगे बहुसंख्यकपुत्रान् वीरान् वा प्राप्तुमकामयन्त[२]।

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै॥
ऋग्वेदे १.९१.२०

परस्परमाश्रयणमपि पितापुत्रयोः वैदिककालत एव प्रसिद्धम्। तथा हि 'तस्मात् पूर्ववयसे पुत्राः पितरमुपजीवन्ति। उत्तरवयसे पुत्रान् पितोपजीवन्ति।'[३] तस्मिन्युगे पुत्रं प्रति पितुः प्रेमप्रदर्शनस्य विधिरासीत् 'प्रियं पुत्रमुरसि धत्ते।' मनुष्यलोकस्य विजयः पुत्रेणैवाशंसनीयोऽभवत्। नान्येन कर्मणा। इदमेवोद्दिश्य संप्रत्तिविधिः निर्दिष्टः। तथाहि—यदा

---

१. विष्णुपुराणे ३. १५. ७—८
२. ऋग्वेदे ७.१.११, १२, १९, २४; ३.१६. ५—६
३. शतपथे १२. २. ३. ४

प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः प्रत्याह—अहं ब्रह्मे त्यादि । तस्मात् पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति । स यदेवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति । स यद्येनेन किंचिदक्ष्णाया कृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति । तस्मात् पुत्रो नाम स । पुत्रेणैवास्मिँल्लोको प्रतितिष्ठत्यथैनमेते देवाः प्राणा अमृता आविशन्ति ।[1]

महाभारते पुत्रस्य सार्थकत्वं प्रमाणितम् । स इह लोके परलोके च तारयति ।[2] तपसाऽपि निरयपतनाद्रक्षा न भवति । तथाहि—

अस्ति नस्तात तपसः फलं प्रवदतां वर ।
सन्तानप्रक्षयाद् ब्रह्मन् पताम निरयेऽशुचौ ॥
सन्तानं हि परो धर्म एवमाह पितामहः ।

आदिपर्वणि ४५.१३-१४

महाभारते पुत्रस्यात्मवत्त्वं स्पष्टं प्रदर्शितम्—

त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात् पुरुषोऽपरः ।
सरसीवामलेऽऽत्मानं द्वितीयं पश्य वै सुतम् ॥
यथा ह्याहवनीयोऽग्निर्गार्हपत्यात् प्रणीयते ।
तथा त्वत्तः प्रसूतोऽयं त्वमेकः सन् द्विधा कृतः ॥

आदिपर्वणि ७४.६५-६६

महाभारतयुगीनस्य पुत्रस्नेहस्य मनोहारि निदर्शनमित्थं प्राप्यते—

न वाससां न रामाणां नापां स्पर्शस्तथाविधः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥
स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः ।
पुत्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते ॥

---

१. बृहदारण्यकोपनिषदि १. ५. १७

२. इह वा तारयेद् दुर्गादुत वा प्रेत्य भारत ।
सर्वथा तारयेत्पुत्रः पुत्र इत्युच्यते बुधैः ॥ आदिपर्वणि १५८.५

ननु नामाङ्कमारोप्य स्नेहाद् ग्रामान्तरं गताः ।
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ॥
अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥
जीवितं त्वदधीनं मे सन्तानमपि चाक्षयम् ।
तस्मात् त्वं जीव मे पुत्र सुसुखी शरदां शतम् ॥

आदिपर्वणि ७४.५६-६३

शिशूनां विनोदशीलत्वमपि महाभारते दर्शितम् । कश्चिच्छिशुः राक्षसभयकातरौ पितरौ सम्बोध्य—

मा पिता रुद मा मातर्मा स्वसस्त्विवति चाब्रवीत् ।
प्रहसन्निव सर्वांस्तानेकैकमनुसर्पति ॥
ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत् ।
अनेनाहं हनिष्यामि राक्षसं पुरुषादकम् ॥

स्वभावत एव—

तथापि तेषां दुःखेन परीतानां निशम्य तत् ।
बालस्य वाक्यमव्यक्तं हर्षः समभवन्महान् ॥

आदिपर्वणि १५८.२१-२३

पुण्यार्जनदिशायामपि पुत्रोत्पत्तेर्महत्त्वं सुप्रतिष्ठितमेव । तथाहि—

वरं कूपशताद् वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥ आदिपर्वणि ७४.१०२

परवर्तियुगे महाकवीनां दृष्टौ पुत्रैः प्रस्तुतमुल्लासमयं वातावरणं वर्णनीयमभवत् । यथा कालिदासः—

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
र्व्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥

## कन्या

कुटुम्बे कन्यायाः समादर आसीत्। वैदिककाले भ्रातुर्भगिनीं प्रति सहायशीलत्वं स्मरणार्हमेवाभवत्।[1] वैदिकयुगे कन्याया विवाहः पितृभ्यां गम्भीरसमस्या नासीत्। ब्रह्मचर्येण कन्या युवानं विन्दते पतिमिति प्रसिद्धम्। इदमेव परिलक्ष्य कुटुम्बेऽपि कन्याया व्यक्तित्वविकासाय प्रयत्नोऽक्रियत। तत्र बहवः कन्या नैष्ठिकब्रह्मचारिण्यो विदुष्यश्चाभवन्।

विवाहस्य पश्चात्कन्या पितुर्गृहात् पतिगृहं गच्छति। अनेन कारणेन कन्यायाः स्थानं कदापि कस्मिंश्चिद्देशेऽपि पुत्रसमं न मतम्। पुत्रस्तु पितुर्वृद्धावस्थायां सहायो भवति। इत्थं भूतेऽपि कन्यायाः व्यक्तित्वे कोऽपि विशेषो वर्तते येन सा पितुः स्नेहास्पदं भवति।[2] अथ किम्—केचित् पितरः पण्डिता दुहिता जायेत' इतीच्छन्ति स्म।[3]

परवर्तियुगे धार्मिकदृष्ट्या कन्याया महिमा समवर्धत। तथाहि महाभारते काचित्कन्या भाषते—

आकांक्षन्ते च दौहित्रान् मयि नित्यं पितामहाः। आदिपर्वणि १५८.६

तस्याः पिता स्वमतं प्रदर्शयति—

मन्यते केचिदधिकं स्नेहं पुत्रे पितुर्नराः।
कन्यायां केचिदपरे मम तुल्यावुभौ स्मृतौ॥[4]

यस्यां लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखम्।
अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे॥
आदिपर्वणि १५६.३७,८३

---

१. ऋग्वेदे १.६५.४

२. नित्यं निवसते लक्ष्मीः कन्यकासु प्रतिष्ठिता।

३. बृहदारण्यकोपनिषदि ६.४.१७

४. राज्यश्रीविषये तस्य माता यशोवती कथयति—केवलं कृपाकृतविशेषः सुदूरेण तनयस्नेहादतिरिच्यते दुहितृस्नेहः।

राजमहिषी गान्धारी कन्याविषयकं स्वमतं निदर्शयति—

ममेयं परमा तुष्टिर्दुहिता मे भवेद् यदि।
ततो दौहित्रजाल्लोकादबाह्योऽसौ पतिर्मम॥
अधिका किल नारीणां प्रीतिर्जामातृजा भवेत्।
यदि नाम ममापि स्याद् दुहितैका शताधिका॥
यदि सत्यं तपस्तप्तं दत्तं वाप्यथवा हुतम्।
गुरवस्तोषिता वापि तथास्तु दुहिता मम॥[1]

महाभारतकाले राज्यभागिनी कन्याऽपि विभाविता।[2]

विवाहकाल एव कन्यायाः परिस्थितिश्चिन्तनीयासीत्। तद्यथा सीता रामायणे निवेदितवती—

पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता।
चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः॥

अयोध्याकाण्डतः ११६.३५

कालिदासोऽपि समर्थयति—

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः।
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा॥

पंचतन्त्रेऽपि तन्त्रीयं श्रूयते—

पुत्रीति जाता महतीह चिन्ता कस्मै प्रदेयेति महान्वितर्कः।
दत्त्वा सुखं प्राप्स्यति वा न वेति कन्यापितृत्वं खलु नाम कष्टम्॥

प्रतिपादितं तत् सोमदेवेन—

स्थानप्राप्तिविहीना हि गीतिवत्कुलकन्यका।
उद्वेजिनी परस्यापि श्रूयमाणैव कर्णयोः॥

---

१. आदिपर्वणि ११५ अध्यायतः।

२. आदिपर्वणि ६२.२३

विद्येव कन्यका मोहादपात्रे प्रतिपादिता।
यशसे न न धर्माय जायेतानुशयाय तु ॥

कथासरित्सागरे ५.१.२५-२६

कन्यकाभ्यः कुलगृहे ललितकलाभिः क्रीडाभिः कौतुकविनोदविलासादिभिश्च मनोरंजनं वैदिककालादेव दृश्यते। पार्वत्या आदर्शेन भारते कन्यात्वं शाश्वतरूपेण प्रतिष्ठितम्।

## भ्राता

भ्रातुर्ज्येष्ठाधिकारो वैदिककालादेव दृश्यते। तद्यथा—कनीयसो भ्रातुर्विवाहो ज्येष्ठस्य विवाहात्प्राङ् न कर्तव्य इति।[१] सम्भवतः ब्राह्मणानां कुटुम्बेषु धर्माभ्युदयार्थमेव भ्रातॄणां समवेतवसनं समीचीनं न मतम्। गौतमानुसारं विभागे धर्मवृद्धिः।[२] अस्यां दिशायां मनुमतमुचितं प्रतिभाति—

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया।
पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया ॥ ९.१११

समर्थयति बृहस्पतिः—

एकपाकेन वसतां पितृदेवद्विजार्चनम्।
एकं भवेद् विभक्तानां तदेव स्याद् गृहे गृहे ॥

महाभारते व्यावहारिकदृष्ट्या भ्रातॄणां विभागोऽवाञ्छनीय एव। तद्यथा—

विभागं बहवो मोहात् कर्तुमिच्छन्ति नित्यशः।
ततो विभक्तास्त्वन्योन्यं विक्रुध्यन्तेऽर्थमोहिताः ॥
ततः स्वार्थपरान् मूढान् पृथग्भूतान् स्वकैर्धनैः।
विदित्वा भेदयन्त्येतानमित्रा मित्ररूपिणः ॥

---

१. अथर्ववेदे ६.११२

२. गौतमे २८.४

विदित्वा चापरे भिन्नानन्तरेषु पतन्त्यथ ।
भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्तते ॥[१]

भ्रातॄणां पारस्परिकव्यवहारमादर्शयता व्यासेन प्रोक्तम्—ज्येष्ठो भ्राता कनीयसः प्रति तथा व्यवहरेद्यथाचार्यः शिष्यं प्रति व्यवहरति। कनीयांसो गुरुमेवानुवर्तन्ते। ज्येष्ठो दीर्घदर्शी भवेत्तर्हि कनीयांसोऽपि तादृशा भवन्ति। ज्येष्ठो यथाकालमन्धो जडो विद्वान्वा भवेत्। कनीयसामपराधं दृष्ट्वापि न जानामीति दर्शयेत्, तथापि तेषामपराधप्रवृत्तिं निरोद्धुं यतेत। यदि ज्येष्ठभ्रातुर्विचारोऽशुद्धो भवति तर्हि समस्तं कुलं विनश्यति। स तु सुनीतिपथेन कुलमुन्नतिशीलं करोति। यदि ज्येष्ठोऽपि सन् कौटिल्यमाचरेत्तर्हि स स्वपदार्हो न भवति, न च ज्येष्ठांशभाग्भवति। राजा तं दण्डयेत्। यदि कनीयान् भ्राताऽपि पापकर्मणि रतस्तर्हि सोऽपि पैतृकसम्पत्तौ स्वभागस्याधिकारी न भवति।[२] महाभारते पाण्डवानाम्, रामायणे रामादीनां भ्रातृत्वं स्मरणार्हमेव।

मनुना ज्येष्ठभ्रातुः कर्तव्यमुदात्तपूर्णमेवाभिव्यक्तम्। तथा हि—

पितेव पालयेत् पुत्राञ्ज्येष्ठो भ्रातॄन्यवीयसः।
पुत्रवच्चापि वर्तेरञ्ज्येष्ठे भ्रातरि धर्मतः ॥
ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः।
ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ॥
यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः।
अज्येष्ठवृत्तिर्यस्तु स्यात्स संपूज्यस्तु बन्धुवत् ॥ ९.१०८-१११

---

१. आदिपर्वणि २९. १८—२०। अस्मिन् प्रसंगे सुप्रतीकविभावस्वोः कथा तत्रैव द्रष्टव्या।

२. महाभारतेऽनुशासनपर्वणि।

ज्येष्ठयवीयसोर्भार्ययोर्विषये भ्रातॄणां मान्यतां निदर्शयता मनुना प्रोक्तम्—

भ्रातुर्ज्येष्ठस्य भार्या या गुरुपत्न्यनुजस्य सा।
यवीयसस्तु या भार्या स्नुषा ज्येष्ठस्य सा स्मृता ।। ९.५७

रामायणे सीतालक्ष्मणयोः परस्परव्यवहार आदर्श एव।

## गृहपतिः पत्नी च

गृहपतिः कुटुम्बस्य स्वामी बभूव। कुटुम्बस्य सर्वेषां सदस्यानां भरणं पोषणमतिथीनां पूजनं धर्मक्रियाकलापानां सम्पादनं तथा कुलसदस्यानां व्यक्तित्वविकासनं च प्रधानतस्तस्यैवोत्तरदायित्वमभूत्। तस्य पत्नी तेषु सर्वेषु कार्येषु सहायाभूत्। तदेव पर्यालोच्य मनुना निर्दिष्टम्—

देवातिथिभृत्यानां पितॄणामात्मनश्च यः।
न निर्वपति पंचानामुच्छ्वसन्न स जीवति ।।

गृहपतये एकपत्नीव्रतमेवादर्श आसीत्।[1] दम्पतीशब्देन तदेवाभिव्यक्तं भवति।[2] सपत्नीसंकुलं गृहं कलहस्थानमेव निदर्शितम्।[3] तदधिकृत्य कूपे पतितस्त्रित आत्मगतं निवेदयति—सं मा तपन्त्यभितः सपत्नीरिव पर्शवः।[4] बहुपत्नीत्वं सुश्रीकत्वं द्योतयतीति वैदिकी धारणा।[5] हरिश्चन्द्रः शतभार्यो बभूव।[6] महर्षेर्याज्ञवल्क्यस्य कात्यायनी मैत्रेयी च द्वे भार्ये बभूवतुः।

१. बहुपत्नीत्वमपि वैदिककालतो दृश्यते। यथा ऋग्वेदे १०.१४५

२. ऋग्वेदे ५.३.२,८.३१.५; १०.६८.२

३. ऋग्वेदे १०.१५६

४. ऋग्वेदे १.१०५.८

५. श्रिया वा एतद्रूपं यत्पत्नयः। तैत्तिरीयब्राह्मणे ३.८.४

६. ऐतरेयब्राह्मणे ३३.१

परवर्तियुगे सपत्नीनां समाहारः परिहर्तव्य इति विधानं दृश्यते सूत्र-स्मृतिषु। 'धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत'।[१] पत्नी चेत् कटुवादिनी सदोषा वा भवेत्तर्हि त्याज्या सा।[२] ईदृशेषु विधानेषु भूतेष्वपि समृद्धिशालिनः राजानश्च शतं सहस्रं वा पत्नीः विलासार्थं स्वीकुर्वन्ति स्म।

पत्न्याः पातिव्रत्यं श्रेष्ठधर्मरूपेण वैदिककाले प्रतिष्ठितं दृश्यते। तद्यथा वृद्धच्यवनस्य युवती पत्नी निवेदयति—यस्मै मां पिताऽदान्नैवाहं तं जीवन्तं हास्यामीति।[३] मनुनापि पातिव्रत्यमधिकृत्य प्रोक्तम्—

विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः।
उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः॥५.१५४

रामायणानुसारं पतिः पत्न्याः जीवनकाले देवः स्वामी चास्ति। सा पतिसेवया सुगतिं प्राप्नोति।[४] कालिदासोऽपि समर्थयति—

तदेषा भवतः कन्या त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी॥

दम्पत्योः पारस्परिकसद्भावनां प्रतिष्ठापयन् मनुः प्राह—

अन्योन्यस्याव्यभीचारो भवेदामरणान्तिकः।
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः॥
तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ।
यथा नाभिचरेतां तौ वियुक्तावितरेतरम्॥ ९.१०१-१०२

---

१. आपस्तम्बगृह्यसूत्रे २.५,११.१२-१३

२. मनुस्मृतौ ५.८०-८१

३. शतपथे ४.१.५.९

४. रामायणे अयोध्याकाण्डे २४.२६-२७। तदेव महाभारते—
पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः। अनुशासने १४६.५५।

महाभारते दाम्पत्यजीवनस्यानुपमं निदर्शनं द्रौपदीसत्यभामयोः संवादे विद्यते। द्रौपदी स्वजीवनविन्यासं वर्णयति —

नाभुक्तवति नास्नाते नासंविष्टे च भर्तरि।
न संविशामि नाश्नामि सदा कर्मकरेष्वपि॥
क्षेत्राद्वनाद्वा ग्रामाद् वा भर्तारं गृहमागतम्।
अभ्युत्थायाभिनन्दामि आसनेनोदकेन च॥
प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदायिनी।
संयता गुप्तधान्या च सुसम्मृष्टनिवेशना॥
यच्च भर्ता न पिबति यच्च भर्ता न सेवते।
यच्च नाश्नाति मे भर्ता सर्वं तद् वर्जयाम्यहम्॥
नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम्।
स्वयं परिचराम्येतां पानाच्छादनभोजनैः॥
नैतामतिशये जातु वस्त्रभूषणभोजनैः।
नापि परिवदे चाहं तां पृथां पृथिवीसमाम्॥
अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम्।
एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम्॥
प्रथमं प्रतिबुध्यामि चरमं संविशामि च।
नित्यकालमहं सत्ये एतत् संवननं मम॥[१]

मनुस्मृतावपि महाभारतीयादर्शाः समर्थिता विद्यन्ते।[२]

पत्नीनां गृहस्यार्थिकविनियोजनेऽधिकारोऽविद्यतेति कामसूत्रेऽपि प्रतिपादितम्—सांवत्सरिकमायं संख्याय तदनुरूपं व्ययं कुर्यात्।[३]

---

१. महाभारते वनपर्वणि २३३.२४-५८

२. मनुस्मृतौ ५.१५०; ६.११; १३

३. कामसूत्रे ४.१.३२

भागवते दाम्पत्यजीवनस्य दिव्यत्वं प्रतिष्ठितम्। तथाहि—

या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा।
हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते॥ ७.११.२६

भारतीयकौटुम्बिकजीवने दाम्पत्यस्योच्चादर्शः पार्वतीशिवयोः, सावित्री-सत्यवतोः, दमयन्तीनलयोः, सीतारामयोश्चरितगाथासु प्रतिष्ठितः। काव्येषु दाम्पत्यस्य ललितभावः प्रायशः प्राप्यते। तथाहि कालिदासस्योक्तिः—

'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ' इति।

## प्रतिवेशिनः सुहृदश्च

कौटुम्बिकसंस्थाने प्रतिवेशिनां सुहृदां च महत्त्वपूर्णं पदं विद्यते। कौटुम्बिकविकासे तेषां सहायत्वं वांछितम्। वैदिककालत एव मैत्री-भावस्य दिव्यादर्शः समाजस्य समक्षमभूत्। द्यावापृथिव्यौ इन्द्राविष्णू मित्रावरुणौ च मित्रोचितसाहचर्यं प्रतिष्ठापयन्ति।

महाभारते सन्मित्रस्य प्रशंसा कृता—

यौनात्सम्बन्धाल्लोके विशिष्टं संगतं सताम्।
सद्भिः सह नरश्रेष्ठ प्रवदन्ति मनीषिणः॥ द्रोणपर्वणि ४.१३

रामायणेऽपि मित्रस्यौदात्त्यं प्रदर्शितम्—

आढ्यो वापि दरिद्रो वा दुःखितः सुखितोऽपि वा।
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः॥
धनत्यागः सुखत्यागः देहत्यागोऽपि वा पुनः।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम्॥

किष्किन्धाकाण्डे ८.८-९

मैत्रीभावस्य समारम्भः सोत्सवं सोल्लासं च धार्मिकविधिना सम्पादितः। रामसुग्रीवयोरग्निसाक्षिको मैत्रीसमारम्भो रामायणे वर्णितः—

रोचते यदि वा सख्यं बाहुरेष प्रसारितः।
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा॥

एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ।
स प्रहृष्टमना हस्तं पीडयामास पाणिना ॥
हृद्यं सौहृद्यमालम्ब्य पर्यष्वजत पीडितम् ।
ततो हनूमान् संत्यज्य भिक्षुरूपमरिन्दमः ॥
काष्ठयोः स्वेन रूपेण जनयामास पावकम् ।
दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् ॥
तयोर्मध्येऽथ सुप्रीतो निदधे सुसमाहितः ।
ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ॥
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ।
त्वं वयस्योऽसि मे हृद्यो ह्येकं दुःखं सुखं च नौ ।
सुग्रीवं राघवो वाक्यमित्युवाच प्रहृष्टवत् ॥

किष्किन्धाकाण्डे ५.१२-१६

तस्मिन् रामायणयुगे मैत्रीभावः पूज्य आसीत्, तदनकूला धारणाऽऽसीत्—उपकारफलं मित्रम् ।[१]

सर्वेषूत्सवेषु प्रतिवेशिनां सहभोगोऽपेक्षितो मतः । तद्यथा मनुः—

प्रतिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे ।
अर्हावभोजयन्विप्रो दण्डमर्हति माषकम् ॥ ८.३९२

मत्स्यपुराणेऽपि तदेव प्रतिपादितम् । ब्राह्मणान् भोजयन् यः प्रतिवेश्यान्नामन्त्रयति स पापभाग्भवति पुण्यं नार्हति च । स तु राज्ञा दण्डनीयः ।[२]

## भृत्याः

भृत्यस्य कौटुम्बिकविन्यासे महत्त्वमासीत् । यथा रामायणे निगदितम्—

न ह्यर्थास्तत्र तिष्ठन्ति न दारा न च बान्धवाः ।
सुप्रीतो भृत्यवर्गश्च यत्र तिष्ठति राघव ॥ उत्तरकाण्डे ८४.६

---

१. किष्किन्धाकाण्डे ७.१४, ८.२१
२. मत्स्यपुराणे २२७ अध्याये ।

भृत्यास्तु गृहे सुखं निवसन्ति स्म। तद्यथा मनुर्विहितवान्—

भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि।
भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती॥ ३.११६

## कौटुम्बिकं सौरभ्यम्

यद्यपि बहुसन्तानैः कष्टत्वं नैसर्गिकमेवानुबुद्धम्,[१] तथापि कुटुम्बस्य वैपुल्यं वांछनीयं मतम्। तथाहि महाभारते—

येषां च बहवः शूरा ज्ञातयो धर्ममाश्रिताः।
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः॥
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः।
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव॥

आदिपर्वणि १५०.३४-३५

तदेव समर्थयता मनुना प्रोक्तम्—

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति॥ ८.३८९

तदनुसृत्य भागवते—

मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम्।
गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः॥१०.४५.७

महाभारतेऽपि—

भृतो वृद्धो यो न बिभर्ति पुत्रः स्वयोनिजः पितरं मातरं च।
तद्वै पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्ति लोके॥
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य गुरुघातिनः।
चतुर्णां वयमेतेषां निष्कृतिं नानुशुश्रुम॥

शान्तिपर्वणि १०८.३१-३२

---

१. ऋग्वेदे १.१६४.३२

धार्मिकक्रियाकलापेषु कुटुम्बस्य प्रायः सर्वे सदस्याः सहकारिणो बभूवुः।[१] इत्थं सह पुण्यार्जनमभवत्। पापनिवारणमपि सर्वेषां सह भवत्विति योजनाऽथर्ववेदे दृश्यते—

यन्मे माता यन्मे पिता भ्रातरो यच्च मे स्वा यदेनश्चकृमा वयम्।
ततो नो वारयिष्यतेऽयं देवो वनस्पतिः ॥१०.३.८

यदि कोऽपि जनः स्वकुटुम्बस्य सदस्यानधिक्षिपति स्म तर्हि सामाजिकाः तं धिक्कुर्वन्ति स्म। तथा हि छान्दोग्योपनिषदनुसारं—स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा किंचिद् भृशमिव प्रत्याह—धिक्त्वास्त्वित्येवैनमाहुः, पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति।[२] राजाऽपि कौटुम्बिकशालीनतायाः प्रतिष्ठायै जागरूक आसीत्। तत्र विधानमासीत्—

मातरं पितरं जायां भ्रातरं तनयं गुरुम्।
आक्षारयञ्छतं दाप्यः पन्थानं चाददद् गुरोः॥
मनुस्मृतौ ८.२७५

कौटुम्बिकविन्यासो न केवलमात्मसम्बन्धिनामुपकारायाभ्युदयाय वा भवति; अपितु तेनात्महितं सिध्यतीति पुराविदां धारणासीत्। तथा हि बृहदारण्यके आत्मार्थस्य व्याख्या कृता—

---

१. The sacrificer's near relatives who always share the same roof are called. The Yajmāna touches the Adhvaryu, the wife touches the sacrificer, the sons and brothers of the sacrificer touch the wife. They are all covered with a fresh piece of cloth. History of Dharmaśāstra Vol II pt II p. 1158.

२. छान्दोग्योपनिषदि ७.१५.२

न वारे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति। इत्थं जाया, पुत्रः, वित्तम्, देवाः, सर्वाण्यप्यात्मनः कामाय प्रियाणि भवन्ति।[1] महाभारतेऽपि तदनुसृत्य प्रोक्तम्—

इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः।
आपद्धर्मप्रमोक्षाय भार्या चापि सतां मतम्॥
दृष्टादृष्टफलार्थं हि भार्या पुत्रो धनं गृहम्।
सर्वमेतद्विधातव्यं बुधानामेष निश्चयः॥

आदिपर्वणि १५७.२६, २८

अपरं च इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति॥ १५८.४

## सम्पत्त्यधिकारः

कुटुम्बस्य कतिपयसदस्यानां कुटुम्बसम्पत्तौ स्वामित्वमासीत्। यदि तेषु सदस्येषु कोऽपि स्वभागं पृथक्कर्तुमियेष स तत्कालीनधर्मव्यवस्थया तं भागं प्राप्तवान्। धर्मपदावलीषु—विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनम्।

वैदिकयुगे पितुर्जीवनकालेऽपि पुत्रः स्वभागं प्राप्तुमशक्नोत्।[2] ईदृशः पुत्रः सामान्यतः सम्माननीयः नासीत्। गौतमानुसारं—न भोजयेत्... पित्रा वाकामेन विभक्तान्।[3] पितरि मृते प्रव्रजिते वा पुत्राणामिच्छानुसारं विभागो निर्णीतः। प्रायो वयस्कानामेव विभागोऽभवत्। बालकानां भागा मातृबन्धुषु ग्रामवृद्धेषु वा स्थापिताः।[4] विभागयोग्या सम्पत्तिः स्थावरजङ्गमभेदेन द्विविधा मता। विद्याधनं सामान्यतोऽविभाज्यमासीत्।[5] मनुस्मृतावविभाज्यानि निदर्शितानि—

---

१. बृहदारण्यके ४.५.६
२. ऋग्वेदे १.७०.५; तैत्तिरीयसंहितायाम् ३.१.६.४
३. गौतमे १५.१५, १६
४. अर्थशास्त्रे ३.५
५. स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यात्। अवैद्याः समं विभजेरन्। गौतमे २८.२८—२६

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥ ६.२१६

सम्पत्तौ स्त्रीणामधिकारोऽपि मतः। सामान्यतो विभागार्थं तासां गणना पुत्रवत्कृता।

## अस्पृश्यता

वैदिकयुगेऽस्पृश्यतायाः प्रादुर्भावो नासीत्। शनैः शनैः आहारशुद्धेः विवेकः समवर्धत। अस्यां दिशायां सम्बन्धमात्रेणांशुद्धेः कल्पना कृता। समाजे ये जनाः सात्त्विकवृत्तेः परावर्तितास्तेषां वस्तूनि न ग्राह्याणीति स्पष्टविचारः प्रतीयते।

अपरं च संसर्गदोषेण दूषणमिति मतम्। संस्कृतिविहीना जना एवास्पृश्याः। स्पर्शने तेषां दुर्वृत्तीनां सम्प्रतिपत्तिः स्यादिति। तथापि प्रारम्भिकयुगेऽस्पृश्यताया वैषम्यं नातिकठोरमिति प्रतिभाति स्मृतिवचनेन–

देवयात्राविवाहेषु यज्ञप्रकरणेषु च।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टं न विद्यते ॥ अत्रिस्मृतौ २४७

धार्मिककार्येषु यज्ञादिषु शूद्रा म्लेच्छाश्चामन्त्रिताः सम्मानिताश्चेति निःसन्दिग्धमेव।[1]

## दासः

वैदिककालत एव भारते दासानामुल्लेखाः प्राप्यन्ते। दासदासीनां परिस्थितिः प्रायशः कुटुम्बस्य सदस्यवदासीत्। तानधिकृत्यैकमेवासीद्वैषम्यं यत्तेषां दानं विक्रयो वा सम्भव आसीत्। दासं प्रति सप्रेम व्यवहर्तव्यमिति शिलालेखेऽशोकेनोत्कारितम्।

---

१. रामायणे बालकाण्डे १३. १३, १८।

राजकीयकुटुम्बेष्वसंख्यदासदासीनां समाहार आसीत्। तेषां जीवन-विन्यासः प्रायः विलासपूर्णः सुखमयश्चाभूत्।[१] युधिष्ठिरस्य दासानां वर्णनं महाभारते लभ्यते। तदनुसारम्—

शतं दासीसहस्राणि तरुण्यो हेमभद्रिकाः।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलंकृताः॥
महार्हमाल्याभरणाः सुवस्त्राश्चन्दनोक्षिताः।
मणीन् हेम च बिभ्रत्यश्चतुःषष्टिविशारदाः।
अनुसेवां चरन्तीमाः कुशला नृत्यसामसु॥
सभापर्वणि ६१.८.१०

दासा अपि—

प्रदक्षिणानुलोमाश्च प्रावारवसनाः सदा।
प्राज्ञा मेधाविनो दान्ता युवानो मृष्टकुण्डलाः।
पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत॥ ६१.१२-१३

मनुः सप्तविधदासानामुल्लेखं कृतवान्। तथा हि—

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ।
पैतृको दण्डदासश्च सप्तैते दासयोनयः॥ ८.४१५

महाभारतयुगेऽपि दासत्वस्य कुरूपत्वेन जनाः प्रभाविता बभूवुः। दासत्वस्य विरोधे निर्णीतम्—

मानुषा मानुषानेव दासभावेन भुञ्जते॥ शान्तिपर्वणि २६२.३८

अर्थशास्त्रे दासानां स्वातन्त्र्यस्य विधानमौदार्यपूर्णमेव विहितं दृश्यते।

---

१. महाभारतानुसारं स्वयमर्जुनो विराटनगरे राजदासीभ्यो ललितकलानां शिक्षामदात्। अर्थशास्त्रेऽपि राजदासीनां शिक्षणस्य राजकीय-व्यवस्थाया वर्णनं विद्यते।

# समाजं प्रति व्यक्तिः

प्राचीनभारते मानवस्य वैयक्तिकपरिधिरकल्पनीयः सन् प्रतिष्ठा-विहीन आसीत्। पुरा हि 'केवलादी भवति केवलाघः' इति सिद्धान्तेन मानवस्य सङ्कुचितदृष्टिकोणस्य हेयत्वं निदर्शितमेव।[१] सूर्यवद् भवितुं पुरातनः कविः प्रार्थयते—दिशामेकपुण्डरीकोऽसि। अहं मनुष्याणामेक-पुण्डरीकं भूयासम्। तदेवानुसृत्य छान्दोग्ये प्रोक्तम्—यो वै भूमा तत्सुखं नाल्पे सुखमस्ति।

महाभारतानुसारं तु—

सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः।
कर्मणा मनसा वाचा स धर्मं वेद जाजले॥
न तत्परस्य संदध्यात् प्रतिकूलं यदात्मनः।

कुन्ती भीममशिक्षयत्—कृतज्ञतैव जीवनम्। उपकारिणोऽधिकतर-मुपकारं कुरु। गीतायां 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि' इति धारणायाः श्रेष्ठत्वं प्रसाधितम्। लोकसंग्रह एव गीतायां सर्वोच्चप्रवृत्तिरूपेण प्रतिष्ठितः।

गौतमेनापि समर्थितम्—

यथाहं तथा एते यथा एते तथा अहं।
अत्तानं उपमं कत्वा न हनेय्यं न घातये॥
यथा मम परेषां च भयं दुःखं च न प्रियम्।
तदात्मनः को विशेषो यत्तं रक्षामि नेतरम्॥

तदनुसृत्याशोकेनोत्कारितम्—कंतटवमते हि मे सर्वलोकहितं नास्ति हि कमंतरं सर्वलोक हितत्या य च किंचि पराक्रमामि अहं किंति भूतानं

---

१. वैदिकास्तु सहस्रपोष्या भवितुमैच्छन्। ऋग्वेदे ६.३५.१
अपरं च—पुमान् पुमांसं परिपातु विश्वतः। ऋग्वेदे ६.७५.१४
शतहस्तसमाहर सहस्रहस्त संकिर। अथर्ववेदे ३.२४.५

आनर्णां गच्छेयं (कर्तव्यमतो हि मे सर्वलोकहितम्। नास्ति हि कर्मान्तरं सर्वलोकहितात्। यत् च किंचित् पराक्रमे अहं किमिति भूतानां आनृण्यं इयाम्।[१]) सर्वलोकहितं परमपुण्यमेवेति महाभारते प्रोक्तम्—

यदा न कुरुते पापं सर्वभूतेषु कर्हिचित्।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा॥

आदिपर्वणि ७६.५२

सर्वान् प्राणिनः प्रति मैत्रीभावना प्रतिपाद्येति गौतमेनोक्तम्—

सब्बे सत्ता सब्बे पाणा सब्बे भूता च केवला।
सब्बे भद्रानि पस्सन्तु मा कंचि पापमागवा॥

खन्धवत्तजातके ३१५

तत् सर्वं भागवते परिणामितम्—

तप्यन्ते लोकतापेन साधवः प्रायशो जनाः।
परमाराधनं तद्धि पुरुषस्याखिलात्मनः॥

भागवते ८.७.४४

## नारीणां सामाजिकप्रतिष्ठा

कौटुम्बिकप्रतिष्ठा तु कुलस्त्रीणां प्राग् वर्णिता वर्तते। कुटुम्बे ताः कन्यकाः पत्न्यः मातरः स्वसारः पुत्रवध्वः वा दृश्यन्ते। एभिः सम्बन्धैः विरहितानामपि नारीणां पदं पर्यालोच्यं वर्ततेऽधुना।

**प्राकृता नार्यः**

याः स्त्रिय उपर्युक्तसम्बन्धविहीना बभूवुः सामान्यतस्तासां समाजे विगर्हणैव दृश्यते। कारणमपि तत्रासीत्। राष्ट्रस्याभ्युदयपथे ताभिः प्रस्तुता विघ्नाः प्रत्यक्षा एवासन्। व्यक्तीनामपि तपःसाधनापथे स्त्रीकृतानि बहुविधानि पर्यवस्थानानि विदितान्येव। अस्यां परिस्थितौ साधारणस्त्रीणां निन्दा वैदिककालत भारतीयसाहित्ये संगृहीता वर्तते।

१. षष्ठे शिलालेखे।

स्त्रीणां मनोऽनियन्त्रणीयं मतम्।[1] स्त्रीभिः सह मैत्री न वर्तते। निर्घृणहृदयास्ता वर्तन्ते।[2] महाभारते सर्वेभ्यः स्पृहणीया नार्यः प्राकृताः मताः।[3] तादृशीनां नारीणां विषये रामायणे प्रोक्तम्—

एषा हि प्रकृतिः स्त्रीणामासृष्टे रघुनन्दन।
समस्थमनुरज्यन्ति विषमस्थं त्यजन्ति च॥
शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णता यथा।
गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः॥

कौटिल्यस्तु स्त्रियं व्यसनमेव मन्यते। तथाहि—स्त्रीषु हि बालिश्य-मनेकविधं निशान्तप्रणिधौ व्याख्यातम्।[4] पौराणिकयुगेऽपि स्त्रीणां दोषदर्शनं वैशिष्ट्येन कृतम्। तद्यथा भागवते—

शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम्।
हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम्॥
न हि कश्चित्प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम्।
पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च॥

६.१८.४१–४२

बौद्धसंस्कृतौ स्त्रीणां दोषदर्शनमतिशयितमेव वर्तते। तद्यथा—

याव हि वनथो न छिज्जति अनुमत्तोपि नरस्स नारिसु।
पटिबद्धमनो न ताव सो वच्छो खीरपको व मातरि॥

धम्मपदे मग्गवग्गे १२

---

१. ऋग्वेदे ८.३३.१७

२. न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता।

ऋग्वेदे १०.९५.१५

३. विराटपर्वणि ६.३३

४ अर्थशास्त्रे ३.८

गौतमबुद्धेन स्पष्टमेव निर्दिष्टम्—नार्यस्तु संघे प्रविष्टाः। अतः धर्मोऽयं पंचशतवर्षपर्यन्तमेव स्थायित्वमर्हति—अन्यथा सहस्रवर्षावधिर्भवेदस्य धर्मस्य।[१] जैनसंस्कृतावपि स्त्रीणां नैघृण्यं व्याख्यातम्। तथा हि—

आभिजात्यं वयो रूपं विद्या वृत्तं यशः श्रियम्।
विभुत्वं विक्रमं कान्तिमैहिकं पारलौकिकम्॥
प्रीतिमप्रीतिमादेयमनादेयं कृपां त्रपाम्।
हानिं वृद्धिं गुणान् दोषान् गणयन्ति न योषितः॥
वृश्चिकस्य विषं पश्चात् पन्नगस्य विषं पुरः।
योषितां दूषितेच्छानां विश्वतो विषमं विषम्॥
जालकैरिन्द्रजालेन वञ्च्या ग्राम्या हि मायया।
ताभिः सेन्द्रो गुरुर्वञ्च्यस्तन्मायामातरः स्त्रियः॥
लक्ष्मीः सरस्वती कीर्तिर्मुक्तिस्त्वमिति विश्रुताः।
दुर्लभास्तासु वल्लीषु कल्पवल्ल्य इव प्रिये॥

महापुराणे ४३.१०१-११२

बहवो नार्यो विषकन्यका इव प्रयुक्ताः श्रूयन्ते। तासां कृते आसृष्टेर्युद्धे समारम्भा अपि दृश्यन्ते। छलनारूपेण विष्णोरप्यसुरप्रतारणं सुप्रसिद्धमेव। नाटकादिषु स्त्रीकृतप्रपञ्चैः सतामपि दुःस्थितिं को न जानाति। भारतदेशोऽयं मोक्षापवर्गपरायणो नारीणामीदृशं बाधकत्वं विचार्य साधुपथगामिनिर्देशनार्थं यदि विलासोन्मुखीनां ललनानां प्रवृत्तिं निन्दितवान् तर्हि किमाश्चर्यम्।

---

१. चुल्लवग्गो १०.१.६

नारीणां हीनत्वम्

नारीवर्गस्य पुरुषैः सह साम्यं नासीत्। तासां दानमेव प्रहीणत्वं द्योतयति।[1] राज्ञां समृद्धिशालिनां च पुरुषाणामन्तःपुरे भोग्यवस्तूनामिव कन्यकानां रमणीनां च समाहारः कृतः।[2] धनिका ऋषयो वा बहुपत्नीत्वेनात्मानं बहु मन्यन्ते स्म। गणिकापदादपि नारीणां मनोरंजनसाधनत्वं तासां विगर्हणाय भवति।

नारीणामवगुण्ठनं तासां सुरक्षायै बभूव। तासां कृतेऽवगुण्ठनवन्तो रथा निर्मिताः।[3]

कन्यकानां व्यक्तित्वस्य विकासाय तादृशः प्रयत्नो नाक्रियत यादृशः बालकेभ्यः कृतः। तासां विवाहोऽपि स्वल्पे वयसि करणीय इति परवर्तियुगीनस्मृतिकाराणां स्पष्टं मतं दृश्यते।

प्राचीनभारते नारीणां स्वातन्त्र्यं सर्वथा निषिद्धमासीत्।

नारीणां सम्मानः

'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः' इति सामान्योक्तिः। नारीणां सामाजिकप्रतिष्ठायाः विचारणे प्रथमं दिव्यनारीणां पदमवलोकनीयम्। सरस्वती, दुर्गा, उषाः, लक्ष्मीश्च नारीसम्मानस्य मूलप्रतिष्ठापिका विभाविताः। अपरं च प्रातःस्मरणीयानां नारीणां समाहारस्तत्र वर्तते यासां यशोगाथा अधुनापि न केवलं नारीभ्यः, अपितु पुरुषेभ्योऽपि प्रगतिप्रेरणाप्रदानाय वर्तते। तद्यथा—महमूदस्याक्रमणेभ्यो भारतं रक्षयितुमपेक्षितं धनं

---

१. यज्ञानां दक्षिणारूपेण बहवः कन्यका वैदिकयुगेऽपि प्रदत्ताः। महाभारतानुसारं युधिष्ठिरः लक्षकन्याः ब्राह्मणेभ्यो दत्तवान्। सभापर्वणि ३३.५२; वनपर्वणि ३१०.२; शान्तिपर्वणि २६.६५।

२. महाराजदशरथस्य प्रमुखराज्ञीः विहाय पंचाशदधिकत्रिशतं नार्यो बभूवुः। रामायणेऽयोध्याकाण्डे ३६.३७।

३. चुल्लकालिंगे जातके ३०१; शिशुपालवधे ५.१७।

संग्राहयितुं भारतीया महिला: स्वशरीरेभ्योऽलङ्कारानपनीय प्रददुः— इत्यैतिह्यम्[१]।

नारीणां व्यक्तित्वस्य विकासाय समीचीना योजना वैदिकबौद्धजैनादिषु संस्कृतिषु प्रस्तुता:। तासां कृते ब्रह्मचर्यवानप्रस्थप्रव्रज्यादीनां व्यवस्थासीत्। संकटकालेऽपि नारीणां माहात्म्यं निदर्शितं महाभारते—

वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः॥ वनपर्वणि ७४.२५

नारीणां सम्मानार्हत्वं कथासरित्सागरे प्रमाणितम्। तद्यथा—

तास्तु काश्चन सद्वंशजाता मुक्ता इवाङ्गनाः।
याः सुवृत्ताच्छहृदया यान्ति भूषणतां भुवि॥ ४.१.६८

भारतीयसंस्कृतेरुपर्युक्तवैशिष्ट्येन वैदेशिका अपि प्रभाविताः। तद्यथा विल्सनमहोदयोऽलिखत्—And it may be confidently asserted that in no nation of antiquity were women held in so much esteem as amongst the Hindus.[२]

साधारणमते स्त्रीणां विषये मध्यमा प्रतिपत्प्रतिपादनीया। तद्यथा—

योषितो नावमन्येत न चासां विश्वसेद् बुधः।
न चैवेर्ष्या भवेत्तासु न धिक्कुर्यात् कदाचन॥
विष्णुपुराणे ३.१२.३०

## सतीप्रथा

वैदिकयुगे स्त्रीणां जीवनकाले यदि पत्युर्मरणमभवत्तर्हि तासां स्वेच्छया पुनर्विवाहः सम्बभूव। ईदृशो विवाहः प्रायशः देवा सहायोजितः। निःसन्दिग्धमेव सर्वेषु युगेषु कतिपयस्त्रियः पत्युर्वियोगमसहमानाः प्राणान् त्यजन्ति स्म, किन्तु नासीत् किमपि बलान्नियोजनं स्त्रीभ्यः पत्युश्चितायां

१. Majumdar: Ancient India P. 326
२. Mill's History of India Vol II P. 51.

मरणाय । महाभारतयुगे स्त्रीणां पतिभिः सह मरणेन परलोकेऽपि सहगमनस्य स्पष्टं विवरणं दृश्यते । तद्यथा—

याऽपि चैवंविधा नारी भर्तारमनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥

शान्तिपर्वणि १४६.१५

अनेनोद्धरणेनापि स्त्रीणां सहमरणं वैकल्पिकमेव प्रतिभाति । दशरथस्य स्त्रीणां सहमरणस्य समस्या नैव दृश्यते ।

परवर्तियुगे शनैः शनैः सहमरणस्य विधानं प्राचलत् । समृद्धिशालिवर्गेषु उच्चतमपरलोकगतिपरायणेषु समाजेषु च सतीप्रथाया विशेषप्रचारोऽभवत् । सतीप्रथया नारीणामुच्चादर्शस्य प्रतिष्ठाऽभूत्, किन्तु निःसंशयमेवास्याः प्रथाया निर्मूलनमभिनन्दनीयः प्रयासोऽभवत् ।

---

# उपभोग्यानि

विश्वस्याधिकाधिकवस्तूनि स्वोपभोगाय कर्तुं मानवस्य सततप्रयत्न आसृष्टेः प्रवर्तते। सामान्यतः उपभोग्यानि जीवनधारणाय भोजनपान-वस्त्रादीनि, अलङ्करणाय स्नानप्रसाधनादीनि, विश्रामाय गृहवास्तुशयना-दीनि, यात्राकरणाय यानसरकादीनि च भवन्ति। उपभोग्यवस्तूनां संख्यां संवर्धयितुं नित्यमेव तेषामधिकतमोपभोगक्षमं स्वरूपमाधातुं च मानवस्यायं प्रयत्नो दृश्यते।

## भोजनम्

भोज्यपदार्थास्तु प्रायेण त्रिविधाः—

(१) वनस्पतिभ्यः प्राप्तव्याः—अन्नफलमूलफुल्लनालशाकतैलगुड-शर्करादयः।

(२) प्राणिभ्यः प्राप्तव्याः—मांसदुग्धदधिघृतवसामध्वण्डकादयः।

(३) भूगर्भेभ्यः प्राप्तव्याः—लवणादयः।

एषु भोजनपदार्थेषु मांसवसाण्डकानि सामिषाणि शेषास्तु निरामिषाः।

**मांसत्यागः**

मांसभोजनं सुदूरप्राचीनकालतः प्रायशः सर्वेषु देशेषु कालेषु च लोकप्रियमभूत्। आयुर्वेदानुसारं 'मांसभोजनं स्वास्थ्यकरं स्वादिष्ठं च भवति। ततः प्रशंसनीयमेव'।[१] वैदिकयज्ञेषु देवेभ्यो मांसभोजनसमर्पणस्य रीतिरासीत्। पश्चात्तदेव भोजनं खादितव्यमभवत्।[२] किन्तु वैदिकयुगेऽपि

---

१. चरके सूत्रस्थाने २७. ३०७—३१०

२. ऋग्वेदे १.१६२; ८.४३.११; १०.२७.२; १०.८६; १०.६१ अथर्ववेदे १२.४; ५.१८; ३.२१.६। शतपथब्राह्मणे ३.१.२.२१ ऐतरेयब्राह्मणे ६.८।

मांसे दोषो दृष्ट एव येनास्य भोजनं नियमितम्। तद्यथा—यज्ञकर्मणो दीक्षिता मांसं न खादन्तु। तपस्विभिर्मांसं न खादितव्यम्।[१] यज्ञायज्ञीय-सामसूक्तवेत्तारो यावज्जीवनं मांसभोजनं न कुर्वन्तु।[२] मांसशब्दस्य व्युत्पत्तिरपि मांसत्यागाय निरूपिता।[३] आचार्याः 'उपाकर्मणा आरभ्यो-त्सर्जनपर्यन्तं मांसं न खादन्तु' इति विधानमक्रियत।[४]

एभिरुल्लेखैः स्पष्टं प्रतिभाति यद्वैदिकयुगेऽपि कश्चित् प्रतिष्ठितः ऋषिवर्गस्तत्रासीद्येन मांसभोजनमाध्यात्मिकाभ्युदयपथे प्रतिकूलमपावनं च मतम्।

उपनिषद्युगे तपसा तत्त्वज्ञानेन च मुक्तिः सुलभा मता। तदा यज्ञस्य महिमा हीनोऽभवत्। तपोमार्गे जीवनविशुद्धिः प्रतिष्ठिता। अस्मात्का-रणादपि मांसभोजनस्य तपस्विवर्गाय नेष्टत्वं प्रतिपादितम्। अयमेव मांस-भोजनपरित्यागादर्शो मुनिवर्गतः सकलसमाजेन गृहीतः। पुरा शाश्वत-परिपाटी बभूव यत् मुनीनां जीवनविधिर्गृहस्थैरपि यथाशक्यं ग्राह्यः।

बौद्धजैनसंस्कृतिषु हिंसायाः विरोधो विशेषरूपेण कृतः। मांसं तु हिंसया विना न लभ्यम्। शनैः शनैरनुयायिनस्तु द्वयोः संस्कृत्योर्मांस-विरताः सामान्यतो बभूवुः। तेषां संख्या पुराऽत्यधिकासीत्। तेषामादर्शेन समाजः प्रभावितः। जैनसंस्कृतौ मांसपरित्यागाय विशिष्टं साहित्यं रचितं दृश्यते, यस्यानुसारं यस्य पशोर्मांसं खाद्यते स्म स पूर्वजन्मनि खादितुर्माता,

---

१. शतपथे १४.१.१,२६

२. छान्दोग्योपनिषदि २.१६.२

३. शतपथे १२.६.१.१। स यद्ध वा अस्मिन् लोके पुरुषोऽन्नमत्ति तदेनम-मुष्मिन् लोके प्रत्यत्ति।
मांसभक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः॥ मनुस्मृतौ ५.५५

४. आपस्तम्बधर्मसूत्रे २.२.५.१५

पिता, भ्राता, भगिनी, स्त्री वाऽऽसीत् ।[१] महाराजाशोकः स्वकीयपाकशालायै पशुवधं निषेधितवान् लेखितवांश्च—प्राणिनामहिंसा साधुपथः ।[२]

महाभारते यद्यपि स्वास्थ्यास्वाददृष्ट्या मांसभोजनस्य सर्वोत्कृष्टत्वं प्रतिपादितम्, तथापि सात्त्विकतासंवर्धनदृष्ट्या मांसभक्षणाद्विरतिः शिक्षिता। अहिंसकस्तु सर्वेषां प्राणिनां माता च पिता चेत्युपदेशः ।[३] भागवतेऽपि प्रोक्तम्—

मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः ।
आत्मनः पुत्रवत्पश्येत् तैरेषामन्तरं कियत् ॥ ७.१४.६

वैदिकी हिंसा हिंसा न भवतीति सिद्धान्तेन भारते यज्ञकर्मणि श्राद्ध-कर्मणि च मांसं प्रोक्षितं भक्षितं च ।[४] यज्ञेभ्योऽन्यत्र मनुर्मांसभोजनं निनिन्द ।[५]

भागवते समांसयज्ञानां घोरविरोधोऽक्रियत । पुराणेऽस्मिन् यज्ञार्थं मुनिजनोचितमन्नं श्रेष्ठं मतम् ।[६] स्कन्दपुराणे आयुर्वेदप्रसिद्धानां मांसभोजन-गुणानां निराकरणं बलपूर्वकं कृतम् ।[७]

महाकविबाणेन मांसविरतिप्रसङ्गे प्रोक्तम्—आहारः साधुजननिन्दितो मधुमांसादिः ।[८] तथापि रसास्वादान्वेषिणो नागरिका मांसतेमनरसाद्विरताः कदापि न भूताः ।

---

१. जसहरचरिउ द्रष्टव्यः ।

२. तृतीयशिलालेखे ।

३. अनुशासनपर्वणि ११४,११५,११६ अध्यायतः

४. मनुस्मृतौ ५.२७,४२,५२, महाभारते वनपर्वणि २०७.५—१५

५. मनुस्मृतौ ५.४८—५१

६. भागवते ७.१५.७—११; ११.५.११

७. नागरखण्डे २६.२२५—२३७

८ कादम्बर्यां ३२ पृष्ठे ।

## भोज्यानि

सिन्धुसभ्यताया युगे यवगोधूमशालितिलादीन्यन्नान्युत्पादितानि। तत्रत्यनिवासिनां भोज्यानि तैरन्नैः निर्मितानि। सिन्धुप्रदेशे तदा दुग्धदायिनां पशूनां संख्याऽत्यधिकासीत्। तेषां भोज्येषु दुग्धनिर्मितखाद्यानि बभूवुः।

वैदिकयुगे भोज्यान्नस्य विशिष्टगुणा विभाविताः। तथा हि—'यस्मिन् विश्वानि पौंस्या' आदिवाक्यैः भोज्यविषयकं तेषां ज्ञानमुत्कृष्टमेव प्रतिभाति।[1] ओदनो वैदिकानां स्वादिष्ठतमं भोजनं प्रतिभाति। विविधप्रकारैः ओदनः पाच्यते स्म। तद्यथा नामभिरेव परिचीयते—क्षीरपाकौदनः, दध्योदनः, मुद्गौदनः, तिलौदनः, मांसौदनः, घृतौदनश्च। सर्वश्रेष्ठ आसीत् पंचौदनः। स तु पंचानां स्वादिष्ठद्रव्याणां समाहारैः सङ्कलितः।[2] दुग्धैर्निर्मितानि भोज्यानि नवनीतमस्त्वामिक्षादीनि बभूवुः।[3] आर्याणां पक्वान्नानि पक्तिकरम्भापूपपुरोडाशधानादीनि बभूवुः।[4]। सक्तुभोजनं वैदिकालतः प्रायः सदैव लोकप्रियमभूत्।[5] कृसरः तण्डुलतिलाभ्यामपच्यत।[6] तण्डुलं भृष्ट्वा परिवाप इति ख्यातं खाद्यान्नं कृतम्।[7] वाजिनस्तूष्णदुग्ध-दधिसम्मिश्रणेनाक्रियत।[8] पयस्या वाजिनवदभूत्।[9]

---

१. ऋग्वेदे १.५.६;१.४३. ७; १.४६.६

२. वैदिकइण्डेक्सग्रन्थे तथा बृहदारण्यके ६.४

३. शतपथे १.८ १.७; ३.१.३.७

४. ऋग्वेदे ३.५२.१—८; ४. २४.५–७; वाजसनेयिसंहितायां १६.२२
अथर्ववेदे ४.७.३; तैत्तिरीयब्राह्मणे ३.७.५

५. शतपथे १२.६.१.५. पंचतंत्रे स्वभावकृपणकथायाम्; नैषधीयचरिते २.८५

६. षड्विंशब्राह्मणे ५.२।

७. तैत्तिरीयसंहितायां ३.१.१०.१

८. तत्रैव १.६.३.१०; शतपथे २.४.४.२१

९. तैत्तिरीयसंहितायां २.३.१३.२

विविधपशूनां मांसानि पाचितानि। मांसस्य यूषः कृतः।[१] भोजनेन सह दुग्धम्, दधि, मधु, घृतं च प्रदत्तानि।[२] लवणस्य मिश्रणेन धनिकानां भोजनं स्वादिष्टं कृतम्।[३]

भोज्यपदार्थानां वैविध्यं वैदिककाले सुपरिचितमेव। तद्यथा—शतपथब्राह्मणे सप्तदशविधानां भोज्यानामेकवारमेवोपभोगः सूचितः।[४] दुग्धेनैव दशविधानि भोज्यानि कृतानि।[५]

फलमूलशाकानां भोजनं वैदिककाले नातिलोकप्रियं प्रतिभाति। कमलमूलं शालूकमुदुम्बरफलं शफकमाण्डिकं चेदृशानि भोज्यानि प्रतिभान्ति।[६]

जातकेषु यवागोर्भक्तस्य च साधारणं निरामिषं भोजनं दृश्यते। तस्मिन्युगे मांसभोजनमतिशयलोकप्रियमभूत्। गोधामांसं घृतदधिव्यंजनैः सह पाचितम्। भोज्यस्यास्वादवर्धनाय तस्मिन् तैललवणपिप्पलीनां मिश्रणमक्रियत।[७] शालिभक्तं मांसं च श्रेष्ठभोज्यमेवागण्येताम्। मत्स्यस्य मांसेन हंसमयूरक्रौञ्चादीनां पक्षिणां मांसेन च सुरुचिपूर्णभोज्यमभूत्।[८] राज्ञां भोज्यानि सप्तविधानि बभूवुः।[९]

---

१. ऋग्वेदे १.१६२. १३ तै० सं० ६.३.११.१

२. अथर्ववेदे ६.६.३६—४४

३. तत्रैव ७.७६.१; छान्दोग्ये ४.१७.७

४. शतपथे ५.२.२.३; ८.४.४.७

५. शतपथे ३.३.३.२

६. अथर्ववेदे ४.३.४.५; ४.३४. ५; ५.१७.१६ ऐतरेयब्राह्मणे ७.१५; पंचविंशब्राह्मणे १६ ६.४.

७. गोधजातके ३२५

८. केसवजातके ३४६; मच्छजातके; पुण्णनदीजातके २१४

९. दूतजातके २६०

बौद्धसाहित्ये क्षीरौदनः प्रशंसितो वर्तते । अनेनायुर्वर्धते, सौन्दर्यं प्रस्फुरति, बुद्धिवैशद्यं जायते च ।[१] अस्मिन्युगे निरामिषं भोज्यं तिलमुद्गतण्डुलानां चाभवत् ।[२] भोज्ये घृतमधुनोः प्राचुर्यमासीत् ।[३]

महाभारते निरामिषभोज्येषु विविधानां शाकानामपूपस्य च मिष्टान्नेषु खाण्डवस्य रसयोगस्य च गणना दृश्यते । भोज्यस्योपकरणानि मूलं, फलं, शूकरहरिणयोर्मांसं घृतपक्वं मधुमिश्रितं च क्षीरौदनं, कृसरो जीवन्तीशाकश्चाभवन् । भक्ष्यं हविष्यं चोष्यं खाद्यं पेयं वा भोज्यमासीत् ।[४]

यज्ञावसरे सार्वजनिकभोजोऽभवत् । अस्मै प्रयोजनाय खाद्यान्नानां पर्वताः पेयानां नदाश्च क्रियन्ते स्म । भोज्यसामग्रीषु मोदकपूरिकापूपशष्कुलीकरम्भमृद्वीकारागखाण्डवघृतमधुदधिरसफलमूलादीनि बभूवुः । [५]

रामायणेऽपि भोज्यानां स्वरूपं प्रायशः पूर्ववत् वर्तते । भोज्यसामग्रीणां वर्णगन्धयोः मनोहारित्वं प्रशंसितमासीत् ।[६] रामायणयुगे आर्येतरा जातयो मधुमांसादीनि वन्यानि च खादन्ति स्म ।[७]

अर्थशास्त्रे भोज्यसामग्रीणां विशदविवेचनं दृश्यते । तथा हि स्नेहकोटौ घृततैलवसामज्जाः, क्षारकोटौ फाणितगुडमत्स्यण्डिकाखण्डशर्कराः, लवणकोटौ सैन्धवसौवर्चलयवक्षाराः, मधुकोटौ च क्षौद्रद्राक्षारसाः समन्विताः । विविधफलमूलैः रसैश्च क्वाथाः क्रियन्ते स्म । शुष्कमत्स्यमांसकन्दमूलफलैश्च कटुलेह्यानि क्रियन्ते स्म । अन्नस्य खाद्यरूपे परिणमनाय बहवः प्रक्रियाः प्रचलिता बभूवुः ।[८]

---

१. महावग्गे ६.२४
२. ससजातके ३१६
३. मातंगजातके ४९१
४. सभापर्वणि ४.२–३
५. द्रोणपर्वणि ६४.७—६
६. अयोध्याकाण्डे ६१.६७—७३
७. अयोध्याकाण्डे ८४ सर्गतः
८. अर्थशास्त्रे कोष्ठागाराध्यक्षप्रकरणे

आयुर्वेदग्रन्थेषु भोज्यविन्यासेन शतवार्षिकजीवनस्य सम्भावना प्रतिष्ठिता।[१] आयुर्वेदानुसारं खाद्यान्नानामसंख्या भेदाः पाचनविधीनां भोज्य-सामग्रीणां चासंख्यत्वात् सम्भवन्ति;[२] प्रत्येकविधस्य भोज्यस्य गुणदोष-विवेचनं वर्तते च तेषु ग्रन्थेषु। 'किंप्रकृतिकः पुरुषः कीदृशं भोजनं कस्मिन्नृतौ कस्यां वेलायां च करोतु' इति विषयाणां सम्यग्विवेचनं तत्र दृश्यते। भोजनविज्ञानानुसारमाहारस्य वर्णगन्धरसस्पर्शानां दृष्ट्या लाभालाभौ श्रेयस्करत्वं च निर्धारितानि।[३]

भोज्यानां पाचनविधिः शनैः शनैः सुसंस्कृतो दृश्यते। तथाहि—एकाकी तण्डुलो धावित्वाऽधावित्वा वा पाचितोऽथवा मांसशाकवसातैलघृतमज्ज-फलादिभिः सह पच्यते स्म। तिलदुग्धमुद्गादीनां मिश्रणमपि तण्डुलेन सह परिचितमासीत्। विविधानि धान्यचूर्णानि प्रथममुत्क्वाथ्य रोटिका कृता। बहुविधानां वस्तूनां यूषसूपादिकरणायाष्टादशगुण चतुर्दशगुणं वा जलं मिश्र-यित्वा क्वाथः कृतः। शष्कुली वर्त्तमानयुगस्य 'कचौरी' इवासीत्। मधुक्रोडा मधुरवस्तूनि पूरयित्वा पिण्डाकृतौ परिणता। तण्डुलपिष्टेन पूपा पूपलिका च कृते। मांसस्य क्वथनं कृत्वा शिलायां पिष्ट्वा च पिप्पलीशर्करा-गुडघृतादीनां तस्मिन् मिश्रणं कृत्वा वेशवार इति ख्यातं मिष्टान्नं कृतम्। फलमांसवसाशाकपललमधुमिश्रितं भोज्यं स्वास्थ्यप्रदं बलकारकं च मतम्।[४]

रोटिकापाचनाय कुकूलखर्परभ्राष्ट्रकन्दुदग्धकाष्ठानां तापः प्रयुक्तः। घृतमिश्रितं गोधूमपिष्टं घृते पाचितम्। बहुविधानां धान्यानां मिश्रणं कृत्वा

---

१. चरकसूत्रस्थाने २७.३४३

२. चरकसूत्रस्थाने २५.३५ अपरिसंख्येयविकल्पः द्रव्यसंयोगकरणबाहुल्यात्।

३. चरकसूत्रस्थाने २७.२। कणादसूत्रेऽपि 'यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितं च तच्छुचि' ६.२.५। तदेव महाभारते सभापर्वणि ३३.३२।

४. चरकसूत्रस्थाने २७.२५२-२६४

पाचयित्वा च विमर्दकं कृतम्। रागषाडवो हरिताम्रफलं भर्जयित्वा शर्करा-तैलशुण्ठीयोगेन कृतः। आम्रफलस्यामलकस्य वा बहुविधानि लेह्यानि विविधद्रव्याणां मिश्रणेन कृतानि। व्यंजनानां प्रयोगो भोज्यस्यास्वादवर्धनाय सर्वत्र कृतः।[१] पाकशालायाः शुद्धिः समीचीना मता। तथा हि—महानसं च सुगुप्तं स्याद्दर्शनीयं च।[२]

सर्वेषां खाद्यान्नानां मांसानां फलानां शाकानां जलानां च स्वास्थ्य-संवर्धनदृष्ट्या पर्यालोचनमायुर्वेदग्रन्थेषु कृतम्[३]। सामान्यतः प्रतिदिनं त्रिः भोजनं कृतम्—दिनस्य प्रथमभागे प्रातराशो लघुभोजनमासीत्, मध्याह्ने रात्रौ प्रथमप्रहरे च पूर्णभोजनं बभूव। जैनसंस्कृतौ रात्रिभोजनस्य परित्यागो विहितः।

समृद्धिशालिनामुच्चवर्गीयाणां नागरिकाणां भोजनसौष्ठवं सदैव सविलासमभूत्। अस्मिन् प्रसङ्गे महार्घाणि भोजनपात्राणि, रत्न-मण्डितभोजनमण्डपानि मनोरंजनाय समाहारीभूतानि कन्यारत्नानि चोल्लेखनीयानि।[४] राजकीयभोजनविधेः रसिकत्वं श्रीहर्षस्यानेन श्लोकेन निदर्शितम्—

न षड्विधः षिङ्गजनस्य भोजने तथा यथा यौवतविभ्रमोद्भवः।
अपारशृङ्गारमयः समुन्मिषन् भृशं रसस्तोषमधत्त सप्तमः॥

## धूम्रपानं ताम्बूलं च

भोजनानन्तरं धूम्रपानस्य प्रचलनमासीत्। अस्मै प्रयोजनाय धूम्र-वर्तिका निर्मिता। प्रायोगिकवर्तिकायां पंचत्रिंशद्द्रव्याणां मिश्रणमभवत्।

---

१. चरकसूत्रस्थाने २७.२६५-२८०, २६५-३०२

२. कामसूत्रे

३. सुश्रुतसंहितायां शाकफलादिवर्गेषु।

४. भोजाजानीयजातके दूतजातके च।

स्नैहिकवर्तिकायां वसाघृतजीवकादीनां मिश्रणं कृतम्। शिरोविरेचनवर्तिका ज्योतिष्मतीहरितालमनःशिलागुरुणां योगेन रचिता। धूम्रपानाय वर्तिका हस्तद्वयपर्यन्तायां नालिकायां संयोजिता। धूम्रपानस्यातिमात्रा वर्जिताऽऽसीत्।[१]

धूम्रपानानन्तरं ताम्बूलग्रहणमक्रियत। ताम्बूलपत्रे बहुविधानां मुखशोधकानां पाचनशक्तिसंवर्धकानां स्वास्थ्यविधायकानां च द्रव्याणां निधानं कृतम्।[२] ताम्बूलस्य सर्वाधिकप्रतिष्ठा राजसभासु बभूव। राजकुमारीभ्यः ताम्बूलार्पणाय ताम्बूलकरङ्कवाहिन्यो नियुक्ताः। ताम्बूलकोषः करङ्क इति ख्यातः स्वर्णरजताभ्यां निर्मितो मणिजटितोऽभवत्। पतद्ग्रहोऽपि मणिजटितोऽभवत्। ताम्बूले भयोत्पादकानि वृश्चिकादीनां रूपाणि निधाय भोगिनां विस्मयाधानेन परिहासः कारितः।[३] कामभावस्योद्दीपकत्वात् ताम्बूलभोगस्य निषेधोऽपि समर्थितः क्वापि।[४]

## पेयम्

पेयेषु प्रथमं स्थानं जलस्य विद्यते, पश्चात् दुग्धमधुनोः, फलपुष्पकाण्डमूलादीनां रसाः सर्वसुलभा एव दृश्यन्ते। सोमो मद्यं चासाधारणे पेये बभूवतुः। नागरिकेभ्यः स्वास्थ्यप्रदं शुद्धं च कूपजलं प्रदातुमेव सिन्धुसभ्यतायाः सुव्यवस्था प्रतीयते।[५]

वैदिकसंस्कृतौ जलस्य दिव्यत्वं प्रतिष्ठितम्। जलं शुचितायाः प्रतीकं मतम्। तस्मात् देवा अपि शक्तिसंचयं कुर्वन्तीति वैदिकधारणा।[६]

---

१. विशेषविवरणपरिचयाय चरकसंहिता ५.१७.५२ द्रष्टव्या।

२. चरकसूत्रस्थाने ५,७३—७४

३. नैषधीयचरिते १६.२७,१०६

४. स्कन्दपुराणे नागरखण्डे। ताम्बूलमुपभुज्य जनाः कामासक्ताः भवन्ति॥

५. Piggott: Prehistoric India p.171

६. ऋग्वेदे ७.४६

परवर्तियुगे विविधप्रकाराणां जलानां स्वास्थ्यदृष्ट्या पर्यालोचनमायुर्वेद-ग्रन्थेषु कृतम्। अशुद्धजलस्य परिशोधनायानुसन्धानानि प्रस्तुतानि। क्वाथीकरणेन, रवितापेन, कतकबिसग्रन्थिमुक्तादीनां परिस्पर्शनेन वस्त्रच्छरणेन जलस्य शोधनं विहितम्। जलस्य सुगन्धीकरणं शीतलीकरणं च प्रचलितमासीत्।

भारते सदैव दुग्धस्य लोकप्रियताऽभूत्। सिन्धुसभ्यतायुगे दुग्धदायिनां पशूनामाधिक्यमभवत्। वैदिकसाहित्यानुसारं स्पष्टं प्रतिभाति यत् धनिका निर्धनाः प्रायः सर्वेऽपि वर्णाश्रमिणोऽधिकाधिकसंख्यकाः गाः परिपालयन्ति स्म। राज्ञां गवां संख्या लक्षपर्यन्ताऽपि बभूव। दुग्धस्य प्रचुरप्रशंसा विद्यते साहित्यग्रन्थेषु। तद्यथा—प्रियं दुग्धं न काम्यम्। दुग्धं वै जीवनं प्राणाः वा।[१] धारोष्णं दुग्धं पीतमीषदुष्णं वा मधुशर्करामिश्रितमास्वादितम्। घृतमिश्रितं दुग्धं पोषणकामायासीत्।[२] विविधपशूनां दुग्धानां स्वास्थ्यदृष्ट्या पर्यालोचनं कृतम्।[३]

**सोमरसः**

सोमस्तु प्राचीनतमः पेयः आर्याणाम्। सोमयज्ञे देवेभ्यः सोमस्य समर्पणं क्रियते स्म। सोमाय सोमवल्ली प्रथममुपयुक्ताऽभूत्। सोमवल्ली मुञ्जवत्पर्वते संवर्धिता। तस्मात्प्रदेशाद्विक्रयार्थं वल्लीयं भारते आनीता।

सोमवल्ली उलूखले मुसलेन कुट्टिता शिलापट्टके वा ग्राव्णा पिष्टासीत्। पश्चादूर्णस्य पवित्रेण शोधिता। तस्मिन् रसे दुग्धं दधि घृतं यवश्च मिश्रितानि। सोमस्य गन्धो रमणीयः आसीत्। वैदिकैः कविभिरस्य श्रीः रसः, प्रयो नभश्च प्रशंसितानि। स्वादः सोमस्य मधुरः आसीत्।

---

१. शतपथे २.५.१.१५;६.२.३,३१
२. अथर्ववेदे ७.७३.१; तित्यजातके
३. चरकसूत्रस्थाने २७.२१४—२२१; सुश्रुतसंहितायां दुग्धवर्गे ४५.१–५

सोमपानेन बह्वो लाभा आसन्। तथा हि वक्तृताशक्तिसंवर्धनं दीर्घजीवनं प्रतिभाविकसनमाध्यात्मिकं सौष्ठवं च सोमपानेन प्रसिद्धानि। सोमपायी यशस्वी भवति। सोमस्तु मानवतायाः कल्याणम्। सोमेन धर्मप्रवृत्तिः वर्धतेऽभिनवचेतनायाः स्फुरणं भवतीति वैदिकधारणा दृश्यते।[१] सोमो मनसः पापानि दूरं कृत्वा सत्यं संवर्धयति नाशयति चासत्यम्।[२]

सोम ईषन्मादक आसीदिति सत्यम्। किन्तु सोमो नासीत् सुरेति स्पष्टमेव। शतपथानुसारं सोमः सत्यस्याभ्युदयस्य प्रकाशस्य च कर्ता भवति, सुरा चासत्यं पतनमन्धकारमेव।[३] अपरं च

सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते।
तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत्॥

ऋग्वेदे ७.१०४.१२

आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः।
शं ते सन्तु प्रचेतसे॥ ऋग्वेदे १-५.७

परवर्तियुगे भारते सोमो दुर्लभप्रायोऽभवत्। तदा सोमपर्यायाः चतुर्विंशतिलता गृहीताः।[४]

## सुरा

वैदिकयुगे सुरायाः गुणाः अवगुणाश्च सुपरिचिता आसन्। वैदिकसाहित्ये क्वचिदस्याः प्रशंसा विद्यतेऽन्यत्र भूरि निन्दा चास्ति।[५] यज्ञे-

---

१. ऋग्वेदे ८.४८

२. Macdonell: Vedic Mythology p. 109

३. शतपथे ५.१.५.२८

४. सुश्रुतसंहितायां चिकित्सितस्थाने सोमप्रकरणे विशेषविवरणं द्रष्टव्यम्।

५. प्रशंसात्मकं निदर्शनं ऋग्वेदे १.११६.७., १०.१३१.४-५ अथर्ववेदे ४.३४.६ निन्दात्मकं निदर्शनं ऋग्वेदे ७.८६.६; ८.२.१२ मैत्रायिणीसं० २.११.६

ष्वपि सुरासमर्पणमक्रियत। मनोरंजनसभासु सुरापानान्वितानां कलहानां प्राचुर्यमासीत्।[१] सुरापानं तु पापप्रवृत्तीनां प्रवर्धनायेति प्रायः समर्थितम्।[२]

अर्थशास्त्रे चरकसुश्रुतयोः संहितयोश्च बहुविधानां सुराणामुपकल्पनविधयः वर्णिता वर्तन्ते। असंख्यकानि तत्रोपकरणानि विद्यन्ते येषां योगेन सुरा कृता। तद्यथा मूलफलपुष्पधान्यव्यंजनपत्रबीजगुडशर्करावल्कलगन्धादीनां सुराः परिद्रष्टव्याः। चरकसंहितायां चतुरशीतिविधीनां सुराणामुल्लेखः वर्तते। तदनुसारं सुरासवेन मनसः शरीरस्य च बलं वर्धते, निद्रा नश्यते, शोकारुच्योः विनाशो जायते, मनश्च प्रसन्नं भवति।[३] सुरापाने संयमः समीचीनः, अन्यथाधिकपानेन बुद्धिः धैर्यं स्मरणशक्तिश्च विनष्टानि भवन्त्येव।[३]

रामायणानुसारं पानभूमिरापानकं वा सुरापायिनां मनोरंजनार्थमभवत्। पानभूमौ स्वर्णमयान्यासनानि, पानाय स्फटिकरचितानि महार्घपात्राणि स्वर्णघटाश्चाभवन्। राजकीयपानभूमौ नृत्यसंगीतवाद्यादिभिर्मनोरञ्जनं विधातुं कन्यकाः नियुक्ताः। पानभूमौ धरातले पुष्पाणि विकीर्णानि।[४] अर्थशास्त्रानुसारं पानभूमेः सुप्रबन्धाय राजकीयनियन्त्रणमासीत्।[५]

सुरापानस्य निन्दा सर्वैर्मनीषिभिः कृता।[६] 'ब्राह्मणा ब्रह्मचारिणो वानप्रस्थाः संन्यासिनो वा न कदापि सुरास्पर्शमपि कुर्वन्तु' इति विधान-

१. ऋग्वेदे ७.२.१२ शतपथे १.६.३.४

२. ऋग्वेदे ७.८६.६

३. चरकसूत्रस्थाने २५.४६; २५.५१

४. रामायणे २.११४.१४; ६.१.२२-२४; ५.११.४-२८

५. सुराध्यक्षप्रकरणात्

६. ऋग्वेदे ७.८६.६; शतपथे ५.६.५.२८ काठकसंहितायां ११.१२; छान्दोग्ये ५.१.२८ आपस्तम्बधर्मसूत्रे १.७.२१.८ मनुस्मृतौ ११.६३, ६४; महाभारते आदिपर्वणि ७६.६७., अर्थशास्त्रे सुराध्यक्षप्रकरणे व्यसनाधिकरणे च।

मासीत्। बौद्धजैनसंस्कृत्योः सर्वत्र सुराया दोषा आकलिताः। परिणामतः सर्वेऽपि सद्वृत्तिपरायणा गृहस्थाः सुराया विरता बभूवुः। भारतीयकथा-साहित्ये सुरापानोद्भवानि पापानि निदर्शितानि।[१]

## अन्यपेयानि

वैदिककालतः कीलालं मादकं पेयमासीत्। मधु सर्वेषां सदैव प्रियं पेयमभवत्। मधुपर्कविधौ मधुनः प्रतिष्ठास्थानं सुविदितमेव। इक्षुरसो भारते सदैव लोकप्रियोऽभवत्। फलानां रसोपकल्पने आम्रजम्बुकदलीद्राक्षादीनामुपयोगोऽक्रियत।[२] एवंविधः रसः कतिपयवृक्षाणां पत्रपुष्पैश्चोपकल्पितः। नारिकेलजलं समुद्रतटवासिभ्यः प्रियमभूत्।

इर्त्सिङ्गमहोदयस्य लेखानुसारं ख्रीष्टस्य सप्तमे शतके भारते 'चाय' पानस्य प्रचलनमासीत्।[३]

भोजनस्य पानस्य च पश्चात् क्वचिद् घ्रेयद्रव्याणामुपयोगः कृतः।[४]

## स्वास्थ्यसाधनानि

प्रायो नागरिकाः प्रतिदिनं तावन्मात्रं श्रमं न कुर्वन्ति यावान् तेषां स्वास्थ्यसन्धारणायापेक्षितो भवति। ईदृशेभ्यो जनेभ्यो नित्यव्यायामस्यावश्यकता वर्तते। शरीरे आङ्गिकसौन्दर्यं कर्मण्यतां चाधातुमपि व्यायामः सोपयोगः। व्यायामोद्भवान्याङ्गिकसौष्ठवानि महाभारते वर्णितानि—

पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ।
ऊरू परिघसङ्काशौ संहतं चाप्युरो महत्।। आदिपर्वणि १५५.६

---

१. धम्मद्धजजातके २२०; भद्दघटजातके २९१; कुम्भजातके ५१२ महापुराणे ६.२८२

२. रामायणे २.६१.१५; महावग्गे ६.३५.६

३. तकाकुसुकृतानुवादे यात्रावर्णने पृ० ६०,१३५

४. महाभारते सभापर्वणि ५.६६

तस्मिन्युगे राजकुमाराः प्रतिदिनं व्यायामं कुर्वन्ति स्म।[१] वैज्ञानिकदृष्ट्याऽपि व्यायामेन शरीरस्य मांसं स्थिरं भवति, कुरूपस्य मानवस्यापि शरीरं सुदर्शनं जायते।[२] व्यायामस्य तदनुसारं परिभाषा वर्तते—शरीरस्य साऽभीष्टा चेष्टा व्यायामः या शरीरे दृढतां स्थिरतां बलं च संवर्धयति।[३]

व्यायामार्थं प्रातःकालः सर्वोत्तमो मतः। व्यायामे प्लवमुत्पतनं वल्गिमास्कन्दः मल्लयुद्धं दण्डयुद्धं मुष्टियुमायुधयुद्धं च समन्वितानि।[४]

समृद्धिशालिनां व्यायामार्थं विशेषस्थानानि निर्मितानि। तस्यां व्यायामभूमौ व्यायामोपयोगिनामुपकरणानां संग्रहोऽविद्यत। बहवः समवयस्काः सहैव व्यायामं कृतवन्तः। व्यायामकाले तेषां शरीरेषु स्वेदबिन्दवोऽशोभन्त।[५] व्यायामविधिः सम्यक्प्रकारेण वैज्ञानिकनियमानुकूलं विकसितः।[६]

## सौन्दर्यसाधनानि

भारतवासिनस्तु प्राचीनयुगे कदापि शरीरस्य प्रकृतिप्रदत्तसौन्दर्येण परितुष्टा न बभूवुः। नित्यमेव शरीरस्य सौन्दर्याभिवृद्धये नवतराणि उपादानानि उपकल्पितान्येव। अयोध्याविषये प्रवृत्तिरियं वाल्मीकिना प्रमाणिता—

नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान्।
नामृष्टो न लिप्ताङ्गो नासुगन्धश्च विद्यते॥ बाल० ५. १०, ११

---

१. सभापर्वणि ५६.३४
२. सुश्रुतसंहितायां चिकित्सितस्थाने २४ अध्यायतः
३. तत्रैव २४.३५ ४. कल्पसूत्रे १ महावीरचरिते
५. कादम्बर्यां १५ पृष्ठे।
६. सुश्रुतसंहितायां चिकित्सितस्थाने २४.३५—४२, ४५—४७
चरकसंहितायां सूत्रस्थाने ७. ३१, ३२

दन्तधावनम्—

प्रातरुत्थाय सर्वप्रथमं दन्तधावनं करणीयमिति नियम आसीत्। दन्तकाष्ठप्रयोगार्थं वृक्षाणां चयनमायुर्वेदानुसारं कृतम्। जना दन्तकाष्ठस्य शिरोभागं कूर्चीकृत्य तैलेन मधुना वाऽभिषिच्य सैन्धवत्रिफलातेजोवती-चूर्णैः दन्तेषु घर्षयन्ति स्म।[१] दन्तधावनस्य लाभा वैज्ञानिकदृष्ट्या पर्यालोचिताः। तथा हि—दन्तधावनेन नेत्रे स्वस्थे भवतः। मुखात् सुगन्धिर्निःसरति। भोजनस्योदरगमनमार्गः परिशुध्यति। भोजने पित्तकफादीनामशुद्धद्रव्याणां सम्मिश्रणं न भवति। भोज्यास्वादनशक्ति-रपि वर्धते।[२] विलासिनामुपयोगार्थं सप्ताहपर्यन्तं विविधव्यंजनेषु दन्तधावनं संस्कारितम्।

केशसंस्करणम्

दन्तधावनस्य पश्चात् स्नानविधेः प्रागेव केशसंस्करणमक्रियत। प्रतिचतुर्थदिनं श्मश्रुकर्तनं, प्रतिपंचमदिनं प्रतिदशमदिनं वा केशकर्तनं नागरिकैः कर्तव्यमिति वात्स्यायनः। स्त्रियोऽपि केशकर्तनमकारयन्। पुरुषा रुच्यनुसारं श्मश्रुकेशादीनां पूर्णवपनं कारितवन्तोऽथवा यथेच्छपरि-माणं संस्कारितवन्तः।

अङ्गमर्दनम्

व्यायामस्य पश्चादङ्गमर्दनं विधेयमासीत्। प्रथमं शिरसि तैलमिश्रण-मक्रियत। विविधेष्वङ्गेषु विभिन्नप्रकाराणां तैलानां मर्दनमभवत्। अङ्ग-मर्दनविद्याविशारदाः समृद्धिशालिभिरस्मै प्रयोजनाय नियुक्ताः।[३] अङ्गमर्द-नस्य पश्चादुद्वर्तनं कृतम्।[४]

---

१. सुश्रुतसंहितायां चिकित्सितस्थाने २४.५

२. चुल्लवग्गे ५. ३१. १। अपरंच—दन्तधावनेन शरीरं सुन्दरं भवति मुखकान्तिर्वर्धते वाणी मधुरा जायते च। बृहत्संहितायां ७७.३१-३४ अयमेव विषयो नारदपुराणे पूर्वभागे द्वितीयपादे ५० अध्याये समर्थितः।

३. चरकसंहितायां सूत्रस्थाने ५. ८५-८८; कल्पसूत्रे जिनचरिते.

४. सुश्रुतसंहितायां चिकित्सितस्थाने २४.४६

स्नानम्

स्नानं नित्यमेव कर्तव्यं द्विः त्रिः वाऽऽवश्यकतानुसारम्। सिन्धु-सभ्यतायुगे नागरिकाणां स्नानाय बहवो जलाशयाः कारिताः। साधारणतः ते स्वगृहकूपजलेन स्नानागारे स्नातवन्तः। शरीरं स्वच्छं विधातुं तदा बहुविधद्रव्याणामुपयोगः साहित्यग्रन्थेषु दृश्यते। प्राचीनभारते नगराणि प्रायो नदीतटेषु स्थितानि।

समृद्धिशालिनां स्नानविधिः महाभारतीयेनाधोलिखितवर्णनेन परिचीयते—

उत्थायावश्यककार्यार्थं ययौ स्नानगृहं नृपः॥
ततः शुक्लाम्बराः स्नातास्तरुणाः शतमष्ट च।
स्नापकाः काञ्चनैः कुम्भैः पूर्णैः समुपतस्थिरे॥
भद्रासने सूपविष्टः परिधायाम्बरं लघु।
सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः॥
उत्साहितः कषायेण बलवद्भिः सुशिक्षितैः।
आप्लुतः साधिवासेन जलेन स सुगन्धिना॥
राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम्।
जलक्षयनिमित्तं वै वेष्टयामास मूर्धनि॥
हरिणा चन्दनेनाङ्गमुपलिप्य महाभुजः।
स्रग्वी चाक्लिष्टवसनः प्राङ्मुखः प्राञ्जलिः स्थितः॥

द्रोणपर्वणि ८२.७–१३

स्नानकर्मणि शरीराङ्गेषु स्फूर्तिमाधातुं चर्मरोगांश्च नाशयितुमिष्टकया घर्षणं कृतम्।[१] स्नानागाराः परमरमणीया रत्नमणिमौक्तिकजटिताश्च बभूवुः। स्नानविधिः क्रीडामयोऽभवत्।[२] स्नानस्य प्रायः सर्वेऽपि गुणाः प्राचीनयुगेऽवधारिताः।[३]

१. सुश्रुतसंहितायां चिकित्सितस्थाने २४.५४
२. कल्पसूत्रे जिनचरिते
३. चरकसंहितायां सूत्रस्थाने ५.६१; सुश्रुते चिकित्सितस्थाने २४.५५–५६

स्नानप्रक्रियाणां वैज्ञानिकविधिभिः पर्यालोचनं कृतम्। तथा हि—उष्णजलेन शिरसः स्नानात् नेत्रदौर्बल्यं जायते। शिरसः स्नानं शीतलजलेन कर्तव्यम्। शीततौ वायुकफादीनां विकारोऽतिशीतलजलस्नानेन भवति। ग्रीष्मे पित्तरक्तादीनां विकार उष्णजलस्नानेन संभवति।

## आकल्पः प्रसाधनञ्च

स्नानस्य पश्चात् शरीरस्य प्रसाधनकर्मारभ्यते। तद् द्विविधम्। प्रथमं तावत्—अनुलेपनं, चित्रणं, वासयोगः, तिलकधारणं च। द्वितीयं तु शरीराङ्गेष्वाभरणधारणम्। प्रसाधनकर्म न केवलं विलासार्थमेव, अपि तु वैज्ञानिकदृष्ट्या चन्दनकेसरादीनां सुगन्धितद्रव्याणामनुलेपनेन पुष्पमालाधारणेन च वृषतासुगन्धिसौन्दर्यायुर्बलपुष्टीनां संवर्धनं भवति, मनः प्रसन्नं जायते, दारिद्र्यं दूरं याति च।[१]

सिन्धुसभ्यतायुगीनानि बहूनि प्रसाधनपात्राणि प्राप्यन्ते। कतिपयानि प्रसाधनद्रव्याण्यपि तेषु वर्तन्ते। तस्मिन् युगे नेत्रयोः प्रसाधनं शलाकयाऽञ्जनयोगेन कृतम्। शरीरस्य रंजनाय रक्तद्रव्यस्योपयोगः कृतः। शरीरस्य शुभ्रतां विधातुं कस्यचित् द्युतिमतो वस्तुनः प्रयोगोऽभवत्।

वैदिकयुगेऽपि हिरण्मयत्वमिन्द्रस्य केनचिदनुलेपनेन प्रसिद्धम्।[२] तदा यज्ञकर्मणि प्रयुक्तो यजमानो नवनीतेन शरीरस्यानुलेपनमकरोत्। चूर्णैः शरीरस्य सौन्दर्यं संवर्धितम्।[३] महाभारतयुगे राजगृहेषु प्रमदानां प्रसाधनाय सैरन्ध्रीणां नियुक्तिः कृता। राज्ञां प्रसाधनार्थं दास्यः शिल्पिनश्चापेक्षितवस्तूनामुपकल्पनं कुर्वन्ति स्म।[४] राज्ञां प्रसाधनविधिः कालिदासेन निदर्शितः—

---

१. चरके सूत्रस्थाने ५. ६३

२. ऋग्वेदे १. १३३. ८

३. कौषीतकिब्राह्मणोपनिषदि १. ४

४. वनपर्वणि ४६. ८; अर्थशास्त्रे 'आत्मरक्षाप्रकरणे'। नारीणां शरीरेषु तासामनुरागिणो जनाश्चित्रणं कुर्वन्ति स्म। बुद्धचरिते ४.३२

तं धूपाश्यानकेशान्तं तोयनिर्णिक्तपाणयः ।
आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधकाः ॥
तेऽस्य मुक्तागुणोन्नद्धं मौलिमन्तर्गतस्रजम् ।
प्रत्यूपुः पद्मरागेण प्रभामण्डलशोभिना ॥
चन्दनेनाङ्गरागं च मृगनाभिसुगन्धिना ।
समापय्य ततश्चक्रुः पत्रं विन्यस्तरोचनम् ॥ रघुवंशे १७.२२-२४

विभिन्नर्तुषु प्रसाधनानां वैचित्र्यस्य कल्पना गुप्तयुगे सविशेषं दृश्यते। तथा हि शिशिरं विहाय सदैव चन्दनानुलेपनं नित्यं क्रियते स्म। हेमन्ते रमण्यः कपोलप्रदेशेषु पत्रलेखां चित्रयन्ति स्म। वसन्ते सित-चन्दनस्य लेपः प्रियोऽभूत्। वक्षःप्रदेशे प्रियङ्गुकालीयककुंकुमकस्तूरिकाणां चन्दनेन मिश्रणं कृत्वा लेपः कृतः। अस्मै प्रयोजनाय रक्तचन्दनमपि प्रयुक्तमभवत्। हरिचन्दनस्यानुरागोऽतिशयो बभूव। शरीरे सर्वत्रास्य लेपः कृतः।[१]

शरीरस्य विभिन्नाङ्गानां प्रसाधनकर्मणो विविधाः रचनाः द्रव्याणि चोपयोजितानि। एषु ताम्बूलसेवनेन सामान्यतोऽधररागः समजनि। अधरस्य विशेषरागः यावकेन कृतः।[२] रञ्जितोऽधरः पल्लववद्दृश्यत।[३] कपोले पत्रलेखा तिलकश्च कृतौ। मुखे पाण्डुतां विधातुं लोध्रपरागो विकीर्णः। मुखवासेन श्वासोऽपि सुगन्धितः कृतः।[४] नखरञ्जनमक्रियत। बाहुः चन्दनागुरुलेपैरुषितः।[५] पादौ लाक्षारसेन रंजितौ। तयोः शोभा पल्लवाकृतिभिः संवर्धिता। अंगुष्ठे तिलको रचितः। अलक्तकरागेण बहुविधानि चित्राणि तत्र कृतानि।[६] वक्षःस्थले चन्दनलेपं कृत्वा तत्र केसरो विकीर्णः। ललाटे भ्रुवोरुपरि पुष्पगुच्छाकृतिः रचिता।[७] दन्तानां बहवो रागाः कृताः। तद्यथा नाट्यशास्त्रे—

१. ऋतुसंहारे २.२२.४५;६ ७,१४ कादम्बर्यां पृ० २०६ शिशुपालवधे ८.५७; रघुवंशे १६,३७;६ ६०,७२
२ शिशुपालवधे ८ ५५;६.४६
३. नाट्यशास्त्रे २१.२६
४. शिशुपालवधे ६.५२
५. सभापर्वणि २१.३०
६. नाट्यशास्त्रे २१.४०.४१; ऋतुसंहारे १.५ कादम्बर्यां ११पृष्ठे
७. नाट्यशास्त्रे २१ २४

नेत्रयोरञ्जनं कार्यमधरस्य च रंजनम्।
दन्तानां विविधा रागाश्चतुर्णां शुक्लता यथा ।। २१.२८

न केवलं युवका अपि तु बालका अपि धातुरसैः शरीरं रंजयन्ति स्म। प्रसाधनपरीक्षणाय दर्पणस्योपयोगः कृतः। बहुविधा धातुनिर्मिता दर्पणाः बभूवुः।[१]

गुप्तयुगेऽसंख्यविधा गन्धाङ्गरागादयो निर्मिताः। तेषां वैविध्यं प्रयुक्तोपकरणानां वैचित्र्येण तेषां मात्राया न्यूनाधिक्येन च सम्भूतम्।[२]

**केशरचनाः**

केशाः प्राचीनयुगे द्वयोरपि स्त्रीपुरुषयोः समानरूपेण लम्बा बभूवुः। तेषां संवर्धनाय प्रसाधनाय च सर्वे समानरूपेण सचेष्टा अभवन्। सिन्धुसभ्यताया युगादेव भारतस्य विविधभागेषु विविधप्रकारैः केशप्रसाधनमक्रियत। जनाः शिरसोऽग्रभागे सीमन्तमरचयन्। वैदिकयुगे कङ्कतप्रयोगेण केशरचना कृता। केशं संग्रथ्य शिरसः शिखरभागे ओपशरचना कृता। पृथुष्टुका विषितष्टुका च द्विविधे वेण्यौ रचिते। शिरसि केशपाशानां कपर्दाः कृताः[३]।

श्वेतकेशानां विरलत्वे भूते तेषामुन्मूलनं कृतम्। श्वेतकेशानां बाहुल्ये भूते केशकल्पेन तेषां श्यामीकरणं सुप्रचलितमासीत्।[४] स्नानस्य पश्चात् केशपाशं शोषयित्वा तैलैः सुगन्धितधूपैश्च तस्य सुवासनमक्रियत।[५]

---

१. शतपथे ५.४.५.२२; घतजातके ३५५
२. बृहत्संहितायां ७७ अध्याये
३. ऋग्वेदे ८.३३.१;१०.११४.३ अथर्ववेदे ६.१३६;८.२ १७;शतपथे ५.५ ३.१
४. अम्बजातके ३.४४ बृहत्संहितायां ७७.१
५. सिगालजातके १५२ वर्त्तमान कथा द्रष्टव्या। सूयगडंगे १.४.२.५; रघुवंशे १६.५०। विविधानां सुगन्धिततैलधूपवासनद्रव्यकेशकल्पानां निर्माणविधिः बृहत्संहितायां ७७.४-२० वर्तते। तथा हि १७४७२० विधाः गन्धाः षोडशद्रव्याणां मिश्रणेन सम्भवन्ति। शतपाकसहस्रपाकादीनां तैलानामुल्लेखः 'उवासग दसाओ' ग्रन्थे प्रथमाध्याये विद्यते।

प्राचीनयुगस्य केशरचनायाः प्रत्यक्षज्ञानं तत्कालीनमूर्तिचित्रकर्मादिभिः सुकरं भवति। तद्यथा अजन्ताबाघादिषु स्थानेषु गुहानां चित्रेषु खजुराहोभुवनेश्वरादिषु स्थानेषु मन्दिराणां मूर्तिसहस्रेषु च दृश्यते। साहित्यग्रन्थेषु केशरचनाऽनेकत्र वर्णिता। तथाहि—

अवन्तियुवतीनां तु शिरः सालककुन्तलम्।
गौडीनामलकप्रायं सशिखापाशवेणिकम्॥
आभीरयुवतीनां तु द्विवेणीधरमेव च।
शिरः परिगतं कार्यं नीलप्रायमथाम्बरम्॥
तथा पूर्वोत्तरस्त्रीणां समुद्धतशिखण्डकम्।
आकेशं छादनं तासां वेशकर्मणि कीर्तितम्॥

नाट्यशास्त्रे २१.६५-६७

अमरकोशे मनुष्यवर्गे केशरचनामधिकृत्य निदर्शितम्—

अलकाः चूर्णकुन्तलाः, काकपक्षः शिखण्डकः।
कबरी केशवेशः, अथ धम्मिल्लः संयताः कचाः॥
शिखा चूडा केशपाशी व्रतिनस्तु जटा सटा।
वेणिप्रवेणी शीर्षण्यशिरस्यौ विशदे कचे॥
पाशः पक्षश्च हस्तश्च ।कलापार्थाः कचात्परे।

केशेषु पुष्पग्रथनं सुप्रचलितरीतिरभवत्। चित्रमाल्यानुकीर्णकेशपाशस्य वर्णनं कालिदासेन कृतम्—

अपि तुरगसमीपादुत्पतन्तं मयूरं-
न स रुचिरकलापं बाणलक्ष्यीचकार।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः॥ रघुवंशे ६.६७

## अलङ्काराः

संस्कृतेः समारम्भादेव शरीरस्य सौन्दर्यसंवर्धनाय वैभवप्रदर्शनाय

सौभाग्याधानाय च प्रायः सदैवालङ्कारधारणविधिः प्रचलितोऽभवत्[१]। अलङ्कारनिर्माणाय मृत्तिका-शुक्ति-पत्र-पुष्प-लता-फल-धातु-रत्न-मणि-हस्तिदन्त-काचादीनां प्रायोऽनायासप्राप्तव्यानां महार्घाणां च वस्तूनामुपयोगः कृतः। विशाले भारतेऽलङ्कारार्थं बहुविधानामुपादानानां प्रायः सर्वत्र प्राचुर्यं वर्तते एव।

शरीरस्य प्रायः सर्वाण्यङ्गानि विभूषितव्यानि मतानि। शिरस आरभ्याप्रपदमलङ्कारग्रहणमक्रियत। क्रमशः तेषां निदर्शनं कर्तव्यम्।

**शिरसोऽलङ्काराः**

सिन्धुसभ्यतायुगे, शिरः मृत्तिकाहस्तिदन्तस्वर्णरजतादिभिर्निर्मितैः त्रिकोणैः सज्जितम्। स्त्रियः केशेषु पुष्पग्रथनं कुर्वन्ति स्म। ललाटे स्वर्णपत्रं बद्धम्।

वैदिकयुगे केशगुच्छकाः कुरीरैः आबद्धाः। राज्ञां शिरसि स्वर्णमुकुटमशोभत। परवर्तियुगे चूडामणिमुक्तगुणकिरीटादयः शिरोऽलङ्काराः बभूवुः। स्त्रियः वेणीषु स्वर्णसूत्राणि ग्रथ्नन्ति स्म। तासामलकेषु मुक्ताजालानि ग्रथितानि।

कृष्णस्य शिरसि मयूरपिच्छालङ्करणं बभूव। गोपाला लताप्रतानैः जटाजूटं बध्नन्ति स्म। कतिपयवनप्रियाः शिरसि पुष्पालङ्कारमेव बहु मन्यन्ते स्म। राज्ञां मुकुटान्यपि मालतीकुसुमैः रचितानि।[२] राज्ञां मौलिषु पुष्पमालाः ग्रथिताः। स्त्रीणामलकेषु बालकुन्दपुष्पम्, चूडापाशेषु नवकुरबकपुष्पम्, सीमन्तेषु नीपपुष्पं ध्रियन्तेस्म। पुष्पावतंसः प्रायः शिरसि धृतः। विविधानां पुष्पमालानां वर्णनममरकोशे विद्यते। तथा हि—

---

१. सौभाग्याधानायालङ्कारस्योपयोगिताऽथर्ववेदे वर्णिता। तथा हि—

अग्नेः प्रजातं परियद्धिरण्यममृतं दध्रे अधिमर्त्येषु।

य एनद्वेद स इदेनमर्हति जरामृत्युर्भवति यो बिभर्ति॥ १६.२६.१

गजमुक्ताधारणेन पुत्रविजयस्वास्थ्यानि प्राप्यन्ते। बृहत्संहितायां ८१.२२

२. कादम्बर्यां ६ पृष्ठे ३. रघुवंशे १७.२३

माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ।
प्रभ्रष्टकं शिखालम्बि पुरो न्यस्तं ललामकम् ॥
प्रालम्बमृजुलम्बि स्यात्कराठात् वैकत्तकं तु तत् ।
यत्तिर्यक् त्तिप्तमुरसि शिखास्वापीडशेखरौ ॥

कर्णालङ्काराः

सिन्धुसभ्यतायुगादेव कर्णेषु बहुविधा अलङ्कारा ध्रियन्ते स्म । तादृशानामलंकाराणां नामानि—कर्णोत्तंसः, कर्णेन्दुः, कर्णादर्पणः, कर्णपाली, कर्णपूरः, कर्णपाशः कर्णभूषणम्, कर्णवेष्टः, कुण्डलम्, कर्णिका, कर्णवलयः, पत्रकर्णिका, कर्णमुद्रा, कर्णोत्पलम् । साहित्यग्रन्थेषु प्राप्यन्ते । कर्णालङ्काराः प्रायः पत्रपुष्पैरपि रचिताः । ग्रामवधूटीनां कर्णालङ्करणं शस्यकणिकोऽपि बभूव ।

ग्रीवालङ्काराः

ग्रीवालङ्काराणां संख्या सदैवात्यधिका बभूव । ग्रीवावलम्बनेन बहुभारवन्तोऽपि बहवोऽलङ्कारा धृताः । ग्रीवायां धृतानामलङ्काराणां नामानि—सूत्रं, हारः, माला, ग्रैवम्, ग्रैवेयकम्, कण्ठाभरणम्, मणिमाला, रत्नावली, मुक्तालता, मौक्तिकसरः, कनकसूत्रम्,—प्राप्यन्ते । हाराणां वैदिकनामानि रुक्मः निष्कः सृङ्का प्राप्यन्ते । मणिग्रीवाः निष्कग्रीवाश्च पुरुषाः प्रतिष्ठता बभूवुः ।

परवर्तियुगे मौक्तिकहाराणां प्रचलनं सविशेषमभवत् । दीर्घह्रस्वमुक्तानां संग्रन्थनक्रमवैविध्येन शीर्षकोपशीर्षकप्रकाराडकावघाटकतरलप्रतिबन्धकादयः यष्टयो बभूवुः । हारेषु क्रमशः १००८, ५०४, १००, ६४, ५४, ३२, २७, २४, २०, १० यष्टयः संगृहीताः । एतेषां नामानि—इन्द्रच्छन्दो विजयच्छन्दो देवच्छन्दोऽर्धहारः, रश्मिकलापः, गुच्छः, नत्तत्रमाला, अर्धगुच्छः, माणवकः, अर्धमाणवकश्चासन् । मुक्तामणिस्वर्णगुलिकादीनां परस्परं संग्रन्थनेन यष्टीनां रत्नावली, अपवर्तकः, सोपानकः, मणिसोपानकः इति भेदा अजायन्त ।[1] नाट्यशास्त्रानुसारं हाराणां भेदाः त्रिभूषिताङ्ग-

---

१. विशेषज्ञानाय अर्थशास्त्रे अध्यत्तप्रचारोऽध्यायः ११ द्रष्टव्यः ।

दृष्ट्यापि भवन्ति। तथा हि कण्ठविभूषणं—'मुक्तावली, व्यालपंक्तिः, मञ्जरी, रत्नावली, रत्नमालिका, शृंखलिकादयः' कण्ठस्य शोभासंवर्धनाय भवन्ति। त्रिसरो हारश्च वक्षःस्थलशोभनाय भवतः। देहभूषणेन समग्रशरीरं शोभते। कटिप्रदेशशोभनाय तरलसूत्रकादयः भवन्ति।[1]

उपर्युक्तहाराणां रचना बहुमूल्यरत्नादिकैरभवत्। कण्ठस्य विभूषणाय पुष्पमालानां प्रचलनं वैदिकयुगत एव दृश्यते। अश्विनौ देवौ पुष्करस्रजौ आस्ताम्। न केवलं मनुष्या अपितु पशवो गृहा अपि च हारैः मालाभिश्च समलंकृताः।

भुजालङ्काराः

सिन्धुसभ्यतायुगादेव प्रायः सदैव भुजयोः प्रकोष्ठप्रदेशे धातुशुक्तिमृत्तिकाकाचादिभिर्निर्मितानां कंकणवलयादीनामलङ्काराणां स्थानं बभूव। बाहुप्रदेशो भुजबन्धेन करशाखा अङ्गुलीयैश्च विभूषिताः। वैदिकयुगे हिरण्यखादिः कङ्कणवत् धारितः। भुजेषु रामायणमहाभारतानुसारं वलयकेयूराङ्गदानां विभूषणं बभूव। पुरुषाणां वलयाः रत्नमणिस्वर्णादिभिः कृताः। नाट्यशास्त्रानुसारं भुजालङ्कारा बहुविधा आसन्।[2] तथा हि

अङ्गदं वलयं चैव बाहुमूलविभूषणम्।
खर्जुरं स्वेच्छितीकश्च बाहुनालीविभूषणम्॥
कटकं कलशाखा च हस्तपत्रं सुपूरकम्।
मुद्राङ्गुलीयकं च स्यादङ्गुलीनां विभूषणम्॥ २१.३४-३५

रसिकानां वलयास्तु पद्मनालैरपि रचिताः। हस्तेषु लीलाकमलानि धारितानि। स्त्रीपुरुषयोर्द्वयोरपि हस्ते छत्रं विभूषणाय बभूव। छत्रं यष्टिर्वा नागरिकैरवश्यमेव धारणीया इति सभ्यानां मान्यता। राज्ञां छत्राणि पक्षिणां पिच्छैः निर्मितानि परितः शुक्लदुकूलैराच्छादितानि च बभूवुः।

---

१. नाट्यशास्त्रे २१.१७-३८

२. कटकोऽङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम्।
केयूरमङ्गदं चैव कूर्परोपरि विभूषणम्॥ नाट्यशास्त्रे २१.१७-१६

यत्र तत्र तेषां छत्रेषु मणय उपचिताः मौक्तिकहाराश्च बहिर्भागादवलम्बिताः। छत्रस्य मूलभागाः स्फटिकमणिना रचिताः, दण्डा वेतसनिर्मिताः स्वर्णपत्रैराच्छादिताश्च। छत्रं पुष्पमालाभिः समलङ्कृतम्। छत्रान्न केवलमातपात् अपितु शीतादपि रक्षाऽभवत्।

**कटिभूषणानि**

कटिप्रदेशे कांचीविभूषणं सिन्धुसभ्यतायुगात् प्रवर्तितम्। कांचीभूषणे रत्नानि ग्रथितानि। तत्रत्यभूषणानां वैविध्यं नाट्यशास्त्रे वर्णितम्। तथा हि—

कांचीमौक्तिकजालाद्या कुलकं मेखलं तथा।
रशना च कलापश्च भवेच्छ्रोणीविभूषणम्॥
एकयष्टिर्भवेत्कांची मेखला त्वष्टयष्टिका।
रशना षोडश ज्ञेया कलापः पंचविंशतिः॥ २१.३६,३७

पुरुषाणामपि कांची कृता। तद्यथा कालिदासे—

स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरदामकाञ्चीम्।
न्यासीकृतां स्थानविदा स्मरेण मौर्वीं द्वितीयामिव कार्मुकस्य॥
कुमारसंभवे ३.५५

**पादभूषणानि**

सिन्धुसभ्यतायुगे जानुप्रदेशादारभ्याप्रपदमलङ्करणमभवत्। पादयोर्नूपुरं सुप्रथितमेव। नाट्यशास्त्रे पादभूषणानामाकलनं कृतम्। तथा हि—

नूपुरः किंकिणीकं च रत्नजालकमेव च।
संघोषकटकं चैव गुल्फोपरि विभूषणम्॥
पदयोः पादपत्रं स्यादङ्गुलीष्वङ्गुलीयकम्।
अङ्गुष्ठे तिलकं चैव पादयोश्च विभूषणम्॥ २१. ३९-४०

पादेषु हंसकः पादकटको वा हंसवद् ध्वनिमकरोत् [२]। हर्षस्य सामन्ताः रत्नजटितं पादबन्धमधारयन्।

---

१. शिशुपालवधे ८.४४ उत्तरमेघे २
२. शिशुपालवधे ७.२३

पादयोः सुरक्षायै पदत्राणधारणस्य रीतिः वैदिककालतः प्रवर्तते। पदत्राणस्य विविधभेदाः तेषामुपादानरंगाकारापेक्षया बभूवुः। पदत्राणेष्वपि स्वर्णरजतसूत्रैः मणिरत्नमुक्तादिभिश्च शिल्पानि रचितानि। तृणमुंज-कमलपत्रोर्णादिभिः पादुकाः निर्मिताः।[१] पादुका अपि स्वर्णभूषिताः स्वलंकृता बभूवुः।

भारते सदैव प्रसाधनानामाधिक्यं समृद्धिशालिनागरिकेभ्योऽभूत्, किन्तु साधारणजनाः सदैव सरलजीवनविन्यासेन परितुष्टा बभूवुरिति ह्वेनसांगेन प्रमाणितम्—The kshatriyas and Brahmins are clean-handed and unostentatious, pure and simple in life and very frugal. The dress and ornaments of the kings and grandees are very extraordinary. Garlands and tiaras with precious stones are their head-adornments ; and their bodies are adorned with rings, bracelets and necklaces, wealthy mercantile people have only bracelets. Most of the people go barefoot and shoes are rare.[२]

## वस्त्र-विन्यासः

भारतीयः जलवायुः सामान्यतः समशीतोष्णः। स्वभावतो जना द्वन्द्वविनिर्मुक्ताः। अस्यां परिस्थितौ वस्त्राणामावश्यकता नात्यधिका भवति। अपरं च प्राचीनयुगेऽलङ्काराणां प्रदर्शनार्थं नाधिकवस्त्रधारण-मपेक्षितमभवत्। तथापि शरीरसौभाग्यं बहुमूल्यवस्त्रपरिधानेनापि करणीयमिति नागरिकाणां शाश्वतधारणाऽभूत्। तेषां प्राचीनयुगीनानां वस्त्रविन्यासपरिज्ञानाय चित्रमूर्तिशिल्पसाहित्यादीनां सहायताऽपेक्षिता।

स्वभावतो वस्त्राकलनमृतुमपेक्ष्य भवति। तथा हि ऋतुसंहारानुसारं—

---

१. महावग्गे ५.२.१-४;५ ८ १,३

२. ह्वेनसांगे वाटर्सकृते भागे १ पृ० १५१

हेमन्ते—न बाहुयुग्मेषु विलासिनीनां प्रयान्ति सङ्गं वलयाङ्गदानि ।
नितम्बबिम्बेषु नवं दुकूलं तन्वंशुकं पीनपयोधरेषु ॥ ४.३

शिशिरे—गुरूणि वासांसि प्रयान्ति सेव्यताम् । ५.२
मनोज्ञकूर्पासकपीडितस्तनाः सरागकौशेयकभूषितोरवः ॥ ५.८

वसन्ते—कुसुम्भरागारुणितैर्दुकूलैर्नितम्बबिम्बानि विलासिनीनाम् ।
तन्वंशुकैः कुङ्कुमरागगौरैरलंक्रियन्ते स्तनमण्डलानि ॥ ६.५
गुरूणि वासांसि विहाय तूर्णं तनूनि लाक्षारसरञ्जितानि ।
सुगन्धिकालागुरुधूपितानि धत्ते जनः काममदालसाङ्गः ॥ ६.१५

रात्रिदिवसयोर्वस्त्राण्यपि विभिन्नान्येव ।[1] तथा हि—
सुरतसमयवेषं नैशमाशु प्रहाय
दधति दिवसयोग्यं वेषमन्यास्तरुण्यः ॥ ऋतुसंहारे ५.१४

बौद्धभिक्षूणां वर्षर्तुयोग्यं वस्त्रं निर्धारितमासीत् । तेषां स्नानवस्त्राण्यपि निर्दिष्टानि ।[2]

स्थानभेदानुसारं वस्त्रविन्यासवैविध्यमपि दृष्टम् । तथाहि काव्यमीमांसानुसारम्—
गौडदेशेषु—सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः
महोदयदेशेषु—आश्रोणिगुल्फपरिमण्डलितान्तरीयम् ।
केरलदेशेषु—कक्षानिवेशनिबिडीकृतनीविरेष ।
वेषश्चिरं जयति केरलकामिनीनाम् ॥[3]

अस्यां परिस्थितौ भारतस्य विविधप्रदेशानां वस्त्रविन्यासाः तत्रत्यचित्रमूर्तिशिल्पेभ्य एवावगन्तव्याः ।

१. महाभारतानुसारम्—
अन्यदेव भवेद्वासः शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥
अनुशासनपर्वणि १०४.८६—८८

२. महावग्गे ८.१५.१५

३. काव्यमीमांसायां तृतीयेऽध्याये

## वस्त्रविन्यासाभिरुचिः

सिन्धुसभ्यतायुगीनैः शिल्पैः वस्त्रविन्यासं प्रति जनानां विशेषाभिरुचिः प्रतीयते। वैदिकयुगे सुष्ठु विन्यस्तानि वस्त्राणि 'सुवसनानि' इति ख्यातानि। सुवसनधारिणो जनाः सुवासस इति प्रतिष्ठिताः। वस्त्रविन्यासस्यापरं विशेषणं 'सुरभि' इति बभूव।[१] अथर्ववेदानुसारं नववस्त्रधारिणे कामना वर्तते—

हिरण्यवर्णो अजरः सुवीरो जरामृत्युः प्रजया सं विशस्व।

तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः॥ १६.२४.८

अधोवासविन्यासेन हस्तिशुण्ड-मत्स्यजाल-चतुष्कोण-तालवृन्त-शत-वल्लिकादीनामाकारा रचिताः।[२] शरीररंगानुरूपं वस्त्रं भवेदिति मान्यताऽसीत्।[३]

परवर्तिसाहित्येऽपि निर्मलवस्त्रधारणेन विशेषयोग्यताधानं विनिश्चितम्। चरकानुसारं निर्मलवस्त्रैः सौन्दर्यं यश आयुर्वर्धन्ते, दारिद्र्यं दूरं भवति, मनः प्रसन्नं जायते, शोभासुश्रीकते सम्भवतः, परिषदि च सम्मानमनुभूयते। वस्त्रविन्यासैः सौजन्यं प्रदर्शनीयम्।[४] श्वेतवस्त्राणि प्रति नागरिकाणां विशेषाभिरुचिरभवत्। वस्त्राणां श्वेतवर्णः भारतीयकार्पासवैशिष्ट्येन समभवत्।[५]

वैदेशिकवस्त्रविन्यासं प्रति भारतीयानां रुचिः प्राचीनकालेऽपि बभूव। शककुशनादिजातीनां 'टोपकंचुकपायजामाशलवारादीनि' ख्रीष्टाब्दस्यारम्भिकयुगतः एव समृद्धिशालिभिर्जनैः परिगृहीतानि।

## वस्त्रोपादानानि

प्रारम्भिकयुगे चर्मवल्कलपत्रादीनां वस्त्रवदुपयोगो वनवासिभिरपि कृतः। एषामुपयोगः परिधानकर्मणि शाश्वतो भूतः। सिन्धुसभ्यतायुगे

---

१. ऋग्वेदे १.१२४.७;६.६७.५०,६.२६.३

२. चुल्लवग्गे ५.२६.४ ३. महापरिनिब्बानसुत्ते २.१८

४. चरकसंहितायां सूत्रस्थाने ५-६२;८.१८–१६

५. Arrian : Ancient India P 224

'ऊर्णाकार्पासादीनां' वस्त्राणि निर्मितानि। कार्पासवस्त्राणामुपयोगः परवर्तिवैदिकयुगे दृश्यते।

वैदिकवस्त्रोपादानानि मृगचर्मोर्णवल्कलक्षौमादीनि बभूवुः। क्रिमितानस्य कौशेयवस्त्रस्य वा प्रचलनं खीष्टतः सप्तशताब्दं प्रागेवासीत्।[१] वस्त्रनिर्माणाय पिच्छानां तृणानामपि चोपयोगः आसीत्। वस्त्रनिर्माणाय पत्रेभ्योऽपि ऊर्णा गृहीतम्। नागलिकुचबकुलवटादीनां पत्रोर्णैर्निर्मितानि वस्त्राणि क्रमशः पीतगोधूमश्वेतनवनीतवर्णानि बभूवुः।[२]

## वस्त्रालङ्करणम्

सिन्धुसभ्यतायुगे वस्त्राणां चित्रणं प्रचलितमासीत्। समृद्धिशालिनामुत्तरीये पत्रपुष्पाणां चित्राणि शोभन्ते स्म। वस्त्राणां रंजनमक्रियत।

वैदिकयुगे राजसूययज्ञाय दीक्षितस्य राज्ञः तार्प्यपरिधाने सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति स्म।[३] वधूभ्यः वाधूये परिधाने चित्रालङ्करणं सविशेषमासीत्।[४] हिरण्मयचित्रशिल्पैः अत्कद्रापिपरिधानानि द्योतितानि।[५] रजयित्री तु वस्त्ररञ्जिका स्त्री बभूव।[६] ऊर्णा प्रथमं रञ्जितम्। पश्चात् तेन पटनिर्माणं कृतम्[७]।

बौद्धयुगे वस्त्ररंजनाय वनस्पतीनां मूलस्कन्धवल्कलपत्रपुष्पफलादिभ्यो वर्णाः प्राप्ताः।[८] एभिः वर्णैः गृहस्थानां विविधरंगेषु परिधानेषु पुष्पनागफणादीनां चित्रणमभवत्।[९] परिधानानां वर्णस्य स्वशरीरवर्णानुरूपीकरणं

१. पाणिनौ ४.३.४२; रामायणे २.४०.६; महावग्गे ८.१.३६
२. अर्थशास्त्रे कोशाध्यक्षप्रकरणे ११२-१२०
३. शतपथे ५.३.५ २०
४. ऋग्वेदे १०.८५.३४; अथर्ववेदे १४.२.४१
५. ऋग्वेदे १.१२२.२; ५.५५.६; १.१६६.१०; १.२५.१३
६. शुक्लयजुर्वेदे ३० अध्याये
७. शतपथे ५.३.५.२१
८. महावग्गे ८.१०
९. महावग्गे ८.२६

प्रचलिता रीतिरभवत्।[१] वस्त्राणां गन्धैः सुवासनं, आतपवायुभिश्च परिशोधनमक्रियत।[२] मृगचर्मपरिधानानामलङ्करणं नैसर्गिकमेव रमणीयमासीत्।

नाट्यशास्त्रानुसारं 'राज्ञां वस्त्राणि प्रायशः चित्रितानि, बभूवुः अन्तः—पुरकर्मचारिणां वस्त्राणि कषायवर्णानि चाभवन्।[३] गुप्तयुगे पुटवासेन वस्त्राणां सुवासनं प्रवर्तितम्।[४] तदा वस्त्राणि धौतानि घृष्टानि मृष्टानि संप्रधूमितानि च।[५] वस्त्राणि रत्नैरपि भूषितानि। स्त्रीणामुत्तरीयेषु रत्नशोभा दर्शनीयासीत्।[६] धनिकानां दुकूलेषु हंसमिथुनानि गोरोचनेन चित्रितानि, हंसकूलेषु हंसानामसंख्यचित्राणि निर्मितानि। तत्रैव पुष्पपङ्क्तिणामपि चित्राणि कृतानि।[७] लोकानां वस्त्रेषु चित्रकरणं गुहाचित्रैः समर्थितम्। अजन्ताचित्रेषु वस्त्राणां पङ्क्तिपत्रपुष्पताराव‍ृषभादिभिरलंकरणं दर्शनीयमेव। विविधवर्णानां सूत्राणां संयोजनेन वस्त्राणां वर्णवैविध्यमक्रियत। दशपुरस्थपट्टवायकानां प्रशस्तिः तदेव समर्थयति—

स्पर्शवतावर्णान्तरविभागचित्रेण नेत्रसुभगेन।
यैः सकलमिदं क्षितितलमलंकृतं पट्टवस्त्रेण॥

## सीवनम्

भारते सूदूरप्राचीनकालतः सीवनस्य कला सुपरिचिता दृश्यते। तथा हि सिन्धुसभ्यतायुगीनाः सूचयः प्राप्यन्ते। तथापि स्यूतवस्त्राणां परिधानं भारते लोकसम्मतं नाभूत्। परवर्तियुगे वैदेशिकानां प्रभावैः 'कुर्ता ब्लाउज-फ्राक-पायजामा' आदि स्यूतवस्त्राणां प्रचलनं धनिवर्गेऽभूत्।

सीवनस्य विशेषोपयोगः वस्त्रेषु शिल्पकर्मणे तेषां नवीकरणाय च बभूव। सीवनेन वस्त्राणां मण्डलमर्धमण्डलं, त्रिवर्तमनुविवर्तं ग्रैवेयकं

---

१. सिरिकालकण्णिजातके ३८२
२. आचाराङ्गसूत्रे २.५.१.२०
३. नाट्यशास्त्रे २१.११७—१२४
४. ऋतुसंहारे ६.१५; कादम्बर्यां २१६ पृष्ठे, बृहत्संहितायां च
५. बृहत्कल्पसूत्रभाष्ये ३.३००१
६. रघुवंशे १६.४३ ७. रघुवंशे १७.२५; कादम्बर्यां ६ पृष्ठे

जांघेयकं बाह्वन्तश्च कृतानि ।[१] बौद्धसाहित्यानुसारं सीवनस्य कला सुविकसिताऽऽसीत् । बौद्धभिक्षवः सीवने निष्णाताः बभूवुः ।[२]

## परिधानानि

### शिरोवस्त्राणि

सिन्धुसभ्यतायुगे स्त्रीपुरुषयोः शिरसि पट्टाकारं वस्त्रं बद्धमासीत् । कतिपयपुरुषाः शिरोवेष्टनं धारयन्ति स्म । अपरे केचिदुष्णीषेण शिरो भूषयन्ति स्म । वैदिकयुगेऽपि तत्रासीदुष्णीषधारणस्य प्रचलनम् । तदा स्त्रीपुरुषयोर्द्वयोरपि शिरसि उष्णीषबन्धोऽभवत् ।

परवर्तियुगीन उष्णीषे चित्रणमलङ्करणं च सविशेषमभवत् । उष्णीष-बन्धेन शंखमृदङ्गगोलकस्तूपवृत्ततोरणपुष्पपत्रादीनामाकृतयः विरचिताः । स्त्रीणां शिरसि तदाऽवगुण्ठनवस्त्रं पुष्पलताचित्रादिभिरलंकृतमासीत् ।

### स्कन्धवस्त्राणि

स्कन्धस्याश्रयेणोत्तरीयं सामान्यतो धारितम् । वैदिकयुगे स्कन्धाश्रितानि वस्त्राणि—अत्कप्रतिधिद्रापिपर्याणहनोपवसनादीनि बभूवुः ।

वैदिककालतः चेलकधारणस्य रीतिः प्रायः सदैव प्रचलिताऽभवत् । विभिन्नयुगेषु विविधप्रदेशेषु च चेलकधारणस्य विविधकल्पाः चित्रमूर्तिषु दृश्यन्ते ।

कंचुकधारणस्य विधिः खीष्टतः प्रथमशतकात् प्रायः दृश्यते । कंचुकेन समग्रभुजयोरावरणं बभूव । कंचुकस्य प्रतान आजानु आसीत् ।

गुप्तयुगे स्कन्धादारभ्य कटिपर्यन्तं चोलकूर्पासकादिवस्त्राणां परिधानमासीत् । स्तनांशुकेन स्तनानामावरणं कृतम् । अमरकोशानुसारं प्रपदीनवस्त्रेण स्कन्धात् पदपर्यन्तमावरणमभवत् ।

### कटिवस्त्राणि

सिन्धुसभ्यतायुगेऽपि कतिपयजनाः कटिप्रदेशात् पदपर्यन्तं वस्त्रं

---

१. विशेषविवरणाय महावग्गे ८.४.२ द्रष्टव्यम् । २. चुल्लवग्गे ५.११.२ महावग्गे ७.१.५

धारयन्ति स्म । किन्तु बहवस्तत्रासन् जना ये कटिप्रदेशे वस्त्रं नाममात्रमेव धारितवन्तः । वैदिकयुगे कटिप्रदेशे नीविः धृता । नीवितः प्रघातवातपानादीनि वस्त्राण्यवलम्बितानि । नीव्या उपरि वासः धारितम् । वासोधारणमनिवार्यमेवासीत् । स्त्रीणां वासः सट्टं साटकं वा बभूव ।

कटिप्रदेशस्य दृढीकरणाय तत्र वस्त्रपट्टिका बद्धा । अस्याः पट्टिकाया गुलिका अवलम्बिताः ।

**प्रावरणम्**

प्रावरणानामावश्यकता प्रायः हेमन्तशिशिरयोर्भवति । प्रावरणानां रचना प्रायः बहुमूल्योर्णादिभिर्बभूव । तत् प्रथमं कम्बलमेव प्रावरणं देशकालशैलीभेदेन विविधसंज्ञासमन्वितं दृश्यते ।[१] अमरकोशानुसारं तु 'नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ।'

'निचोलः प्रच्छदपटः, समौ रल्लककम्बलौ ।'

## आवासः

आवासप्रकरणे नगराणां ग्रामाणां गृहाणां च परिस्थितयः पर्यालोच्याः । एषां विन्यासोऽपि न केवलं सुखाय विश्रामाय रक्षणाय वाऽभवदपि तु स्वकीयवैभवं रसिकत्वं च प्रदर्शयितुमेषां विन्यासः कृतः । सुदूरप्रागैतिहासिकयुगे वन्या जनाः पर्वतानां गुहासु वृक्षशरणेषु वाऽवसन् । तेषु केचिदेव पर्णकुटीररचनामपि कुर्वन्ति स्म । अधुनाऽपि तादृशानां शरणानि पूर्ववत् प्राप्यन्ते ।

सर्वप्रथमं तावत् सुसभ्यानां भारते नगरविन्यासः सिन्धुसभ्यतायुगीन एव दृश्यते । तेषां नागरिकसभ्यता प्राचीनयुगे 'सिन्धु-पंजाब-काठियावाड़-राजस्थान' प्रदेशेष्वपि प्रसरितासीत् । 'हड़प्पा-मोहेंजोदड़ो' इति ख्याते द्वे नगरे बभूवतुः, बहवः ग्रामश्च विविधप्रदेशेषु निर्मिताः ।

सिन्धुयुगीननगरस्थितिः नदीतटे दृश्यते । नगरस्य रक्षायै प्राकारो

१. विभिन्नप्रदेशेषु निर्मितकम्बलानां परिचयोऽर्थशास्त्रे द्रष्टव्यः । कोशाध्यक्षप्रकरणे ७७.१११ । तत्र खचितं वानचित्रं खण्डसंघात्यं च कम्बलभेदाः ।

निर्मितः । सरलराजमार्गैर्नगरं बहुषु भागेषु विभक्तम् । तेषां मार्गानुबन्धेन प्रकाशः स्वच्छवायुश्च नगरे प्रसृतौ । गृहेषु बहवः कक्षाः प्राङ्गणं च बभूवुः । गृहेभ्यः मलिनजलनिर्गमनाय प्रणालिकाः निर्मिताः । सार्वजनिकोपयोगाय संकरनिचयस्थानानि बभूवुः । सिन्धुसभ्यतागृहाणि सुविन्यस्तानि विशालानि स्वास्थ्यप्रदानि सर्वतः सुरक्षितानि च दृश्यन्ते । तेषां निर्माणं प्रायश्चूर्णसंयोजितेष्टकाभिः कृतम् ।

सिन्धुसभ्यतायां गृहविन्यासस्य कलाविज्ञानयोः सातत्यं प्रत्यक्षं न दृश्यते । तस्याः प्रायशः द्विसहस्रवर्षं पश्चात् भारते महाराजस्याशोकस्य गृहा एवोत्खनिता दृष्टिगोचरा बभूवुः । अस्मिन्नन्तराले भारतीयगृहविन्यासस्य प्रगतिः काऽऽसीदिति ज्ञातुं साहित्यमेवावलम्बनीयं वर्तते ।

वैदिकयुगे भारतीयानामार्याणां जीवन-विन्यासः ग्रामीण एव दृश्यते । तेषां कृषिप्रधाना सभ्यता ग्रामेषु प्रसृता । तत्रैव तेषां पशूनां चरणाय पानाय चापेक्षितसामग्रीणां प्राचुर्यमभवत् । गृहमेव तेषां प्रायः सर्वसंग्राहकं सुखदं विस्तृतं च तृणकाष्ठादिभिर्निर्मितम् । तद्यथाऽथर्ववेदे—

इहैव ध्रुवां नि मिनोमि शालां क्षेमे तिष्ठाति घृतमुक्षमाणा ।
इहैव ध्रुवा प्रतितिष्ठ शालेऽश्वावती गोमती सूनृतानती ।
ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय ॥
धरुण्यसि शाले बृहच्छन्दाः पूतिधान्या ।
आ त्वा वत्सो गमेदा कुमार आ धेनवः सायमास्पन्दमानाः ॥
ऋतेन स्थूणामधि रोहवंशोग्रो विराजन्नप वृङ्क्ष्व शत्रून् ।
इमा आपः प्रभराम्ययक्ष्मा यक्ष्मनाशनीः ॥
गृहमुप प्रसीदाम्यमृतेन सहाग्निना ॥[1] ३.१२

समृद्धिशालिनामार्याणामार्येतराणां च गृहाणि दुर्गरूपेण प्रतिष्ठितानि। तथा हि वरुणगृहं सहस्रद्वारमेव ।[2] दासानां राज्ञः शम्बरस्य शतदुर्गाः बभूवुः ।

---

१. अपरमपि वर्णनमथर्ववेदे ६.३ ईदृशं गृहविन्यासं समर्थयति ।
२. बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते । ऋग्वेदे ७.८८.५

अन्येषामपि दासनेतृणां दुर्गाः वर्णिताः।[१] गृहविन्यासस्तु प्रायः कलात्मक एवासीदार्याणाम्।[२] केषांचिन्नागरिकाणां गृहाणि प्रासादरूपाणि बभूवुः। कश्चित् कविः सदनायाकामयत—

इन्द्र त्रिधातुशरणं त्रिवरूथं स्वस्तिमत्
छर्दि यच्छ मघवद्भ्यश्च मह्यं च याव यादि द्युमेभ्यः॥

हर्म्यमेव धनिकानां गृहमभवत्।[३]

परवर्तियुगीनगृहविन्यासस्य परिचयः रामायणमहाभारतयोः बौद्ध-साहित्ये च प्राप्यते। रामायणे अयोध्याकिष्किन्धालङ्कादीनां नगराणां वर्णनं वर्तते। अनेन वर्णनेनार्याणामार्येतराणां च प्रायः समग्रभारतीयानां वास्तुविन्यासः स्पष्टो भवति। तथा हि अयोध्यानगरी—

आयता दश च द्वे च योजनानि महापुरी।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा॥
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम्॥ बालकाण्डे पंचमसर्गतः

तत्रैव रामवेश्म—

महाकवाटसंयुक्तं वितर्दिशतशोभितम्।
कांचनप्रतिमैकाग्रं मणिविद्रुमतोरणम्॥
मणिभिर्वरमाल्यानां सुमहद्भिरलंकृतम्।
मुक्तामणिभिराकीर्णं चन्दनागुरुधूपितम्॥
सारसैश्च मयूरैश्च निनदद्भिर्विराजितम्।
महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम्॥[४]

नेदं वर्णनं केवलं काव्यकल्पनात्मकम्। तत्समर्थितमेव 'एलियन' महोदयस्य चन्द्रगुप्तप्रासादस्य साक्षिकवर्णनेनापि—

---

१. ऋग्वेदे १.५१.५; ६.२०.७; ६.१८.८; २.१४.६; २.२४.२
२. ऋग्वेदे १.१३.६; १.५१.१४; ५.४१.८ ३. ऋग्वेदे ७.५६.१६ अथर्ववेदे १८.४.५५ ४. रामायणे अयोध्याकाण्डे १५ सर्गतः

In the Indian royal palace there are other wonders besides. In the parks tame peacocks are kept and pheasants which have been domesticated. There are shady groves planted with trees and branches of trees which the art of the woodsman has deftly interwoven; while some trees are native to the soil, others are brought from other parts, and with their beauty enhance the charms of the land scape. Within the palace-grounds are artificial ponds in which they keep fish of enormous size but quite tame.[१]

रामायणसदृशं नगरवर्णनं बुद्धचरिते, सौन्दरनन्दे, मिलिन्दप्रश्ने च लभ्यते।

किष्किन्धायामार्येतराणां वसतिः पर्वतगुहासु बभूव। गुहानगरेषु काननोपवनशोभा सविशेषमभवत्। पर्वतेषु हर्म्यप्रासादादयः बहुभूमिका निर्मिताः। लङ्कायामपि मनोरमोपवनानां कलनिनादकारिणां पक्षिणां वापीजलाशयाक्रीडानां प्रतोलीनां स्वर्णकतोरणानां दिव्यलतानां च शोभाऽऽसीत्।[२] रावणस्य प्रासादे चित्रशालाः क्रीडागृहाः कामगृहाश्च बभूवुः। वर्णीकृता गृहाः चित्रिताश्चातिशयं विराजन्ते स्म।[३]

महाराभारतानुसारं सर्वेषु ऋतुषु सुखदायिनां गृहाणां रचनाऽभवत्।[४] तेषां जालानि स्वर्णमयानि तलानि मणिजटितानि च बभूवुः। स्रग्भिर्दामभिश्च गृहा अलंकृताः।[५]

राजकीयानां वास्तूनां निर्माणाय वास्तुकस्य सहायताऽपेक्षितासीत्। राजभवने वासगृहं मोहनगृहं भूमिगृहं च निर्मितानि। सुरङ्गमार्गैरपि राजभवने प्रवेशः सम्भावितः। राजभवनस्य पश्चभागे अन्तःपुर-प्रसूतिगृहा-

१. Mc. Crindle: Ancient India as described in Classical Literature P. 141-142

२. सुन्दरकाण्डे २ सर्गतः ३. सुन्दरकाण्डे ६ सर्गतः। ४. सभापर्वणि ३३ ५० महापद्मणादजातके २६४ तदेव समर्थितम्। ५. सभापर्वणि ३४.२०-२३.

रोग्यगृहादीनि निर्मितानि। बहिर्भागे कुमाराणामावासः रचितः। नगरसमितिः नागरिकाणामावासव्यवस्थां कौशलेनाकरोत्।[१]

नगरस्य स्वच्छतायै समीचीना व्यवस्थाऽऽसीत्। सार्वजनिकमार्गेषु केनापि विधिना मलकर्दमकिट्टजम्बालादिकारिणः दण्डिताः। नगरात् शवस्य निर्गमनाय मार्गो नियतः। नगराद् जलनिष्कासनाय प्रणालिका निर्मिताः। यदि कस्यापि गृहमवैज्ञानिकरीत्या निर्मितम्, तस्मात्कारणात् परेषां कष्टं च बभूव, तर्हि गृहस्वामी दण्डनीयोऽभवत्। नगरस्याग्निभया-द्रक्षणाय सुचारुव्यवस्था कृता।[२]

गुप्तयुगे गीष्मर्तोः सन्तापेभ्य आत्मानं रक्षितुं धारागृहाणां विशेष-प्रचलनमभवत्। तस्मै प्रयोजनाय जलयन्त्रमन्दिराणां निर्माणमभवत्। जलाशयतटे जलमण्डपानां रचना कृता। जलमण्डपेन ग्रीष्मः पराजित एव।[३] जलान्ते समुद्रगृहाणां निर्माणमभवत्।[४] गृहेषु क्रीडामयूराय यष्टि-निवासः निर्मितः। भित्तिषु चित्राणां शोभाऽऽसीत्। गृहस्तम्भेषु रमणीनामा-कृतय उत्कीर्णाः। शयनगृहं रचितकुसुमगन्धि बभूव। वात्स्यायनः गृहविशेष-माकलयन्नाह—वेश्म च शुचि सुसंमृष्टस्थानं विरचितविविधकुसुमं संश्लक्ष्ण-भूमितलं हृद्यदर्शनं भवेत्।

भारतीयगृहेषु प्रायः केन्द्रभागे प्राङ्गणमभवत्। प्राङ्गणं परितोऽलि-न्दयुक्ताः शाला बभूवुः। ईदृशानि गृहाणि चतुःशालानि ख्यातानि। अपराणि गृहाणि त्रिशालानि, द्विशालानि, एकशालानि वा बभूवुः। एतेषां प्रत्येकविधस्य गृहस्य बहवः प्रकाराः—सर्वतोभद्रनन्द्यावर्तवर्धमानस्व-स्तिकादयोऽभवन्। सर्वेषां वर्णाश्रमपदाधिकारिणां गृहविशेषा निर्णीताः।[५]

राजानः जनपदनिवेशप्रकरणे ग्राम-संग्रहण-खार्वटिक-द्रोणमुख-

---

१. अर्थशास्त्रे दुर्गनिवेशप्रकरणे २. अर्थशास्त्रे नागारिकप्रकरणे, गृह-वास्तुप्रकरणे च। ३. रघुवंशे १६.४६; ऋतुसंहारे १.२; कादम्बर्यां २८३ पृष्ठे ४. कामसूत्रे; स्वप्नवासवदत्ते, विष्णुस्मृतौ ५.११७ ५. बृहत्संहितायाम् मत्स्यपुराणे २५४ अध्याये च।

स्थानीयानामुपनिवेशायायोजयन्ति स्म। दशग्रामेषु मध्ये संग्रहणं द्विशत-ग्रामेषु मध्ये खार्वटिकं चतुःशतग्रामेषु मध्ये द्रोणमुखमष्टशतग्रामेषु मध्ये स्थानीयं च स्थापितानि। स्थानीयोपनिवेशाय वास्तुकः नदीनां तटेऽवस्थितं वृत्ताकारमायताकारं वा क्षेत्रमचिनोत्। स्थानीयानि जलस्थल-मार्गैः सुसन्धापितानि।[१]

न केवलं गृहं वैभवसम्पन्नमासीत्, अपितु गृहकार्यापेक्षितवस्तूनां समाहारस्तत्रासीदिति वात्स्यायनेनाकलितम्—गृहस्योदारस्य करणं महार्हैर्भाण्डैः परिचारकैश्च गृहपरिच्छेदस्योज्ज्वलता।

## शयनासनानि

शयनासनानां सर्वेषु युगेषु प्राचुर्यमभवत्। सिन्धुसभ्यतायुगे आसन्दीनामुपयोग उपवेशनाय कृतः। अपरविधानां शय्यासनानां परिचयो-ऽधुनाऽप्राप्य एव। वैदिकयुगे तृणानामासनानि निर्मितानि। बर्हिदर्भ-कूर्च-वृषी-कशिपु-नड्वला-कटाः सर्वेऽपि तृणनिर्मिता उपवेशनाय बभूवुः।[२] तस्मिन्युगे उच्चासनानि काष्ठनिर्मितपीठतल्पप्रोष्ठादीनि बभूवुः। तल्पासन्दीभिः समृद्धिशालिदम्पतीनां विश्रामागाराः सुशोभिताः। प्रोष्ठासनं स्वल्पं चतुष्पदिकमासीत्।[३] आसादं प्रस्तार्योपाश्रयमाश्रित्यासन्द्यामुपवेशनं कृतम्।

राज्ञामुपवेशनाय सिंहासनमासीत्। आस्तरणाच्छादितस्वर्णकपर्यङ्काः सज्ञां नित्योपवेशनाय बभूवुः। आसनानामलंकरणं रत्नमणिस्वर्णादिभिः कृतम्। भद्रासनानि रत्नमणिजटितानि राजभ्यो बभूवुः।

शयनाय चतुष्पदिका शय्या सुदूरप्राचीनकालतः प्रचलिता। शय्यायाः बहुभेदाः रुच्यनुसारं सदैवाभवन्। उपबर्हस्योपयोगः शिरस आधानाय कृतः। मशककुटिकया मशकेभ्यः शयनकाले त्राणं कृतम्।[४]

---

१. अर्थशास्त्रे दुर्गविधानप्रकरणे। २. ऋग्वेदे १०.१४.४; अथर्ववेदे २.६; शतपथे १०.४.२.१६; ११.५.३.४.७ बृहदारण्यकोपनिषदि ४.२.१ ३. वाजसनेयिसंहितायां ३०.२१; तैत्तिरीयब्राह्मणे ३.४.१७.१; अथर्ववेदे १४.१.६० ४. महावग्गे ५.१३.३

गुप्तयुगीनानि वेत्रासनानि सुप्रसिद्धानि बभूवुः। राजभ्यः पर्यङ्किका चन्द्रकान्तमणिभिर्निर्मिता। पादपीठं स्फटिकेन रचितम्। रमणीनामुपवेशनाय चित्रास्तरणाच्छादितोपबर्हसमन्वितमंचकमभवत्। पृष्ठाश्रयायोपश्रयगोलकमुपयुक्तम्। कतिपयमंचकानां पादाः सिंहाकारा निर्मिताः। अमरकोशानुसारं तु—

उपधानं तूपबर्हः शय्यायां शयनीयवत्।
शयनं मंचपर्यङ्कपल्यङ्काः खट्वया समाः॥

पौराणिकयुगेऽपि—

नाविशालां न वै भग्नां नासमां मलिनां न च।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्॥

विष्णुपुराणे ३.११.१०६

प्रतिपादिकविन्यस्तरत्नमंचोपशोभिनि।
दधत्यालम्बिभिर्मुक्ताजालकैर्हसिताश्रियम्॥
कुन्देन्दीवरमन्दारसान्द्रामोदाश्रितालिनि।
चित्रभित्तिगतानेकरूपकर्ममनोहरे॥
वासगेहेऽन्यदा शिश्ये तल्पे मृदुनि हारिणि।
गंगासैकतनिर्भासिदुकूलप्रच्छदोज्ज्वले॥

महापुराणम् ६.२२-२४

## यात्रासाधनानि

मानवानां यात्रा प्राचीनयुगे स्थलमार्गैः जलमार्गैश्चाभूदिति सुनिश्चितम्। आकाशमार्गैः यात्राऽभूत् न वेति सन्दिग्धप्रायम्।

### स्थल-यात्रा

साधारणतः सर्वेषां पदयात्रा भूमौ दृश्यते, किन्तु क्षिप्रगामिनां पशूनां पृष्ठे आसाद्य यात्राकरणं बुद्धिमतां मानवानां वैशिष्ट्यम्। तथा हि—प्रथमं तावत् हस्तिघोटकवृषभादीनां पृष्ठे यात्राकरणं संस्कृतेः समारम्भादेव प्रारब्धम्। यानेषु घोटकरासभवृषभादीनां संयोजनं यात्राकरणे द्वितीयो-

पक्रमः। सिन्धुसभ्यतायुगे बलीवर्दोढशकटिकाः प्रयुक्ताः। तासां प्रचलनं भारते शाश्वतिकमेवाभवत्। तस्मिन् युगे शकटेषु चत्वारि चक्राणि रथेषु च द्वे चक्रे बभूवतुः कतिपयरथानामाकृतिः पशुसमा पक्षिसमा च बभूव।

वैदिकयुगे आर्याणां रथेषु प्रायशो द्वौ घोटकौ संयोजितौ। रथेषु रासभा उष्ट्राश्चापि योजिताः। कतिपयरथेषु सप्त दश वा चक्राणि बभूवुः। रथा गोचर्माच्छादिता आसन्। रथानां शीघ्रसंचरणाय 'परिरथ्या' इति ख्याता मार्गा निर्मिताः। वैदिकयुगेऽश्वहस्तिरासभोष्ट्रादीनां पृष्ठेऽपि यात्रा कृता। वाहनयोग्या हस्तिनस्तु स्वर्णाभूषणैरलंकृताः।

रामायणमहाभारतयोः रथशकटादीनि यानानि प्रचलितानि दृश्यन्ते। शिबिकानां विशिष्टप्रचलनमभवत्। शिबिकासु प्रायः स्त्रीणां यात्राऽभवत्। शिबिका नरवाह्ययानमासीत्।

महाभारतानुसारं रथैरतिदूरा यात्राऽपि सम्पन्ना। तथाहि अयोध्यातो विदर्भपर्यन्ता यात्रा कतिपयहोराभिरेव कृतेति रथानामतिरंहसः प्रमाणम्। अस्मिन्युगे रथेषु हस्तिनोऽपि संयोजिताः।[१]

अर्थशास्त्रानुसारं श्रेष्ठाश्वसमायुक्ता रथाः प्रतिदिनं द्वादशयोजनान्यगच्छन्।

स्त्रियोऽपि हस्तिघोटकरासभादीनां पृष्ठे यात्रां कुर्वन्ति स्म।[२] रथाश्वहस्तिचर्यासु नागरिका राजकुमाराश्च सुशिक्षिता बभूवुः। स्वयं भगवान् कृष्णः सारथिरासीत्।

## जलयात्रा

सिन्धुसभ्यतायुगीने हडप्पमोहेंजोदडोनगरे नदीपथेन सम्बद्धे। तत्कालीनमुद्रासु नौकाकृतयः लभ्यन्ते। अस्यां परिस्थितौ द्वयोर्नगरयोः नौकाभिः यातायातसम्बन्धः कल्पनीयः। वैदिकयुगे विशालनौका रचिताः। कतिपयासु नौषु शतारित्राणि सम्प्रयुक्तानि। सिन्धुषु नौकानां तदा प्रतरणमासीत्।

१. सभापर्वणि ५२.३१ २. शिशुपालवधे ५.७,१८

रामायणयुगे नौकाः सागरगामिन्यो बभूवुः। तीर्थेषु नौकानामवस्थानमभवत्। प्रयागे गंगातटे पंचशतनौका बभूवुः। नौकानिर्माणकला तदा सुविकसितासीत्। तथा हि—कतिपयनौकाः स्वस्तिकशैलीमनुकृत्य रचिताः। अपराश्च नौकाः पाण्डुकम्बलसंवृता नन्दिघोषसमन्विता बभूवुः। नौकाभिः घोटका रथाश्च नदीपारं गताः। नौकावेगः महाभारते वायोर्मनसो वा वेगेनोपमितः। नौकानां स्थैर्यं प्रभंजनोद्वेजनेऽपि प्रतिष्ठितमेव।[1]

अर्थशास्त्रानुसारं नौकाध्यक्षो नौमार्गाणां सुव्यवस्थायै नियुक्तः। महानौकासु नियामकदात्ररश्मिग्राहकोत्सेचकादयः पंचाधिकारिणोऽवर्तन्त। नौशुल्कस्य निर्धारणं राजकीयप्रशासनेन कृतम्।[2]

प्राचीनयुगे नौभिः समुद्रयात्रा कृता। विशालासु नौकासु व्यापारसामग्रीं विहायानेकशतयात्रिणां भारोऽभवत्। कतिपयमासं निरन्तरं जलयात्रां कृत्वैव कदापि द्वीपदर्शनं मार्गेऽभवत्। प्रभंजनोद्वेजिताः यात्रिणस्तु संशयितप्राणा अर्धमृता एव बभूवुः। चन्द्रतारादीनां गत्या दिशाज्ञानमक्रियत। दिशाकाका अपि दिशाज्ञानाय प्रयुक्ताः। गुप्तशिलोच्चयैः नौकाप्रभ्रंशस्याशंकासीत्।[3]

## आकाशयात्रा

आकाशयात्रायाः वर्णनानि प्रथमं वैदिकसाहित्ये प्राप्यन्ते। देवानामाकाशयात्रा सुप्रसिद्धैव। रामायणमहाभारतयोरनेकत्र देवासुरराक्षसमानवानामाकाशयात्रावर्णनमुल्लिखितम्।[4] पुष्पकविमानं कुबेरात् रावणः रावणाद्रामश्च प्राप्तवानिति सुप्रसिद्धम्।

भारद्वाजरचितवैमानिकशास्त्रानुसारं विमानरचना १८६० ख्रीष्टशतके

---

१. आदिपर्वणि १४०.५ २. मनुस्मृतौ ८.४०४-४०६ ३. फाह्यानमहोदयस्य यात्रावर्णनं दर्शनीयम्। ४. सुन्दरकाण्डे ४.२७; मोरजातके १५६; रामायणे युद्धकाण्डे १२२ ३६; १२३.२१

कृता। स विमानः प्रायः सहस्रहस्तपर्यन्तमुत्पतितः। विमानरचना-विज्ञानं समराङ्गणसूत्रेऽपि दृश्यते।[१]

## मार्गाः

सिन्धुसभ्यतायुगाद् विस्तृतराजपथानामायोजनं दृश्यते। तस्मिन्युगे तत्रत्यनिवासिनां भारतस्य विविधप्रदेशेषु विदेशेषु च यातायाते बभूवतुरिति सुनिश्चितम्। तेषां कृते सुमार्गाणां व्यवस्था देशान्तरेष्वपि कल्पनीया।

वैदिकयुगे प्रपथमहापथाध्वानश्चेति विविधभेदा मार्गाणां बभूवुः। प्रपथस्तु विस्तारेऽत्यधिकोऽभवत्। महापथेन ग्रामाणां परस्परं सम्बन्धः कृतः। मार्गाणां सुरक्षायै तेषु शान्तिव्यवस्थायै च सुप्रबन्धः कृतः। मार्गनिर्माणाय वनानि प्रदग्धानि। इत्थं वनमध्ये मार्गोऽभवत्। शाकटिक-महापथेषु वृक्षाणामारोपणं कृतम्। महापथेषु स्थाने स्थाने जलाशया निर्मापिताः। महापथेषु विश्रामस्थलेषु यात्रिणां भोजनादीनां प्राप्तिः सम्भवासीत्। अतिथियज्ञविधानेन यात्रिणां सुविधा प्रसिद्धा।

अशोकस्य राजकीययात्राव्यवस्थास्तु निरुपमा एव विद्यन्ते। मार्गेषु वृक्षारोपणम्, विश्रामागारस्थापनम्, आपान-प्रतिष्ठा च महाराजस्य माहात्म्यं निदर्शयन्ति।[२] यात्रिभ्यः सुखकारिण्यः योजनाः सम्पादिता महापुण्यकारिण्य इति पुराणवचनम्।

---

१. पुस्तकमिदं बरौदानगरीतः ओरियण्टलसीरीजप्रकाशनम्।

२. परवर्तियुगेऽपि राजानः समृद्धिशालिनश्च जनाः उपर्युक्तादर्शानुसारं यात्रिभ्यः सुखानि सुखमयानि साधनानि च कारितवन्तः। द्रष्टव्यश्च नासिकगुहालेखः १७

---

# व्यवसायाः

प्राचीनभारतस्य निवासिनामुपभोग्यवस्तूनां परिचयेन स्पष्टं प्रतिभाति यत् तत्कालीननिवासिनः प्रचुरपरिश्रमेण तेषां संग्रहणाय प्रयतन्ते स्म। राष्ट्रस्याधिभौतिकाभ्युत्थानाय सर्वेषां देशवासिनामुद्योगपरायणता कर्मण्यता वाऽपेक्षिता भवति। प्राचीनयुगे अधिकाधिकश्रमेण सर्वोत्तमवस्तूनां निर्माणार्थं राष्ट्रे समुचितं वातावरणमविद्यत। तथा हि—

ऋग्वेदानुसारं—न मृषा श्रान्तं यदवन्ति देवाः। १.७६.३

न ऋते श्रान्तस्य सख्याय देवाः॥ ४.३३.११

अभ्युदयस्तु भारते धर्मलक्षणः मतः।[1] गीतायां लोकसंग्रहप्रतिपादनं कर्मण्यताधानाय वर्तते। महाभारतानुसारं तु—

अन्यायात् समुपात्तेन दानधर्मो धनेन यः।
क्रियते न स कर्तारं त्रायते महतो भयात्॥

वनपर्वणि २५६.३३

भागवतेऽपि कर्माभिरुचिमुत्पादयता प्रोक्तम्—

यथावर्णविधानमपवर्गश्चापि भवति॥ ५.१६.१६.

भारते व्यवसायपरायणता समादृता, किन्तु बौद्धिकव्यापाराणां सदैव श्रेष्ठत्वं मतम्। तथा हि महाभारते—

बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत।
तानि जंघा जघन्यानि भारप्रत्यवराणि च॥

उद्योगपर्वणि ३५.७५

अस्यां परिस्थितौ ज्ञानमयप्रवृत्तयः दारिद्र्याभिमुख्योऽपि सर्वश्रेष्ठा इति मनीषिणः।

---

१. यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।

# कृषिः

भारते त्रयो व्यवसायाः प्रधानरूपेण प्रतिष्ठिताः—कृषिः, पशुपालनं शिल्पं च। एतैः प्राप्तानि वस्तूनि व्यापारमाध्यमेन देशेषु विदेशेषु सर्वसुलभानि क्रियन्ते स्म। क्षात्रधर्मपरायणास्तु शस्त्रास्त्रबलैः राष्ट्ररक्षामकुर्वन्। भारतदेशः कृषिप्रधानोऽभवत्।

## कृषेः लोकप्रियता

आर्याणां कृषिप्रधानत्वं तेषां नाम्नैव व्यक्तं भवति। आर्यास्तु कृषिकारिण इति व्यक्तममरेण 'ऊरुव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः।' अर्य एवार्यः वैदिक संस्कृते दृश्यते।[१] कृषिकर्मणि देवाः प्रथमा इति वैदिकी धारणा। तथा हि—

दशस्यन्ता मनवे पूर्व्यं दिवि यवं वृकेण कर्षथः।
ता वामद्य सुमतिभिः शुभस्पती अश्विना प्रस्तुवीमहि॥ ऋग्वेदे ८.२२.६
यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा।
अभि दस्युं वकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय॥ ऋग्वेदे १.११७.२१

इत्थं कृषिर्दिव्यविधानमेव।

माङ्गलिकः कृषेः समारम्भोऽभूत्।[२] कृषिकर्मणो दिव्यं वातावरणं तस्या लोकप्रियतायाः संवर्धनायैव। तथा हि—

अर्वाची सुभगे भव सीते वन्दामहे त्वा।
यथा नः सुभगाससि यथा नः सुफलाससि॥

---

१. आर्यः ऋ + ण्यत्। अर्यः ऋ + यत्। उभौ समानार्थौ वर्तन्ते। ऋधातोः समकक्षौ लैटिनभाषायां arae, ग्रीकभाषायां aroein शब्दौ कृषिद्योतकौ।

२. तदथर्ववेदे—यस्यामन्नं व्रीहियवौ यस्या इमाः पंचकृष्टयः।
भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे॥ १२.१.४२

शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम्॥
ऋग्वेदे ४.५७

अन्नस्य महिमा कृषिप्रतिष्ठां समवर्धयत्। तथा हि—अन्नं न अन्नवानन्नादो भवति। अन्नं न परिचक्षीत। अन्नं बहुकुर्वीत। तद्व्रतम्।[१] अन्नं ब्रह्मेति मतम्। तदधिकृत्यान्नस्य संवर्धनाय कविना प्रगीतम्—

उच्छ्रयस्व बहुर्भव स्वेन महसा यव।
मृणीहि विश्वा पात्राणि मा त्वा दिव्याशनिर्वधीत्॥
तदुच्छ्रयस्व द्यौरिव समुद्र इवैध्यक्षितः॥
अक्षितास्त उपसदोक्षिताः सन्तु राशयः।

पृणन्तो अक्षिताः सन्त्वत्तारः सन्त्वक्षिताः॥ अथर्ववेदे ६.१४२

कृषिसमृद्ध्या राष्ट्राभ्युदयः मतः।[२] महाभारतानुसारम्—

वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते॥ सभापर्वणि ५.४२,

अन्नात् सृष्टेः समारम्भ इति धर्मशास्त्रमतम्। तथा हि तैत्तिरीयोपनिषदि—अन्नात्पुरुषः। अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीं श्रिताः। अथो अन्नेनैव जीवन्ति। अन्नाद् भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते। अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यते इति।[३] कवयोऽपि कृषेर्लोकप्रियतामाधातुमादिकालतः सचेष्टा दृश्यन्ते।[४] तथा हि वाल्मीकिः—

---

१. तैत्तिरीयोपनिषदि भृगुवल्ली ७–६
२. अर्थवानयं देश उच्यते यस्मिन्गावो शस्यानि च वर्तन्ते। महाभाष्ये।
३. तैत्तिरीयोपनिषदो मतमिदं महाभारते शान्तिपर्वणि २६.२.११ मनुस्मृतौ ३.७६ समर्थितम्।
४. शिशुपालवधे १२.४२–४३; ६.४६ महापुराणे ४.६२–६३; ३५.३०

खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किंचिदालम्बाःशालयः कनकप्रभाः।। अरण्यकाण्डे १६.१७

कालिदासोऽपि निदर्शयति—

काशांशुका विकचपद्ममनोज्ञवक्त्रा सोन्मादहंसरवनूपुरनादरम्या ।
आपक्वशालिरुचिरानतगात्रयष्टिः प्राप्ता शरन्नववधूरिव रूपरम्या ।।

उपर्युक्तपरिस्थितौ समग्रं राष्ट्रं कृषेरभ्युदयाय जागरूकमभवत् । महर्षीणामाश्रमेषु राज्ञां प्रासादपरिधिषु दरिद्राणां कुटीरेष्वपि कृषेः शस्यश्यामलता गौरवान्विता ।

## कृषि-विज्ञानम्

नवीनप्रस्तरयुगे वन्यानामन्नानां भोज्यत्वमभोज्यत्वं वा परिज्ञातुं प्रयासोऽभवत् । खाद्यान्नानां कृषियोजनया कृत्रिमोपायैः विकासः कृतः । तस्मात् कालादारभ्य कस्मिन्नृतौ कीदृशे क्षेत्रे कियन्मात्रं बीजं वपनीयम्, तस्य सुसंवर्धनाय च कियद्वारं सेचनं कर्तव्यम्, भूमेरुत्पादनशक्तिः कथं वर्धनीयेति समस्या अधिकृत्य सम्यग्गवेषणं कृतम् । प्रयतमानाश्च ते कृषका अस्यां दिशायां वैदेशिकानि बीजानि फलादीनि च स्वदेशे संवधितवन्तः नित्यमेत्र वन्यानामन्नानां कृषिकल्पं कृतवन्तश्च ।

सिन्धुसभ्यतायुगे जनाः नदीभ्यः सेचनार्थं कुल्या विधाय नालिकाभिः कूपजलं चोद्धृत्य क्षेत्रेषु जलादानं कुर्वन्ति स्म । सिन्धुनदस्य जलं सेचनायोपयोजितम् ।[१]

वैदिकयुगे हले कदाचित् चतुर्विंशतिबलीवर्दाः संयोजिताः ।[२] द्वादशानामष्टानां षण्णां च बलीवर्दानां हले संयोजनमपि प्रचलितम् ।[३]

---

१. In Sindh, even if the rainfall was heavier in prehistoric times, cultivation must have depended to a large extent on irrigation works connected with the Indus. Piggott : Prehistoric India P. 70

२. काठकसंहितायां १५.२ ३. तैत्तिरीयसंहितायां १.८.७.१;५.२.५.२ अथर्ववेदे ६.९१.१ शतपथब्राह्मणे ७.२.२.६

क्षेत्राणामुत्पादनशक्तिः भूमिलेपेन करीषादिना संवर्धिता। घृतेन मधुना च समक्ता सीता सुशोभना मता।[१] कृषिकर्मणः सर्वाः प्रक्रियाः वैदिके युगेऽपि प्रायशः तादृश्यो बभूवुः, यादृश्योऽधुना वर्तन्ते। कृषियोग्या भूमिः 'अप्नस्वती' इत्याकलिता। अयोग्या भूमिः 'अर्तना' इति ख्याता।[२] द्विः त्रिः वाऽधिकाधिकमन्नमुत्पादयितुं योजनाः कार्यान्विताः।[३] क्षेत्राणां मापः कृतः। शकधूमप्रयोगैः कदा कियन्मात्रं वर्षणं भवेदिति ज्ञेयमासीत्।[४]

परवर्तियुगेऽर्थशास्त्रानुसारं कृषिविज्ञानस्य त्रयो भेदाः—कृषितन्त्रं, गुल्मं वृक्षायुर्वेदश्च बभूवुः। कृषिकर्मणो सीताध्यक्षादयो राजकर्मचारिणः कृषिविद्याविशारदा बभूवुः। विविधप्रदेशानां वर्षाप्रमाणमनुमतम्। तदनुकूलं तत्रत्योत्पाद्यान्नानां निर्णयः कृतः। वर्षाया उपयोगित्वमनुपयोगित्वं च निर्णीतम्। शाकफलादीनामुत्पादनाय विशिष्टा भूमिः पर्यालोचिता। बीजानामुपकल्पनं वैज्ञानिकविधिना कृतम्। तथा हि—तुषारपायनमुष्णशोषणं चासप्तरात्रादिति धान्यबीजानां त्रिरात्रं पंचरात्रं वा कोशीधान्यानां मधुघृतसूकरवसाभिः शकृद्युक्ताभिः काण्डबीजानां छेदलेपो मधुघृतेन कन्दानामस्थिबीजानां शकृदालेपः शाखिनां गर्तदाहो गोऽस्थिशकृद्भिः काले दौहृदं च। प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण वापयेत्।[५]

राजाऽपि कृषिकर्मणि वैज्ञानिकानुसन्धानानामभ्युदयाय सचेष्ट आसीत्। तथा हि मेगस्थनीजलेखानुसारं—

Any philosopher who may have committed any useful suggestion to writing, or observed any means for improving the crops and the cattle, or for promoting the public interests declares it publicly.[६]

---

१. अथर्ववेदे ३.१७.६    २. ऋग्वेदे १.१२७.६
३. तैत्तिरीयसंहितायां ५.१७ ३; ऋग्वेदे ७.४६.२
४. अथर्ववेदे ६.१२८.१–४ Vedic Index शकधूम
५. अर्थशास्त्रस्य सीताध्यक्षप्रकरणतः।
६. M' Crindle : Ancient India p. 83

शालेः क्षेत्राणि प्रदाहेन बहुशस्यप्रदानि कृतानि। धान्यानि द्विः रोपितानि। धान्यक्षेत्रात् कक्षाणामुन्मीलनमक्रियत।[1] अभिनवक्षेत्राणि कृषियोग्यानि संस्कृतानि। तेषां तृणानि वनानि च प्रदाहितानि। कार्पास-बीजस्य लाक्षारसावसेचनेन रक्तवर्णः कार्पास उत्पादितः।[2]

## सेचनसाधनानि

सिन्धुसभ्यतायुगे सेतुबन्धेन नदीनां जलं समाहृत्य प्रणालीभिः प्रवाह्य क्षेत्राणां सेचनं कृतम्। वैदिकयुगे कूपजलं चक्रेणोद्वाह्य नालिकाभिः क्षेत्रसेचनाय प्रयुक्तम्।

महाभारतयुगे प्रायशो जलाशयानामुपयोगिता सेचनाय बभूव।[3] नदी-तटवासिनस्तु नदीमातृका बभूवुः।

अर्थशास्त्रानुसारं सर्वेषां ग्रामीणानां जनानां सहयोगेन सेचनार्थं सेतु-बन्धाः निर्मिताः। महाजलाशया उच्चतमधरातले निर्मापिताः। तेषां जलं निम्नस्थलेषु स्थितानां जलाशयानां पूरणाय प्रयुक्तम्। तत्कालीनशासकानां सेचनायोजनानां विषयेऽतिशया चिन्ता दृश्यते। सौराष्ट्रप्रदेशे गिरिनगरस्य सुदर्शनतडागस्येतिहासः मौर्ययुगाद् गुप्तयुगपर्यन्तं भारतीयानां राज्ञामस्यां दिशि प्रयत्नं निदर्शयति। चन्द्रगुप्ताशोकखारवेलरुद्रदामस्कन्दगुप्तवाक्पति-भोजकरिकालराजेन्द्रादीनां नृपतीनां सेचनकार्याणि प्रख्यातानि।

## कृषिसमृद्धिः

भारतस्य मूलत एव प्राप्तव्यानि कृषिफलानि—शालिः, इक्षुः, कार्पासश्च सन्ति। एषां कृषिः विदेशेषु भारतादेव प्रसृता। सिन्धुसभ्यतायुगे गोधूम-यवतिलादीनामपि कृषिरक्रियत। ऋग्वेदे यवशालिधान्यानामुल्लेखो वर्तते। परवर्तियुगे व्रीहियवमुद्गमाषतिलगोधूमनीवारप्रियङ्गुश्यामाकादीनामन्नाना-

---

१. मनुस्मृतौ ७.११०. सुश्रुते सूत्रस्थाने ४६.१.१७,२०

२. सर्वदर्शनसंग्रहे आर्हतदर्शनप्रकरणे।

३. कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहन्ति च।
भागशो विनिविष्टानि न कृषिर्देवमातृका॥ सभापर्वणि ५.८०

मुर्वारुकादीनां शाकानामुत्पत्तिः कृता। बहुविधाः शालयः—व्रीहि-महाव्रीहि-तण्डुल-शारिशाकाशु-प्लाशुकादय उत्पादिताः। अथर्ववेदानुसारमिक्षुकृते कृषिः कृता। तैलदान्नानां—तिलसर्षपैरण्डादीनां कृषिः सुप्रचलिता। शणं वन्यमेव श्रुतं वैदिकयुगे। सम्भवतः तस्यापि कृषिः कृता।

महाभारतयुगे धान्य-यव-तिल-माष कुलत्थ-सर्षप-चण-कलाप-मुद्ग-गोधूमातसीनां कृषिः कृता। तस्मिन्नेव युगेऽर्थशास्त्रानुसारं सीताध्यक्षः धान्य-पुष्पफलशाककन्दमूलफलवाल्लिक्यक्षौमकार्पासबीजानि यथाकालमगृह्णात्।

तत्र पूर्ववापास्तु—शालिव्रीहिकोद्रवतिलप्रियङ्गुदारकवराकाः।

मध्यवापाः—मुद्गमाषशिम्बिकादयः।

पश्चाद्वापाः—कुसुम्भमसूरकुलुत्थयवगोधूमकलायातसीसर्षपाः।

अर्थशास्त्रानुसारमिक्षवो हि बह्वाबाधा व्ययग्राहिणश्च। फेनाघातः प्रदेशः वल्लीफलानां कूपपर्यन्ताः शाकमूलानाम्, उपनदप्रदेशाः मृद्वीकेक्षूणां हरितप्रदेशाः हरितकानां शाकादीनां गन्धभैषज्योशीरह्रीवेरपिण्डालुका-दीनामुत्पादनाय वरेण्याः।

चरकसुश्रुतसंहितानुसारं परवर्तियुगे भारते शालीनामिक्षूणां च बहवः भेदाः विविधप्रदेशेषूत्पादिताः।[1] एषु ग्रन्थेषु ग्रामयोग्यानि कृषिफलान्यपि परिगणितानि दृश्यन्ते। तेषां संख्या तु शतपर्यन्तास्ति। आधुनिक-युगस्य सर्वाणि शाकमूलफलव्यंजनादीनि प्राचीनकालेऽपि उत्पादितानि। भारते केसरपिप्पलीलवंगैलाकुष्ठशृंगिवेरहरिद्रादीनां कृषिः समुन्नतासीत्। दक्षिणभारतादेषामुपस्कराणां—विशेषतः पिप्पलीनां निर्यातं रोमक-प्रदेशेषु विक्रयाय बभूव। व्यापारमाध्यमेन भारते बहुधनमागतम्।

## राजकीयसंरक्षणम्

कृषिफलेषु राज्ञो भागो बभूव। अतः कृषिमधिकृत्य नृपनीतिः सदैवा-

---

१. चरके सूत्रस्थाने २७. २३५-२३८ सुश्रुते सूत्रस्थाने ४५ अध्याये इक्षुवर्गे च।

धिकोत्पादनाय कृषकाणां प्रोत्साहनाय चाभवत्। महाभारतानुसारं राजा तु साधुपुरुषान् कृषिकर्मणि प्रवृत्तान् पश्येत्। तथा हि—

कच्चित् स्वनुष्ठिता तात वार्ता ते साधुभिर्जनैः।
वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते ॥ सभापर्वणि ५.८०

कृषिफलानि बहूनि कर्तुमर्थशास्त्रे राजकीययोजनाः प्रस्तुताः। तथा हि—अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत्। अकृषन्तोऽपहीनं दद्युः। सहोदकमाहार्योदकं वा सेतुं बन्धयेत्। अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्। नटनर्तकगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः। निराश्रयत्वाद् ग्रामाणां क्षेत्राभिरतत्वाच्च पुरुषाणां कोशविशिष्टद्रव्यधान्यरसवृद्धिर्भवति।

दण्डविष्टिकराबाधैः रक्षेदुपहतां कृषिम्।
स्तेनव्यालविषग्राहैः व्याधिभिश्च पशुव्रजान् ॥
एवं द्रव्यद्विपवनं सेतुबन्धमथाकरान्।
रक्षेत्पूर्वकृतान् राजा नवांश्चाभिप्रवर्तयेत् ॥[१]

दुर्लभबीजानि शुल्करहितान्येव राष्ट्रे आनेतव्यानीति राजनियमोऽभवत्।[२] कृषिविवादेषु निर्णयं स्वल्पव्ययसमयसाध्यं विधातुं निकटवर्तिनः सज्जना निर्णायका नियुक्ताः। व्यर्थविवादिनः कठोरदण्डार्हा मताः। राष्ट्रियकृषेर्हानिं कुर्वतां दण्डः विहितः। कृषिसम्बन्धिनीं हानिं निवारयितुं नियमाः कृताः। सेचनकर्मणि बाधाकारिणो दण्ड्या मताः। अपरेषां जलाशयानामुपयोगकारिणः तेषां जलाशयानां नवीकरणं कुर्युरिति विधानमासीत्।[३] कृषिरक्षणाय राजकीयनियमानां कठोरता स्मरणार्हा। तथाहि उदकधारणं सेतुं भिन्दतस्तत्रैवाप्सु निमज्जनम्।[४] विवीतक्षेत्रखलवेश्मदीपिकमग्निना दाहयेत्।[५]

---

१. अर्थशास्त्रे जनपदनिवेशप्रकरणात्। २. अर्थशास्त्रे शुल्काध्यक्षप्रकरणात्।
३. अर्थशास्त्रे धर्मस्थीये सीमाक्षेत्रविवादप्रकरणे।
४. अर्थशास्त्रे कण्टकशोधने चतुर्थेऽधिकरणे। मनुस्मृतौ ६.२७६।
५. तत्रैव

कृषिरक्षायै मनुकृता नियमाः सुव्यवस्थिता दृश्यन्ते। तथा हि—

यस्तु पूर्वनिविष्टस्य तडागस्योदकं हरेत्।
आगमं वाप्यपां भिद्यात्स दाप्यः पूर्वसाहसम्॥ ६.२८१

गृहं तडागमारामं क्षेत्रं वा भीषया हरन्।
शतानि पंच दण्ड्यः स्याद‌ज्ञानाद् द्विशतो दमः॥ ८.२६४

क्षेत्रियस्यात्यये दण्डो भागादशगुणो भवेत्।
ततोऽर्धदण्डो भृत्यानामज्ञानात् क्षेत्रिकस्य तु॥ ८.२४३

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च।
अन्येष्वपरिपूतेषु दण्डः स्यात्पंचकृष्णलः॥ ८.३३०

वैश्यानां कृषिकर्मणि नियोजनमपि राजधर्मः। तथा हि—

वाणिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च॥ ८.४१०

नवक्षेत्राणां स्वामित्वं तु मृगबाणन्यायेन समीहितं मनुना। तथा हि—

पृथोरपीमां पृथिवीं भार्यां पूर्वविदो विदुः।
स्थाणुच्छेदस्य केदारमाहुः शल्यवतो मृगम्॥ ६.४४

याज्ञवल्क्यानुसारमलसाः कृषका दण्डनीयाः। राजा तेषां भूमिं कार्यक्षमकृषकेभ्यः दद्यात्।[१] पौराणिकयुगेऽपि

तथा भूपोऽप्यतन्द्रालुर्भक्तग्रामेषु कारयेत्।
कृषिं कर्मान्तिकैर्बीजप्रदानाद्यैरुपक्रमैः॥
देशेऽपि कारयेत् कृत्स्ने कृषिं सम्यक्कृषीवलैः॥

महापुराणे ४२.१७६-१७७

## धार्मिकनियोजनम्

कृषेः समृद्धिरधिकांशतो दैवाधीना भवति। देवतानां सहायता कृषिकर्मणि सदैवापेक्षिता मता। सिन्धुसभ्यतायुगे शस्यमालिनीदेव्याः पूजा कृता। वैदिकयुगे मन्त्रप्रयोगैः यज्ञादिभिः कर्मकाण्डैश्च यथाकालं वृष्टिप्रवर्तनं कृषिरक्षणं फलबाहुल्यं च सुकरं मतम्। आग्रयणयज्ञे

१. याज्ञवल्क्ये २.१५८

गृहपतिर्नवान्नानि देवेभ्यः समर्प्य स्वयं भुक्तवान्।[१] जलवर्षणाय 'कारीरी' इति ख्यातः यज्ञः कृतः।

धर्मशास्त्रेषु तडागनिर्माणस्य पुण्यात्मकः प्रभावो निदर्शितः। एभिः तडागैः सेचनकर्म सरलमजायत। जलदानं सर्वोच्चं प्रतिष्ठितम्।[२]

बलीवर्दानां सुखकर्षणं धर्म्यं मतम्।[३] विधानमासीत्—

हलमष्टगवं धर्म्यं षड्गवं मध्यमं स्मृतम्।
चतुर्गवं नृशंसानां द्विगवं वृषघातिनाम्॥

आपस्तम्बस्मृतौ २२-२३

स्वस्थबलीवर्दानां कर्षणं ब्राह्मणेभ्योऽपि पौराणिकयुगे समीचीनं विहितम्। बलीवर्देभ्योऽवकाशदिवसाः—अमावस्यासंक्रान्तिपूर्णिमादयो निर्धारिताः।[४] परवर्तियुगे बलीवर्दानामलङ्करणं पूजनं हलविधानं हलयोजनमुहूर्तं कर्षणं वपनं क्षेत्रचयनं चाधिकृत्य धार्मिकविधीनामायोजनं कृतम्।[५]

## उपवनम्

पुष्पफलपत्रादीनामुपयोगिताः प्राङ् निदर्शिता उपभोग्यप्रकरणे। वनानामधिकोपयोगिवृक्षलतादीनामाकर्षणं स्वाभाविकम्। तेषां कृत्रिमोपायैः सुसंवर्धनमुपवनविधानस्य प्रयोजनम्।

### लोकप्रियता

ऋग्वेदे फलवृक्षाणां मनोहारित्वं प्रतिष्ठितं दृश्यते। तथा हि—

एवा ह्यस्य सूनृता विरप्शी गोमती मही पक्वा शाखा न दाशुषे॥[६]

इयं शाखिनां प्रशस्तिः सादृश्येन समीहिता। वैदिकयुगे आरण्यकानां मुनीनां वनप्रवृत्तिः प्रायश उपवनानां संग्रहणाय बभूव। मुनयस्ते

---

१. ऋग्वेदे ४.५७.६-८; शुक्लयजुर्वेदे १२.७०,७२; अथर्ववेदे ३.१७;६.१४२; ६.७९; आपस्तम्बश्रौतसूत्रे २.९.१

२. अनुशासनपर्वणि ५८ अध्यायतः ३. रामायणेऽयोध्याकाण्डे ६४ सर्गतः

४. पद्मपुराणे सृष्टिखण्डे ४७. १११-१२० ५. पराशरस्मृतौ ३ अध्याये

६. ऋग्वेदे १.८.८

सुवृत्ताणामभ्युदयाय निकृष्टवृत्ताणां दूरीकरणाय च स्वभावतः सचेष्टा बभूवुः। इदमुपवनविधानं प्रारब्धम्।

परवर्तियुगे रामायणमहाभारतादिषु जैनबौद्धग्रन्थादिषु चोपवनानां सर्वत्र प्रतिष्ठा दृश्यते। मुनीनामाश्रमेषु भिक्षुकाणां विहारेषु नगरीणामञ्चलेषु प्रासादानां परिधिषु च सर्वत्रोपवनं सुस्निग्धं विराजितम्। अमरकोशानुसारमपि सर्वत्रोपवनप्रसारः। तथा हि—

गृहारामास्तु निष्कुटाः।
आरामः स्यादुपवनं कृत्रिमं वनमेव यत्।
अमात्यगणिकागेहोपवने वृक्षवाटिका॥
पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्।
स्यादेतदेव प्रमदवनमन्तःपुरोचितम्॥

उपवनानां क्रीडार्थमुपयोगः प्राचीनकालतो दृश्यते।[१] उपवनेषु मध्ये निर्मिता गृहा आरामागारा इति प्रसिद्धाः। अयोध्याकपिलवस्तूज्जयिनीषूपवनानां शतान्यासन्। उपवनेषु लतागृहं शैलगृहं जलक्रीडापुष्करिणी च बभूवुः। बहवो माङ्गलिकवृक्षा आरोपिताः। प्रायो वसन्तोत्सवेषु प्रमदवने आम्रमञ्जरी-कुरवकपुष्पस्तबकादीनां मनोहारित्वं सार्वजनिकप्रमोदाय बभूव। उपवनं राजदम्पतीनां विहारस्थली बभूव। सर्वेषु समृद्धिशालिनां गृहायतनेषु प्रतिष्ठितः मदनवृक्षः कामदेवपूजार्थमभवत्। भवनसहकारशाखासु शुकपंजरावस्थानमभूत्। वृक्षास्तु कुटुम्बसदस्या इव सम्मानिताः। वृक्षलतानां विवाहोऽपि रचितः सर्वजनप्रमोदाय।[२]

भारतीयकाव्येषु सौन्दर्यशालिनामुपवनानां चारुता प्रायशो निदर्शिता। तत्र बालाः पयोघटेन शिशुवृक्षाणां संपोषणं कुर्वन्ति स्म। तथा हि—

अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत्।
गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति॥

कुमारसंभवे ५·१४

---

१. महाभारते वनपर्वणि २३६.१८

२. कादम्बर्यां ३१६ पृष्ठे। अभिज्ञानशाकुन्तले चतुर्थाङ्के च।

पयोघटैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्यसि त्वम् ॥

रघुवंशे १४.७८

पश्यतैतान् महाभागान् परार्थैकान्तजीवितान् ।
वातवर्षातपहिमान् सहन्तो वारयन्ति नः ॥
अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् ।
सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ॥
पत्र-पुष्प-फल-च्छाया-मूल-वल्कल-दारुभिः ।
गन्धनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते ॥

भागवते १०.२२.३२-३४

उपवनेषु मानवानां चित्तवृत्तय उल्लसिताः । सुखे दुःखे वा तेषूपवनेषु मानवानां समवेदनाप्रतीतिः । लतावृक्षादीनां पुष्पैः शरीरालङ्करणं भवति । देवपूजार्थं पुष्पफलादीनामुपयोगिता महती दृश्यते । फलदानं तु साधारण-धर्मः । उत्सवावसरे पुष्पगृहा विरचिताः ।

**वृक्षविज्ञानम्**

वृक्षविज्ञानेनोपवनानां समृद्धिर्विस्मयकारिणी बभूव । तथा हि— 'आम्रफलानि घटाकाराणि सम्भावितानि । तृतीये वर्षे आम्रवृक्षाः फलदा बभूवुः । पुष्पफलादीनामकाले प्रसवः सम्भावितः ।'[1] आरामिका वृक्षविज्ञाने तेषां संवर्धने च विशारदा बभूवुः । शुष्यमाणानां वृक्षाणामायुःसंवर्धनं सर्वौषधयोगेन कृतम् ।[2]

अर्थशास्त्रानुसारं वृक्षायुर्वेदनिष्णाताः जनाः सीताध्यक्षपदे नियोजिताः । वृक्षारोपणात् प्राग् गर्ते प्रदाह्य गोऽस्थिशकृद्भिः काले दौहृदं च । प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण वापयेत् ।[3]

वराहमिहिरस्य बृहत्संहितायां वृक्षायुर्वेदस्य गुप्तयुगपर्यन्तावधिः

१. दधिवाहनजातके १८६
२. छान्दोग्ये ६.३.७–१३;
३. पद्मपुराणे सृष्टिखण्डे २८.४

प्रगतिर्निदशिता। तदनुसारं वृक्षाणां रोपणं कलमपद्धत्याऽक्रियत। विभिन्नर्तौ वृक्षकाणां सेचनकालस्य निर्धारणं कृतम्। वृक्षाणां रोगाणां लक्षणानि तेषां निदानानि च कृतानि। शल्यचिकित्साऽपि वृक्षाणां प्रचलितासीत्। वृक्षाणां पूर्णसंवर्धनायोत्तमवातावरणस्याकलनं विहितम्। वृक्षाणां शीघ्रसंवर्धनाय शतविधानि बल्यानि रचितानि। कलात्मकविधिना लघुदीर्घमहावृक्षलतादीनामुपवने विन्यासः कृतः।[1]

**उपवनसमृद्धिः**

वृक्षारोपणस्य बहुविधानि प्रयोजनानि प्राचीनकालतो दृश्यन्ते। तथाहि छायार्थं शरणार्थं वा फलार्थं पुष्पार्थं लतापत्रादीनां सौन्दर्यार्थं च। छायार्थं शरणार्थं वा वटवृक्षाणां रोपणमक्रियत। तेषां शरणे पंचशतजना अपि शरणं प्राप्नुवन्ति स्म।[2]

राजकीयोद्यानस्य संरक्षणाय द्वाराट्टालिकाभिः समन्विताः प्राकाराः रचिताः। उद्यानस्थकेन्द्रभागे पुष्करिण्यां कमलशोभाऽवर्तत। तत्रैवारामागारो निर्मितः।[3]

नगराणामुपवनेषु कर्णिकार-खर्जूर-प्रियाल-मुचुलिन्द-कुटज-केतक-प्रियङ्गु-नीप-सप्तच्छद-कोविदारासन-करवीरादीनां शोभासीत्। एषां वृक्षाणां पुष्पप्रदत्वमेव विशिष्टम्। वृक्षाणामङ्काश्रयप्रणयिन्यो लताः संवर्धिताः।

आम्रवृक्षाणां भारते सदैव प्रथमस्थानमुपवनेषु दृश्यते।[4] बहुविधाः फलपुष्पप्रदाः वृक्षाः चरकसुश्रुतसंहितयोः परिगणिताः।[5] ह्वेनसांगेन भारतस्य विविधप्रदेशानां विशिष्टफलपुष्पादीनां वृक्षाणां वर्णनं कृतम्।[6]

**राजकीय-संरक्षणम्**

उपवनारोपणविषये राज्ञामभिरुचिरतिशया दृश्यते। वैदेशिकवृक्षाणा-

---

१. अस्य विषयस्य विवरणं बृहत्संहितायामग्निपुराणे च द्रष्टव्यम्। आनुषंगिकरूपेण नैषधीयचरिते १६.८२;१.८२; रत्नावल्यां ३.८ च द्रष्टव्यस्थलानि।

२. भरुजातके २१३

३. धम्मद्धजजातके २२०

४. बृहदारण्यके ४.३.३६

५. फलवर्ग-पुष्पवर्गयोः

६. ह्वेनसांगे वाटर्सकृते प्रथमे भागे पृ० ३०१ द्वितीये भागे पृ० ६३

मायातस्य व्यवस्था राजभिः कृता। तेषामुपवने प्रथमं संवर्धिता वैदेशिकवृक्षाः साधारणनागरिकाणामुपवनेषु पश्चात् प्रत्यानीताः। चन्द्रगुप्ताशोकखारवेलादीनां नृपाणामुपवनरुचिः प्रसिद्धा। अर्थशास्त्रानुसारं राजकीयशासनमनुसृत्य निर्जलप्रदेशेषु कूपकासारोत्सा निर्मिताः। तत्र पुष्पफलादीनामुपवनानि च कृतानि।

उपवनवृक्षाणां हानिकरणे घोरदण्डव्यवस्थासीत्। तथा हि—

वनस्पतीनां सर्वेषामुपभोगो यथा यथा।
तथा तथा दमः कार्यो हिंसायामिति धारणा॥ मनु० ८.२८५

राजशासनानुसारं सीमाप्रदर्शिनो वृक्षाः—वटकिंशुकशाल्मलिसालतालादयः ग्रामेषु ग्रामेषु रोपिताः।

## धार्मिकनियोजनम्

धार्मिकनियोजनेन प्रधानतो वृक्षाणां पुण्यात्मकप्रभावोऽभिव्यक्तः। तेषां सुरक्षायै च योजना विहिताः। तथा हि—'वृक्षारोपणेन पुरुषस्य कीर्तिर्वर्धते; मरणानन्तरं शुभं कल्प्यते। वृक्षारोपणेन पूर्वापरवंशजा उद्धृताः। पुत्र एव वृक्षो जायते आरोपकारिणः पुरुषस्य। देवगन्धर्वमानवाः सर्वे वृक्षाश्रिताः। वृक्षाः पुत्रवत् पाल्याः'।[१] वृक्षाणां हानिकर्तुः प्रायश्चित्तविधानं कृतम्। तथा हि—

तिर्यग्योनिवधं कृत्वा द्रुमांश्छित्त्वेतरान्बहून्।
त्रिरात्रं वायुभक्षः स्यात्कर्म च प्रथयन्नरः॥ शान्ति० ३५-३४

वृक्षारोहणमशिष्टमेव मतम्।[२] राजभ्योऽपि वृक्षाणां नमस्कारः समीचीनः मतः।[३]

प्रायश्चित्तविधानेन वृक्षारोपणस्य व्यवस्था कृता। तथा हि—प्रतिमाभंजनकर्ता त्रिवर्षपर्यन्तं पिप्पलवृक्षसेचनं करोतु। स्त्रीहन्ता दशपिप्पलवृक्षारोपणं करोतु।[४] वृक्षहत्या तु प्रायश्चित्तविधानेन गोहत्यासमा मता।

---

१. महाभारतेऽनुशासनपर्वणि ५८. २३-३१
२. चरके सूत्रस्थाने ८.२०
३. सभापर्वणि ५.१०३
४. शातातपस्मृतौ ३.१८; २.३७

पिण्डदानसामर्थ्यमपि वृक्षाणां मतम्। पिप्पलवृक्षस्तु सहस्रपुत्रसमः मतः। विविधवृक्षाणामारोपणस्य विविधानि पुण्यफलानि सम्मितानि। यथा—चन्दनपनसवृक्षौ क्रमशः पुण्यलक्ष्मीप्रदौ। चम्पकस्तु सौभाग्यदः, बकुलेन कुलवृद्धिर्जायते।[१] देवानां परितुष्टिर्विविधपुष्पैर्मता।[२]

## पशुपालनम्

'भारतीया कृषिः पशुपालनमपेक्षते' इति स्पष्टम्। प्राचीनयुगे जनसंख्यायाः स्वल्पत्वे सति वनप्रदेशे गोचरेषु च घासस्याधिक्यमभवत् सवत्र। जलं सर्वत्र प्राप्यमेवासीत्। धार्मिकदृष्ट्याऽपि प्राचीनयुगे पशूनां विशेषमहत्त्वमासीत्।

### पशूनां लोकप्रियता

सिन्धुसभ्यतायुगीनबलीवर्दानां कतिपयप्रतिकृतयः प्राप्यन्ते। तासां दर्शनेन स्पष्टं प्रतिभाति यत् तत्रत्यजनानां पशुपालनं प्रति विशेषाभिरुचिरासीत्, यतो बलीवर्दास्तेषामतिशयपुष्टतरा दृश्यन्ते। वैदिकयुगीना गोपालनं प्रति रुचिरनेन सूक्तेन प्रमाणिता—

आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे।
प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीमुषसो दुहानाः॥
न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति।
देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह॥
गावोभगो गाव इन्द्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः।
इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम्॥
यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम्।
भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु॥
प्रजावतीः सूयवसं रिशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः।
मा वः स्तेन ईशत माघशंसः परि वो हेती रुद्रस्य वृज्याः॥ ऋ० ६.२८

---

१. पद्मपुराणे सृष्टिखण्डे २८ अध्यायतः
२. अग्निपुराणे २०२,२०७ अध्याययोः

गोभिरश्वैश्च वैदिकानामैश्वर्यकामनाऽभूत्।[१] तथा हि गा अधिकृत्य प्रोक्तम्—

शिवो वो गोष्ठो भवतु शारिशाकेव पुष्यत।
इहैवोत प्रजायध्वं मया वः सं सृजामसि॥
मया गावो गोपतिना सचध्वमयं वो गोष्ठ इह पोषयिष्णुः।
रायस्पोषेण बहुला भवन्तीर्जीवाजीवन्तीरुप वः सदेम॥

अथर्ववेदे ३.१४.५.६

अश्वास्तु मुक्तास्वर्णादिभिरलङ्कृताः।[२] गवां स्थानं तु गृहपतेरायतने कृतम्। दर्शपूर्णमासयज्ञे यजमानोऽकामयत—पशवस्तु मया प्रसन्ना भवन्तु। अनेन यज्ञेनाहं सन्तानैः पशुभिश्च सह पवित्रो भूयासम्।

अश्वस्तु वैदिकयुगस्य प्रकृष्टतमो बलिष्ठः शक्तिसम्पन्नो महावेगः पशुः मतः। तस्य मूल्यं सहस्रगवां समं बभूव।[३] पशून् प्रति वैदिकानामुपनिषद्युगीना धारणा प्रशस्या वर्तते। तथा हि—यशोऽधिष्ठानं पशवो मताः।[४] पशुभिर्महत्ता कल्पिता। पशुमान् भवितुमेव पशुषु पंचविधं सामोपासनं निर्णीतम्। अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम्।[५]

रामायणमहाभारतयुगे पशून्प्रति जनरुचिः संवर्धिता दृश्यते। गोषु स्वभावतः सम्पन्नता सम्मता।[६] राजानो राजकुमारास्तु स्वहस्तेन गवामपरेषां च प्रियपशूनां सेवां कर्त्तुमैच्छन्।[७] नकुलसहदेवौ पशुसेवाविशारदौ बभूवतुः।[८] गवां पयोऽमृतमेव मतम्। गौस्तु प्रतिष्ठाकामाय श्रेष्ठा प्रसिद्धा।[९] हस्तिनोऽश्वाश्चालंकृताः। उपहारयोग्येभ्यस्तेभ्यः कांचनमालाऽलंकरणाय

---

१. ऋग्वेदे १.२६, १०.६८.१२ अथर्ववेदे ३.१२ २. ऋग्वेदे १०.६८.११ ३. शतपथब्राह्मणे १३.१.२ ५–८; १३.३.३.१; १३.४.२.१ ४. तैत्तिरीयोपनिषदि भृगुवल्ली १०.३ ५. छान्दोग्ये २.१७.२; २.६.२ ६. रामायणे युद्धकाण्डे १६ ६ ७. वनपर्वणि २३८.२०; २३६.४-६ ८. वनपर्वणि ६८.२-६; ७१.१२-१८ विराटपर्वणि ३.३ ९. वनपर्वणि यक्ष-युधिष्ठिरसंवादे।

बभूव। राजभ्यस्तेषामुपहारः प्रकल्पितः।[१] नगरस्य शोभा हस्तिरथाश्वसंकुलत्वेन मता। गोपास्तु राज्ञां स्नेहास्पदं धार्मिकदृष्ट्या मताः।[२] अर्थशास्त्रानुसारं पशुपालनविधिः पशूनामतिशयलोकप्रियत्वं समर्थयति।[३]

परवर्तियुगे कालिदासेन प्रतिष्ठितं दिलीपस्य गोपालनव्रतं सुप्रसिद्धम्, भागवते निदर्शितं कृष्णस्य गोपालनचरितं स्पृहणीयं दृश्यते। पशूनां कृते महोत्सवानामायोजनं कृतम्। कृष्णस्य गोवर्धनपूजा गिरियज्ञश्च भारतीयसंस्कृतौ प्रतिष्ठितौ। अन्येपूत्सवेषु पशवो गृहसदस्या इवालंकृताः। तथा हि कृष्णजन्मावसरे—

गावो वृषा वत्सतरा हरिद्रातैलरूषिताः।
विचित्रधातुबर्हस्रग्वस्त्रकांचनमालिनः ।। भागवते १०.५.७

भारतीयकाव्येनापि पशूनां लोकप्रियत्वं प्रसाधितम्। वैदिकयुगे गौर्माता तस्या वत्सः पुत्र एव मतः। किमतोऽप्यधिकम् ?

अनड्वान् दाधार पृथिवीमुतद्याम्,
अनड्वान् दाधारोर्वन्तरिक्षम्।
अनड्वान् दाधार प्रदिशः षडुर्वीः,
अनड्वान् विश्वं भुवनमाविवेश ।। अथर्ववेद ४.११.१

बौद्धसंस्कृतौ गावः कौटुम्बिकसदस्या इव मताः। गवामार्जवं स्निग्धत्वं च गौतमेन सुष्ठु प्रतिपादितम्।[४] गोपवधूनां दधिमन्थनं कस्य हृदयं न हरतीति पुराणवचनम्।[५] भागवतवचनं गोपालमधिकृत्य सुप्रियमेव—

गावश्च कृष्णमुखनिगतवेणुगीत
पीयूषमुत्तंभितकर्णपुटैः पिबन्त्यः।
शावाः स्नुतस्तनपयः कवला स्म तस्थु-
र्गोविन्दमात्मनि दृशाश्रुकलाः स्पृशन्त्यः ।। १०.२१.१३

---

१. सभापर्वणि ५२ अध्यायतः। रामायणेऽयोध्याकाण्डे ७०.२०-२३ हस्तिनां स्वर्णालङ्कारप्रतिष्ठा वैदिकयुगेऽपि प्रसिद्धा। ऐतरेयब्राह्मणे ८.२३.३
२. रामायणे अयोध्याकाण्डे १०.४०, ४६, ४७
३. अश्वाध्यक्षप्रकरणात्
४. सूत्तनिपाते ब्राह्मणधम्मिक सुत्ते
५. महापुराणे २८.३२-३६

## पशुसमृद्धिः

सिन्धुसभ्यतायुगात् भारते सदैव हस्तिगोमहिषाजाविगर्दभोष्ट्रशूकरादीनां परिपालनं विविधप्रदेशेषु बभूव। वैदिकार्याः गोबलीवर्दाश्वानां परिपालनं विशेषरूपेण कृतवन्तः। एषां पशूनां संख्या समृद्धिशालिनां स्वामित्वे लक्षावधिरपि बभूव।[१] अवीनां पालनमूर्णायै कृतम्। गर्दभा भारितमाः भारहाराः सन्तः सर्वेषां कृते उपयोगिनः।

रामायणानुसारं राज्ञां कृते हस्तिगोरासभाश्वानां सहस्राण्यपि पालितानि। हस्तिनां रक्षणं नागवनेऽभूत्।[२] वनवासिनामाचार्याणां सहस्राणि गवां बभूवुः। महाभारतानुसारं कौरवपाण्डवानामनेकलक्षगावो बभूवुः।[३] युधिष्ठिरस्य कृते पशूनां पालनं सिन्धुप्रदेशात् पर्णाशापर्यन्तमक्रियत।[४] ऐतिहासिकयुगेऽपि राज्ञां लक्षाधिकगवामुल्लेखाः दृश्यन्ते। हर्षचरितानुसारं महाराजो हर्षोऽर्बुदशो गवां दानमकरोत्।[५] उषावदातेन त्रिलक्षगवां दानमक्रियत।[६]

अर्थशास्त्रानुसारं राज्ञां कृते पशुपालनाय—अश्वाध्यक्षः, गोऽध्यक्षः, हस्त्यध्यक्षश्च नियुक्ताः। गोमहिषीखराजोष्ट्रवराहादीनां पालनं गोऽध्यक्षेण कृतम्[७]। अश्वा राजकीयप्रयोजनाय बहुभ्यो देशेभ्यः कम्बोजसिन्धुवनायुसौवीरारट्टवाह्लीकपापेयतैतलेभ्य आनीय पालिताः।

राज्ञां सेनासु हस्त्यश्वबलीवर्दादीनां संख्याऽगणितैव। तथा हि युधिष्ठिरसेनापरिमाणं द्रष्टव्यम्—

अयुतं त्रीणि पद्मानि गजारोहाः ससादिनः।
रथानामर्बुदं चापि पादाता बहवस्तथा॥ सभापर्वणि ५२.४४

---

१. ऋग्वेदे ५.३०.१२–१५;१.२६; ऐतरेयब्राह्मणे ८.४.२२,२३
२. अयोध्याकाण्डे १००.५० ३. विराटपर्वणि १०.१०, वनपर्वणि ३९.४
४. सभापर्वणि ६५.६ ५. हर्षचरिते सप्तमोच्छ्वासे
६. नासिके गुहालेखे सप्तदशे ७. गोऽध्यक्षप्रकरणात्

# पशुपालनविधिः

वैदिकयुगे गोचारणाय प्रदेशः गव्यूतिः गव्यं वा ख्यातः। तत्र ग्रामीणाः पशवः सामूहिकरूपेण समागताः। गोस्वामिनां परिचयाय गावः विविधाङ्कैः मुद्रिताः। प्रायः कर्णभागे लक्षणानि कृतानि। तथा हि अष्टकर्णी-स्थूणाकर्णी-दात्रकर्णी-कर्करिकर्णी-छिद्रकर्णी-गावो बभूवुः। चारणाय गावः प्रातः मध्याह्ने च विमुक्ताः। गवां रक्षणाय तेषां समूहे बलिष्ठो वृषभो रक्षितः।

कतिपयगोपालाः पशुसमूहं दूरस्थेषु वनप्रदेशेषु चारयितुं नीतवन्तः। तेषां स्वामिगृहं प्रत्यागमनमपि कदाचित् वर्षान्ते एव बभूव। तथा हि सत्यकाम आचार्यस्य चतुःशतं गाः त्रिवर्षावधि दूरस्थप्रदेशेऽचारयत्। ततः स्वामिगृहे आगमनकाले त्रीणि दिनानि मार्गे व्यतीतानि[१]।

बौद्धजातकानुसारं गोपालकाः श्रेष्ठिनां गाः वनेषु नीत्वा तत्रैव गोपल्लिकेषु निवसन्ति स्म। यथाकालं च तेषां गृहे घृतं दुग्धं चानयन्ति स्म।[२] सामान्यतः प्रत्येकस्य ग्रामस्य गोचरभूमिः बभूव। तत्र ग्रामीणाः पशवश्चरन्ति स्म। गोचरप्रदेशस्तु सार्वजनिकसम्पत्तिरासीत्।

महाभारतानुसारं गोपसमूहा घोषा इति ख्याताः। घोषाः गोचरप्रदेशेषु निवासायाल्पकालिकवसतीः कृतवन्तः। राजानो राजकुमाराश्च घोषाणां निरीक्षणाय तत्रागताः। तेषामध्यक्षत्वे पशूनां परिगणनं वत्सानां मुद्रणं चाक्रियत।[३]

अर्थशास्त्रानुसारं प्रतिगोसमूहं गोपालकः दोहकः मन्थकः लुब्धकश्च नियुक्ताः। सर्वे ते वेतनभोगिनो बभूवुः। स्वामिने दातव्या घृतदुग्धादीनां मात्रा नियतासीत्। मृतपशूनां चर्म स्वामिने प्रदत्तम्। चारणीय-पशूनां वर्गीकरणं वैज्ञानिकमासीत्। तथा हि—वत्सा वत्सतरा दम्या वहिनो वृषा उक्षाणश्च पुङ्गवाः, युगवाहनशकटवहा वृषभाः सूना

१. छान्दोग्ये ४.४ २. विस्सासभोजनजातके ९३

३. महाभारते वनपर्वणि २३८-२३९ अध्यायतः

महिषा पृष्ठस्कन्धवाहिनश्च महिषाः वत्सिका वत्सतरी प्रष्ठौही गर्भिणी धेनुश्चाप्रजाता वन्ध्याश्च गावो महिष्यश्च, मासद्विमासजातास्तासामुपजा वत्सा वत्सिकाश्च। मासद्विमासजातानङ्कयेत्। मासद्विमासपर्युषितमङ्कयेत्। अङ्कचिह्नं वर्णं शृङ्गान्तरं च लक्षणमेवमुपजा निबन्धयेदिति व्रजपर्यग्रम्।[१]

पशूनां सुरक्षायै गोपैः सुव्यवस्था कृता। तद्यथा—गोचरप्रदेशात् हिंसकजन्तूनां निःसारणम्, भयैकप्रवणानां पशूनां गले घण्टा-बन्धनं तीर्थावतरणावधानम्, शीतातपवर्षादिभ्यः संरक्षणं च समीहितानि।

पशूनां भोजनं तेषां जातिकर्मादि परीक्ष्य निर्धारितम्। तथा हि—बलीवर्दानां नस्याश्वभद्रगतिवाहिनां यवसस्यार्धभारस्तृणस्य द्विगुणं तुलाघाणपिण्याकस्य दशाढकं कणकुण्डकस्य पंचपलिकं मुखलवणं तैलकुडुबो नस्यं प्रस्थः पानं मांसतुला, दध्नश्चाढकं यवद्रोणं माषाणां वा पुलाकः क्षीरद्रोणमर्धाढकं वा सुरायाः स्नेहप्रस्थः क्षारदशफलं शृङ्गिवेरफलं च प्रतिपानम्। पादोनमश्वतरगो-खराणां द्विगुणं महिषोष्ट्राणां कर्मकरबलीवर्दानां पायनार्थानां च। धेनूनां कर्मकालतः फलतश्च विधानम्। सर्वेषां तृणोदकप्रकाम्यम्।[२]

अश्वानां परिपालनविधिः विशेषावधानपरः दृश्यते। तेषां निवासाय शालाप्रबन्धोऽर्थशास्त्रानुसारं निदर्शनीयमेव। तथा हि—अश्वविभवेनायताम्, अश्वायामद्विगुणविस्तारां चतुर्द्वारोपावर्तनमध्यां सप्रग्रीवां प्रद्वारासनफलकयुक्तां वानरमयूरपृषतनकुलचकोरशुकशारिकाभिः आकीर्णां शालां निवेशयेत्। अश्वशावकजन्मकाले वडवायै त्रिरात्रं घृतप्रस्थपानं विहितम्। अतः ऊर्ध्वं सक्तुप्रस्थः स्नेहभैषज्यप्रतिपानं दशरात्रम्। दशरात्रादूर्ध्वं किशोरस्य घृतचतुर्भागः सक्तुकुडवः। क्षीरप्रस्थश्चाहार आषण्मासादिति। अश्वानां नित्यभोजने घृततैलमांसदुग्धगुडसुरादीनां समन्वयः बभूव।[३]

---

(१-२) अर्थशास्त्रे गोऽध्यक्षप्रकरणात्। ३. अर्थशास्त्रे ऽश्वाध्यक्षप्रकरणात्।

अश्वानां शारीरिकविकासाय तेषां शिक्षणमपेक्षितं मतम् । साधारणोपयोगाय वल्गनलंघनधोरणनारोष्ट्रादीनां शिक्षा दत्ता । युद्धार्थमश्वानां शिक्षकाः सारथय एव नियुक्ताः ।

अश्वानां चिकित्सकाः तेषामारोग्याय ऋत्वनुकूलाहाराय च सचेष्टा अभवन् । सूत्रग्राहकोऽश्वबन्धको यावसिको विधापाचकः स्थानपालकः केशकारो जाङ्गलीविच्चापरे सेवका अश्वानां सुखार्थं नियुक्ताः । किमधिकम्—

द्विरह्नः स्नानमश्वानां गन्धमाल्यं च दापयेत् ।
कृष्णसन्धिषु भूतेज्याः शुक्लेषु स्वस्तिवाचनम् ॥[१]

अर्थशास्त्रानुसारं 'हस्त्यध्यक्षो हस्तिवनरक्षां दम्यकर्मक्षान्तानां हस्तिहस्तिनीकलभानां शालास्थानशय्याकर्मविधायवसप्रमाणं कर्मस्वायोगं बन्धनोपकरणं सांग्रामिकमलंकारं चिकित्सकानीकस्थोपस्थयुकवर्गं चानुतिष्ठेत् । हस्तिनां शिक्षणं भोजनादिकं च विशिष्टमेवासीत् । युद्धशिक्षया हस्तिनां योग्यता संवर्धिता । शिक्षिता हस्तिनः भित्ति-स्तम्भ-द्वार-तोरणादीनां भंजने दक्षा बभूवुः । भारतीयानां हस्तिशिक्षा विदेशेऽपि सम्मानिता ।[२] अग्निपुराणे गजचिकित्साश्वचिकित्साप्रकरणे स्तः । तत्र पशूनां रोगाणामुपचारविधिः वैज्ञानिकपद्धतिमनुसृत्य पर्यालोचितः ।

## धार्मिकनियोजनम्

वैदिकधर्मानुसारं पूषा पशूनां संरक्षको देवः । पशुदानस्य पुण्यात्मकप्रभावस्याकलनमस्मिन् युगे दृश्यते । पशूनां संवर्धनं स्वास्थ्यं वा वैदिक-

---

१. अर्थशास्त्रे अश्वाध्यक्षप्रकरणात्  २. The proficiency of the Indians in this art (management of elephants) early attracted the attention of Alexander's successors; and natives of India were so long exclusively employed in this service that the term Indian was applied to every elephant driver to whatever country he might belong. Wilson Theatre of the Hindus p. 92.
इलियनमहोदयस्य लेखानुसारं शिक्षिता हस्तिनः चन्द्रगुप्तस्याङ्गरक्षका नियुक्ताः ।

मन्त्राणां यज्ञानां च माध्यमेनाभीष्टं बभूव। पशवस्तु धार्मिकदृष्टिकोणे-नापि समृद्धिसूचका मताः। गवां नामकीर्तनं नामश्रवणं दानं दर्शनं च महाभारतानुसारं प्रशस्यम्। ततः पुरुषस्य कल्याणोत्पत्तिरभिमता। गावस्तु यज्ञस्य नेत्रं मुखं वा मताः। स्वर्गसोपानमेव गावः।[1]

गवां मांगल्यं नाट्यशास्त्रेऽपि सम्मतम्। तथा हि—

सर्वलक्षणसम्पन्ने कृते नाट्यगृहे शुभे।
गावो वसेयुः सप्ताहं सह जप्यपरैर्द्विजैः॥ ३.१

मनुना पशूनां कल्याणार्थं योजनाः कृताः। तदनुसारं तु—

नाभिनीतैर्व्रजेद् धुर्यैर्नच क्षुद्व्याधिपीडितैः।
न भिन्नशृङ्गाक्षिखुरैर्न बालधिविरूपितैः॥ ४. ६७

बलीवर्दानां प्रतोदनं दोषावहं मतम्। गवां पृष्ठे यानं विगर्हितं प्रसिद्धम्।[2]

पूर्वजानां कल्याणार्थं पौराणिकयुगे वृषभोत्सर्जनं श्रेष्ठकर्म धृतम्। गोदानं तु पृथ्वीदानसमं प्रसिद्धम्। सवत्सगोदानेन ब्रह्मलोकः सुलभो मतः। गोदानं कुर्वतो जनस्य सेविकाः ब्रह्मलोके चन्द्रवदन्यः, स्वर्णवर्णाः नितम्बिन्यः, तन्व्यः रमण्यश्च भवन्तीति धारणा। नीलवृषभोत्सर्गेण पितॄणां परितृप्तिः मता। ग्रामेषु मंगलवृषभस्य पूजा कृता। तस्य निधने ग्रामोऽपि शोकनिमग्नोऽभूत्।

## राजनीतिकसंरक्षणम्

महाराजाशोकेन पशूनां हिंसा निषेधिता। तेन तेषां कृते चिकित्सालयाः प्रतिष्ठापिताः। पशूनां छायार्थं राजमार्गमभितः वृक्षा आरोपिताश्च। यदि कोऽपि जनः सदोषमपि पशुमदण्डयत् स तावन्मात्रं दण्डं स्वयमेव भोक्तुं निर्णीतः। पशुचौराः घोरराजदण्डाद् भीताः। पशुचिकित्सायां मनोर्मतं ग्राह्यमेव प्रतिभाति—

चिकित्सकानां सर्वेषां मिथ्या प्रचरतां दमः।
अमानुषेषु प्रथमो मानुषेषु तु मध्यमः॥

१. अनुशासनपर्वणि ५१.२६–३३ २. मनुस्मृतौ ४.६७;७२.

अर्थशास्त्रानुसारं पशूनां हानिकारिणः मृत्युदण्डमार्हन्। गवां दोहनेऽपि नियम आसीत्। तथा हि गोवत्सानां स्वल्पे वयसि गोदोहनं सकृदेव प्रतिदिनं कर्तव्यम्। राजकीयपशुविभागानामध्यक्षा नियुक्ताः। हस्तिनां संवर्धनाय कृत्रिमवनानि रचितानि।[१]

गोवधः सर्वथा निषिद्धो दृश्यतेऽर्थशास्त्रे।[२]

पशुपालनं वैश्येभ्यो जीविकार्थं एकाधिकाररूपेण नियोजितम्।[३]

## व्यापारः

व्यापारस्यापरं नाम वाणिज्यमस्ति। व्यापारोऽयं प्राचीनयुगे वणिग्-वृत्तीनां वैश्यानां प्रायः एकाधिकारः प्रणीतः। उपभोग्यानां वैविध्यं सर्वेषु देशेषु कालेषु च व्यापारमाध्यमेन प्रसिध्यति। क्षेत्रमस्य कुटुम्बादारभ्य ग्रामनगरप्रान्तदेशविदेशपर्यन्तं निःसीमम्। लाभदृष्ट्या व्यापारस्य सर्वोत्कृष्टता सुविदितैव। तथा हि कौटिल्यानुसारं शतप्रतिशतं लाभं व्यापारिणः कर्तुं शक्नुवन्ति।

## वाणिज्यवस्तूनि

प्रायशः सर्वोपभोग्यानि तेषामुपादानानि च वाणिज्ययोग्यानि भवन्ति। अपरं च साधनरूपाण्यस्त्रशस्त्राणि वास्तूपकरणानि विभूषणार्हाणि मणिरत्नदन्तसुवर्णादीनि औषधादीनि व्यंजनानि च वाणिज्यवस्तूनि सन्ति। पशुपक्षिणां तेभ्यः प्राप्याणां चर्मोर्णानां च व्यापारः प्राचीन-कालतः प्रसिद्धः।

ख्रीष्टतः त्रिसहस्रवर्षं प्राग् दक्षिणभारतेभ्यः प्रेषितमर्णाकाष्ठं काल्डिया-प्रदेशस्थचन्द्रमन्दिरं प्रयुक्तम्।[४] प्रायः तस्मिन् युगे मिसरप्रदेशस्य शवानामावरणाय भारतीयवस्त्रं समीहितं दृश्यते। सिन्धुसभ्यताया निर्माणे विलोचिस्थानाफगानिस्थानपारसीकादिभ्यो देशेभ्यः प्राप्तानि धातुमणि-

---

१. जनपदनिवेशप्रकरणात् २. सूनाध्यक्षप्रकरणात्
३. मनुस्मृतौ ८.४१०,९.३२८ ४. Hibbert lectures 1877।

स्वर्णरजतानि दृश्यन्ते। सिन्धुवासिनां कार्पासवस्त्राणां निर्यातं सुमेरवासिभ्योऽभवत्।[१]

वैदिकसभ्यतायां कृषकपशुपालककुम्भकारायस्कारस्वर्णकारमणिकारतन्तुवायचर्मघ्नतक्षकरथकारादीनामुत्पादितानां वस्तूनां परस्परं व्यापारोऽभवत्। सोमविक्रेतारः सम्भवतः पर्वतप्रदेशेभ्य आगताः। दूर्शपवस्ताजिनानां व्यापारोऽथर्ववेदे निदर्शितः।[२] सिन्धुप्रदेशादश्वलवणादीनां निर्यातमभवत्। वैदिकयुगे भारतीयानां व्यापारोऽरबदेशवासिभिः सह बभूव। व्यापारेऽस्मिन् लौहवस्तूनां व्यंजनानां सुगन्धिद्रव्याणां रत्नादीनां च प्राधान्यमासीत्।[३]

खीष्टतः सप्तशताब्दं प्राग् भारतदेशस्य कस्तीरं हस्तिदन्तश्च ग्रीसदेशे निर्याति। भारतीयानां बीजवृक्षकाणां निर्यातमक्कडप्रदेशायाभूत्। पशूनां निर्यातं प्रचलितमासीत्। तथा हि—'टालेमी फिलाडेल्फस' इति ख्याताय महाराजाय भारतीयकुक्कुरगोदारादीनां निर्यातं कृतम्। उष्ट्रादिभिर्भारहारैस्तदा भारतीयव्यंजनानि विदेशेषु प्रेषितानि।[४]

खीष्टतः चतुःशताब्दं प्राक् भारतीयकौशेयानां पारसीकदेशे बहुमानोऽभवत्। कौशेयस्य तत्तुल्यस्वर्णं मूल्यमासीत्।[५] भोगविलासादीनां रोमदेशेऽतिशयप्रतिष्ठा बभूव। तेषां माध्यमेन भारतेऽतुलितस्वर्णराशिः समागतः। तदधिकृत्य लिखितं प्लीनीमहोदयेन—There was no year in which India did not drain the Roman Empire of a hundred million sesterces (£ 10,00000)- - - so dearly do we pay for our luxury and our women.[६] अपरं च तस्य समर्थनम्—The annual drainage of gold from Rome was estimated at 500 steria, equal to about Rs 4000,000.[७]

१. Piggott Prehistoric India p. 208 २. अथर्ववेदे ४.७.६
३. अरब और भारत के सम्बन्ध पृ० ६१-६२ ४. Rawlinson—Intercourse Between India and the Western World p. 93–94 ५. Indian shipping p. 83 ६. Natural History ७. Encyclopaedia Britt.

चीनप्रदेशस्य कौशेयं प्रथमं भारते आनीतं पश्चात् विदेशेषु प्रेषितम्।[१] भारतीयसूक्ष्मवस्त्रं 'मलमल' इति ख्यातं अफ्रीकादेशेऽरबे सकोत्रायां च प्रेषितम्।[२] सर्वेषु देशेषु भारतीयकलाकृतीनां समादरो बभूव।

उपर्युक्तवस्तूनां वैदेशिकव्यापारः प्रायशः ख्रीष्टस्य सप्तशताब्दपर्यन्तं भारतीयवणिग्भिः कृतः। पश्चादरबदेशवासिनः भारतीयवस्तूनां पश्चिम-देशेषु निर्यातं कुर्वन्ति स्म।[३] कतिपयव्यापारवस्तूनां भारतीयनाम्नामरब-पर्याया दर्शनीया एव—

| संस्कृतम् | अरबभाषायाम् | संस्कृतम् | अरबभाषायाम् |
|---|---|---|---|
| एला | हेल | कनकफल | करनफल |
| कर्पूर | काफूर | मूषक | मश्क |
| चन्दन | सन्दल | जातिफल | जायफल |
| ताम्बूल | ताम्बोल | त्रिफला | इत्रीफल |
| नीलोत्पल | नीलोफर | पिप्पली | फिलफिल |
| भिल्लातक | बलादर | विभीतक | बलीलह |
| हरीतकी | हलीलज | गोपदल | फोफल |

अरबदेशवासिनस्तु भारतीयवस्तूनि चीनप्रदेशे प्रेषितवन्तः।

विदेशेभ्यो भारते बहूनि वस्तून्यपि वैदेशिकव्यापारिभिरानीतानि। मिसरप्रदेशात् हीरकाङ्गुलीयकानि सुरा च पारसीकदेशात् जपापुष्पजलं बसराप्रदेशात् खर्जूरमरबदेशादश्वश्च भारते आनीय विक्रीतानि।[४]

## व्यापारसाधनानि

व्यापारस्तु प्राचीनयुगे स्थलमार्गैः जलमार्गैश्चाभवन्। स्थलमार्गेषु पशूनां सहायता प्रायशोऽपेक्षिता। जलमार्गे नौकायानं समीहितम्।

---

१. Warmington: Commerce Between the Roman Empire and India p. 176, 212; Periplus p. 172
२. The Periplus p. 42, 72, 73, 179–180 ३. अरब और भारत के सम्बन्ध ४. अरब और भारत के सम्बन्ध पृ० ६७-६८

**स्थलमार्गः**

सुदूरप्राचीनकालतो नगरेषु गमनागमनरीत्या प्रशस्तमार्गा निर्मिता इति निःसन्देहं प्रतिभाति। सिन्धुसभ्यताया व्यापारिकसम्बन्धा देशेषु विदेशेषु चाभवन्। व्यापारयोग्या मार्गाः तदा बभूवुः। तेषु मार्गेषु व्यापारिणामवस्थानायाश्रया निर्मिताः। व्यापारवस्तूनां वहनाय गर्दभा बलीवर्दशकटिका उष्ट्राश्चोपयोजिताः।[१] तदा नगरेषु विस्तृतराजमार्गाणां प्रचलनमासीत्।

वैदिकयुगे 'अनस्' इति ख्याता बलीवर्दशकटा बभूवुः। उष्ट्रा गर्दभाश्च भारहाराः पशवो विख्याताः। प्रपथ-महापथ-पथ-वर्त्मादीनि शकटानां पशूनां च गमनागमनायाभिप्रेतानि।

महाभारतयुगे महासार्थो हस्त्यश्वरथसंकुलोऽभवत्। उष्ट्रा बहवो बभूवुः[२] सार्थवाहस्तु नेताऽभवत्। बौद्धसाहित्यानुसारं श्रावस्तीनगराद्राजगृहप्रतिष्ठानपर्यन्तं वाराणसीपुरतः उज्जयिनीपर्यन्तं विदेहाद् गन्धारपर्यन्तं स्थलमार्गैः सार्था गमनागमनं कृतवन्तः।[३] सार्थानां बलीवर्दशकटानां संख्या सहस्रपर्यन्ताऽपि बभूव। दीर्घपरिमाणासु मरुभूमिषु यात्रायै सार्थो जलकाष्ठभोजनादीनि पाथेयानि संगृहीतवान्। रात्रावेव यात्राऽभूत्। स्थलनियामकाः तत्र मार्गनिर्देशका बभूवुः। दिशाज्ञानं तारादर्शनेनाभूत्। राजभिः स्थलपथकर्मिकाः व्यापारमार्गाणां पर्यवेक्षणाय नियुक्ताः। ते विविधदिग्भ्यः आगन्तव्यव्यापारिकवस्तूनां प्राक्परिचयं ज्ञातवन्तः।[४] वनरक्षकाः सार्थेभ्यः शुल्कं गृहीत्वा तेषां वनमध्ये सुरक्षितां यात्रामकारयन्। वनरक्षकाणां सेनायां पंचशतपर्यन्तपुरुषा बभूवुः। साधारणव्यापारिणः पृष्ठे व्यापारवस्तूनि नीत्वा ग्रामाद् ग्रामं विचरन्तः पण्यं कुर्वन्ति स्म। तेषु कतिपयाः हीरकमौक्तिकादीनि पण्यानि विक्रीणते स्म।[५]

---

१. Piggott. Prehistoric India p. 174-177 २. वनपर्वणि ६४.१११;६५.१३ ३. चुल्लवग्गे ६४; गुत्तिलजातके २४३ गन्धारजातके च ४. वण्णुपथजातके २ चुल्लसेट्ठिजातके ४ ५. सेरिवाणिज जातक ३

व्यापारसार्थेभ्यो राजानो बहुविधानुपहारान् प्राप्तवन्तः। ते पण्यानि करमुक्तानि कुर्वन्ति स्म सार्थेभ्यश्चावासाय सुप्रबन्धं संविदधति स्म।[१]

अर्थशास्त्रानुसारं व्यापारमाध्यमेन दक्षिणापथेभ्यः स्वर्णशंखहीरकरत्नमुक्तादीनां प्राप्तिः सम्भवासीत्। तस्मिन्व्यापारे लाभस्य मात्राऽत्यधिकासीत्, किन्तु व्यापारमार्गः दुर्गमोऽभूत्। व्यापारमार्गा बहुविधा बभूवुः। तथा हि—चक्रपथः, पादपथः, खरोष्ट्रपथः, अंसपथश्च। वारिस्थलपथयोर्वारिपथः श्रेयान् सम्मतः।[२]

मौर्ययुगीनाः पन्थानो दीर्घाः बभूवुः। तैः भारतस्य प्रायः सर्वे प्रदेशाः परस्परं सम्बद्धाः बभूवुः। तथा हि प्रधानराजमार्गाः—

| | | |
|---|---|---|
| पाटलिपुत्रात्[३] | बाराणसी | १७ योजनानि |
| वाराणसीतः | कौशाम्बी | १३ योजनानि |
| कौशाम्बीतः | भारहुतम् | १० योजनानि |
| भारहुतात् | विदिशा | २३ योजनानि |
| विदिशातः | उज्जयिनी | १५ योजनानि |
| उज्जयिनीतः | भरुकच्छम् | २५ योजनानि |
| उज्जयिनीतः | हैदराबादम् (सिन्धप्रदेशे) | ६३ योजनानि |

अस्मिन्युगे एक एव राजमार्गः पाटलिपुत्र-मथुरा-सिन्धुप्रदेशेभ्यः गान्धारवैक्ट्रियानापर्यन्तं प्रसृतः। भारतीयसीमातो बहिः पश्चिमोत्तरप्रदेशेभ्यः चीनदेशे गमनाय पन्थानोऽभवन्। पूर्वभारतप्रदेशेभ्यः हिन्दचीनं ततः चीनप्रदेशं गन्तुं मार्गा बभूवुः। परवर्तियुगे आन्ध्रप्रदेशस्य केन्द्रभागः वेङ्गीप्रान्तः उत्तरकोसल-कलिङ्ग-महाराष्ट्र-कर्णाटक-द्रविडप्रदेशैः तत्कालीनराजमार्गैः सुसम्बद्धः। गुप्तयुगीनमार्गव्यवस्थायाः वर्णनं कालिदासेन कृतम्। तथा हि—

---

१. णायाधम्मकहाओ परिच्छेदः ३ २. अर्थशास्त्रे कर्मसन्धिप्रकरणे
३. पाटलिपुत्रादेको राजमार्गः वैशाली-श्रावस्ती-नेपाल-पर्यन्तं प्रसृतः।

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
सार्थाः स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥

रघुवंशे १७.६४

जलमार्गः

ते साहसिका महाजनाः प्रातःस्मरणीया ये प्रागैतिहासिकयुगेषु लघुनौकास्वपि समुद्रस्योत्तालतरङ्गाणामुपरि द्वीपाद् द्वीपं ययुः। तेषां नदीषु गमनागमनयोः जलयानानि सम्भावितव्यान्येव।

सिन्धुसभ्यतायुगे हड़प्पामोहेंजोदड़ोनगरवासिनः परस्परं सम्बन्धं जलयानेन प्रतिष्ठापितवन्तः। ते नौकासंचारणे निष्णाताः बभूवुः।[1] वैदिकानां नावः शतारित्रा अपि बभूवुः।[2] नौव्यापारस्य परिचय ऋग्वेदेन प्राप्यते। तथा हि—

तं गर्तयो नेमन्निषः परीणसः समुद्रं न संचरणे सनिष्यव ॥ १.५६.२
उवासोषा उच्छाच्च नु देवी जीरारथानाम्।
ते अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥ १.४८.३
वेदा यो वीनां पदमन्तरिक्षेण पतताम् वेद नावः समुद्रियः ॥
१.२५.७

आ देवो ददे बुध्न्या३ वसूनि वैश्वानर उदिता सूर्यस्य।
आ समुद्रादवरादा परस्मादाग्निर्ददे दिव आ पृथिव्या ॥ ७.६.७

बौद्धयुगीनानां जलयात्राणां वर्णनं त्रिपिटकसाहित्ये भूरि विद्यते। षण्मासपर्यन्ता अपि यात्रा बभूवुः। दिशाकाकानुपयुज्य दिशाज्ञानं कृतम्। द्वीपद्वीपान्तरेषु नाविकानां प्रगमनं सुविदितम्। नदीश्रिता नावः नागरिकेभ्य आवश्यकवस्तूनि नयन्ति स्म। नदीतटेषु पत्तने नौस्थानं नियतमासीत्।

---

१. सिन्धुसभ्यतावासिनां समुद्रयात्रामाध्यमेन सुमेर-एलमादिदेशैः सम्बन्धः स्थापितः इति मैकेमहोदयस्य मतम्। २. It is not easy to refuse to recognise here the existence of large vessels with many oars used for sea voyage Vedic Index नौ।

पत्तनानां पर्यवेक्षणाय जलपथकर्मिका नियुक्ताः। नौकानामाकारप्रकाराः विशाला प्रतिभान्ति। कासांचिन्नावां दीर्घत्वमष्टशतहस्तायाममभूत्।[१] एकस्यां नावि सहस्रतक्षका यात्रां कर्तुं शक्नुवन्ति स्म।[२]

खीष्टतः प्राक् प्रथमशताब्दे मिसरभारतयोः साक्षात्सम्बन्धः व्यापार-माध्यमेन स्थापितः। खीष्टतः प्राक् २५ वर्षे १२० नावो मिसरदेशस्य रक्तसागरीयनौकाश्रयात् प्रतिष्ठन्ते स्म।[३] कतिपयग्रीकव्यापारिणः नौभिर्दक्षिणभारतस्य समुद्रतटं पर्यटन्तः गंगासागरसङ्गमपर्यन्तमाजग्मुः। हिप्पालस इति ख्यातेन नाविकेन 'मानसून' वायुवेगस्य साहाय्यं प्राप्य समग्रारबसागरः सरलमार्गेण पारितः। अभिनवोऽयं मार्ग आसीत्।[४]

नावां सुरक्षायै कुशलधनुर्धरा नियुक्ताः। परवर्तियुगे शतघ्नीगोला-दिभिराक्रमणकारिणां प्रत्याघातः कृतः। अस्मिन्युगे भारतस्य कावेरीपत्तने ग्रीसतः चीनपर्यन्तानां सर्वेषां देशानां नावः समागताः। भारतीयनाविका अपि तेषु सर्वेषु देशेषु गतवन्तः।[५]

गुप्तयुगीनानां नावां प्रतिकृतयोऽजन्तागुहाचित्रणे बोरोबुदुरमूर्तिषु च प्राप्यन्ते। विशालास्ता बभूवुरिति निःसन्देहम्। अस्मिन्युगे गंगासागर-संगमात् आसिन्धुसंगमं प्रायशः विंशतिः नौकाश्रया बभूवुः। चीनदेशगामि-नीनां नावां विशालता प्रमाणितैव वर्तते, यतस्तासु सहस्रजनाः जलयान-चारणाधिकारिणो बभूवुः। तासु चतुःशतधनुर्धरा बभूवुः। लघुनावः दुर्घटना-

---

१. संखजातके २. समुद्दवणिजे जातके। रालिंसन महोदय इदमधिकृत्य लिखति—Evidently from early days the Indian sea men built ships larger than those usually employed even at a much later date in the mediterranean. Intercourse Between India and the Western World p. 4.

३. Straieo II C. 118 ४. स्काफ पेरिप्लसे ५. Dr. W. Vincent: The Commerce and Navigation of the Ancient Book IV p. 475. Cambridge History of India vol I p. 212–213; मिलिन्दपञ्हो।

रक्षायै सम्बद्धाः। ख्रीष्टतः पश्चात् सप्तमशतकादारभ्य भारतीयसामुद्रिकव्यापारोऽरबदेशवासिनां हस्ते गतः। भारतीयव्यापारिकवस्तूनां महापण्यानि पारसीकसमुद्रवङ्क्षे 'उबलासैराफकैश' पत्तनानि, ईराकप्रदेशे बसरापत्तनं च बभूवुः। भारतीयवस्तूनि रक्तसागरपर्यन्तं नौभिर्नीतानि।[१]

एकादशशतके भोजेन रचिते युक्तकल्पतरुग्रन्थे तत्कालीननौनिर्माणविज्ञानस्य परिचयः प्राप्यते। तथा हि दीर्घाः उन्नताश्च विविधा नावः। दीर्घाणां दशभेदाः—दीर्घिका, तरणी, लोला, गत्वरा, गामिनी, तरी, जंघाला प्लाविनी, धारिणी वेगिनी च। उन्नतानां पंचभेदाः-ऊर्ध्वा, अनूर्ध्वा, सुवर्णमुखी, गर्भिणी, मन्थरा च। सर्वाश्च ताः समुद्रतरणाय बभूवुः। नदीषु तरणाय क्षुद्रा भीमा मध्यमा च नावो बभूवुः। नावामलङ्करणं स्वर्णरजतताम्रमयमासीत्।

## मुद्रा

व्यापारस्य संवर्धनाय रत्नादिकानां मुद्रात्वं समीहितम्। प्रारम्भिकयुगत एव तेषां मुद्रामाध्यमेन प्रयोगोऽभवत्। वैदिकयुगे स्वर्णमुद्रा निष्ककृष्णलशतमानादयो बभूवुः।[२] गावोऽपि मुद्रावत् प्रयुक्ताः। अन्येऽपि धातुखण्डाः मुद्रा बभूवुः। निष्कादीनामलङ्कारवदुपयोगोऽपि बभूव। बौद्धसाहित्ये निष्क-सुवर्ण-हिरण्य-धरण-कार्षापण रूपि-कंस-पादमाषक-काकणिकादीनां मुद्राणां प्रचलनं दृश्यते।[३] आहतमुद्रा रूपीति ख्याता।[४] काकणिका स्वल्पतमा मुद्रासीत्। मुद्राणां धातुपरिमाणं मनुना निर्दिष्टम्।[५] भारतस्य विविधप्रदेशेषु बहुविधाः मुद्राः प्रवर्तिताः।[६]

प्राचीनभारते वैदेशिकमुद्राणां प्रचलनमपि बभूव। अधुनापि ग्रीस-

---

१. अरब और भारत के सम्बन्ध पृ० ३८–३६, ४२–४६, ४७, ७२।
२. इमा मुद्राः प्रायः परस्परं शतगुणा दशगुणा वा बभूवुः। ३. अष्टाध्यायीग्रन्थे पाणिनिना कंसशतमानकार्षापणपणपादमाषनिष्कादीनां मुद्राणामुल्लेखः कृतः। ४. रूप्यकं-रूप्यं रूपको वा पर्यायः। आहतं रूपमस्यास्तीति रूप्यम्।
५. मनुस्मृतौ ८.१३१-१३७ ६. Life in Ancient India p. 120

पारसीकानां शासकानां बह्वो मुद्राः प्राप्ताः। परवर्तियुगे कुशनराजानां सुसंस्कृतमुद्राः प्रचलिताः दृश्यन्ते।

गुप्तवंशीयानां राज्ञां बहुविधाः मुद्राः बभूवुः। तासु मुद्रासु राज्ञामुपाधयः पराक्रमद्योतकाः वर्तन्ते। राज्ञां पराक्रमाणां द्योतनमभिरुचीनां च प्रदर्शनं तेषां प्रतिकृतिमुद्राभिः कृतम्। तथा हि—गरुडध्वजधनुर्धरवीणावादकाश्वमेधपरायणरूपाणि दर्शितानि। उपाधयश्च वर्तन्ते—पराक्रमः, अप्रतिरथः, कृतान्तपरशुः, सर्वराजोच्छेत्ता, व्याघ्रपराक्रमः, अश्वमेधपराक्रमः, श्रीविक्रमः, विक्रमादित्यः, रूपकृती, सिंहविक्रमः, नरेन्द्रचन्द्रः, नरेन्द्रसिंहः, सिंहचन्द्रः, अजितविक्रमः, परमभागवतः, विक्रमाङ्कः। चन्द्रगुप्तस्य मुद्राः स्वर्णरजतताम्राणामेव प्राप्यन्ते। हर्षयुगीनमुद्राः पूर्ववत् दृश्यन्ते।

## परिगणनमानोन्मानम्

परिगणनमानोन्मानस्य समारम्भः संस्कृतेः समारम्भादेव सम्भाव्यते। सिन्धुसभ्यतायुगीनानां नागरिकाणामुन्मानेषु १, २, ८/३, ४, १६, ३२, ६४, १६०, २००, ३२०, ६४० गुणनविन्यासः प्रतिष्ठितो दृश्यते। सर्वेषां मानभाराणां यौतवानि प्राप्यन्ते। यौतवानां सर्वत्र समानत्वेन नागरिकाणां मानयोगः प्रतिष्ठितः।

हस्तः प्रमाणितः मापदण्डो गृहीतः। १३.२ इंचसमो मापदण्डोऽवर्तत। हस्तायामः २०.६२ 'इंच' इति मतः।

वैदिकयुगे तुलाप्रयोगेण पात्रप्रयोगेण च मानं नियतम्। कृष्णालः (गुंजाबीजं) लघुतमो मानभारोऽभवत्। माषः चतुःकृष्णालसमोऽभवत्।[1] परवर्तियुगे विविधप्रकाराणां मानभाराणां प्रचलनमभवत्। प्रतिमाना लौहस्य प्रस्तरस्य वा निर्मिताः। अर्थशास्त्रानुसारं प्रतिमानविन्यासोऽधो दीयते—

| | |
|---|---|
| १० माषाः (५ गुंजाबीजानि) | = १ सुवर्णमाषः |
| १६ सुवर्णमाषाः | = १ सुवर्णः वा कर्षः |
| ४ कर्षः | = १ पलम् |

---

१. वाजसनेयिसंहितायां ३०.१७; तैत्तिरीयसंहितायां २.३.२.१

अपराण्यपि प्रतिमानानि बभूवुः ।

तुलायाः दण्डस्यायामः बहुविध आसीत् । तस्या द्वयोः अन्तभागयोः पात्रमवलम्बितम् । तुलाया वैविध्यं तोलनीयद्रव्यानुकूलं कृतं दृश्यते ।

अर्थशास्त्रयुगीना मापदण्डा अधोलिखितविधा बभूवुः-

८ यवाः = १ अंगुलम्

८ अंगुलानि = १ धनुर्ग्रहः

२ धनुर्ग्रहौः = १ धनुर्मुष्टिः

३ धनुर्ग्रहाः = १ वितस्तिः छाया पुरुषः वा

२ वितस्ती = १ अरत्निः प्राजापत्यहस्तः वा

४ अरत्नयः = १ दण्डः

गुप्तयुगीनानां मानोन्मानादीनां परिचयोऽमरकोशेन प्राप्यते । तथा हि

यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम् ।
मानं तुलाङ्गुलिप्रस्थैः गुंजाः पंचाद्यमाषकः ।।
ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ।
सुवर्णविस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले ।।
तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुला ।
आचितो दशभाराः स्युः शाकटो भार आचितः ।।
अस्त्रियामाढकद्रोणौ खारी वाहो निकुंचकः ।
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ।।

## राजकीयसंरक्षणम्

व्यापारस्य प्रगतिः सर्वप्रथमं राज्ञ एवोत्तरदायित्वमिति स्पष्टम् । तद्यथा वैदिकयुगे आर्याणां सम्राट् इन्द्रः स्तुतः—

इन्द्रमहं वणिजं चोदयामि स न ऐतु पुर एता नो अस्तु ।
नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् ।।[१]

महाभारतानुसारं राजा सर्वोच्चव्यापाराधिकृतः प्रतिभाति । तथा हि—

---

१. अथर्ववेदे ३.१५.१

अजस्रमुपयोक्तव्यं फलं गोमिषु भारत।
प्रभावयन्ति राष्ट्रं च व्यवहारं कृषिं तथा॥
सर्वत्र क्षेमचरणं सुलभं नाम गोमिषु।
न ह्यतः सदृशं किंचिद् वरमस्ति युधिष्ठिर॥

शान्तिपर्वणि ८७.३८,४०

अर्थशास्त्रानुसारं, व्यापारस्याभ्युदयाय सर्वा व्यवस्था राज्ञा कृताः, तेन पण्यपत्तनं प्रतिष्ठापितं व्यापारमार्गाणां नवीकरणं विधापितं च। राजा मानोन्मानादीनां सत्यव्यवहाराय सचेष्टोऽभवत्। राज्ञा नियुक्तः पौतवाध्यक्षः तुलाप्रतिमानमापदण्डानां निर्माणमकारयत्।

राज्ञा नियुक्तः पण्याध्यक्षः प्रजानां लाभाय विक्रेयाणां मूल्यं समीचीनमकारयत्। वैदेशिकव्यापारिणां लाभायापि पौतवाध्यक्षः सचेष्टोऽभवत्। शुल्काध्यक्षः राज्ञा नियुक्तो वैदेशिकानां व्यापारिणामितिवृत्तं संगृहीतवान्। अन्तपालाः स्वसीम्नि विनष्टानां व्यापारिकवस्तूनां प्राप्तिमकारयन्। नौकाध्यक्षः जलमार्गैः प्रवर्तितव्यापारस्य सुरक्षायै प्रयत्नमकरोत्। स नौकाश्रये शान्तिमयवातावरणाय सचेष्टो बभूव। विवीताध्यक्षो निर्जनप्रदेशानां भयकारणानि—चौरहिंसकपशुशत्रुबाधादीनि दूरीकृतवान्, जलरहितस्थानेषु सेतुबन्धकूपव्यवस्थामकरोत्। स व्यापारिणां सार्थमपि रक्षितवान्। समाहर्त्रा नियुक्ता गुप्तचरा व्यापारिणां शौचाशौचयोः सूचनां तस्मै ददति स्म।

पण्यस्थानस्य विक्रयप्रक्रियायाः प्रतिष्ठापनाय नियमाः प्रणीताः। अनार्जवस्य कपटस्य वाऽवकाशः स्वल्पतमोऽपि नासीत्। अशुद्धवस्तूनां कपटाचरणाः विक्रेतारो दण्डनीया बभूवुः। संस्थाध्यक्षः पण्यपत्तने मानोन्मानमापादीनां परिशुद्धये प्रायतत। यदि वैदेशिकवस्तूनामायातं स्वदेशीवस्तूनां प्रचारे बाधकं बभूव, तर्हि राजाऽऽयातनियन्त्रणमकरोत्।[१]

अन्नानां राशीकरणाय कतिपयव्यापारिणः नियुक्ताः। अन्नमूल्यं

---

१. स्वपण्योपघातीनि वा परपण्यानि निवर्तयिष्यामि।

प्रजालाभं विचिन्त्य निर्णीतम्। ख्रीष्टतः १०७७ वर्षं पश्चात् भारतीय-नरेशेन कुलोत्तुङ्गेन व्यापारिकाभ्युदये चीनदेशे प्रतिनिधयः प्रेषिताः। काकातीयवंशी राजा गणपतिदेवः सामुद्रिकचौराणां समूलविनाशं कृत्वा चीनजंजीवारादिदेशैः सह व्यापारं समवर्धयत्।

व्यापारिणां प्रजापीडनं प्रायः सदैव लोकविदितमभूत्। तत् सोमदेवेन सुष्ठु पर्यालोचितम्—

मानेन किंचित् मूल्येन किंचित् तुलयाऽपि किंचित् कलयापि किंचित्।
किंचिच्च किंचिच्च ग्रहीतुकामाः प्रत्यक्षचौरा वणिजो नराणाम्॥

तद् ज्ञात्वा प्रजापालनपरायणो राजा व्यापारिणां दुष्प्रवृत्तीनां विघाताय यतन्ते स्म।

## धार्मिकनियोजनम्

व्यापारकर्मणि दैवविधानं स्वभावतोऽपेक्षितं वर्तते। देवानां साहाय्येन व्यापारे लाभं ग्रहीतुकामा व्यापारिणः तेषामुपासनां कुर्वन्ति स्म। अवश्य-मेव तेषां देवानां चरितैः व्यापारिणः प्रभाविता बभूवुः। व्यापारिणां चरित्र-प्रतिष्ठायै वसिष्ठेन नियमः कृतः—ब्रह्महाऽपि तावन्मात्रं सपापो न भवति यावन्मात्रमल्पमूल्यस्य वस्तुनोऽधिकमूल्यग्राही व्यापारी भवति। व्यापार-कार्यं वैश्यानामेकाधिकारः साधारणतः बभूव। सर्वासु धार्मिकसंस्कृतिषु व्यापारिणामार्जवं प्रशस्तं मतम्। तेषां कौटिल्यं च विगर्हणीयं प्रायश्चित्तार्हं वा निन्दितम्।

## व्यापारमार्गे बाधाः

व्यापारिणां बहुविधानि संकटानि बभूवुः। स्थलमार्गेषु हिंस्रजन्तुभ्यो भयमवर्तत। वनमार्गेषु कदाचित् रात्रौ वनगजानामाक्रमणेन समग्रसार्थः पण्यानि च तस्य विनष्टानि।[१] मरुभूमिषु मार्गेषु भ्रान्तानां सार्थानां दुर्गति-रभवत्। कदाचित् जलविरहितानां तेषां कूपखननेनापि जलप्राप्तिर्यदि नाभवत् तर्हि पिपासिताः ते मृताः।[२]

---

१. वनपर्वणि महाभारते ६४. १२८; ६५.४–१५ २. वण्णुपथजातके २

समुद्रगामिनां व्यापारिणां संकटान्यधिकतराणि दृश्यन्ते। मार्गे यदि तेषां नावः क्वचिदवरुद्धाः तर्हि तत्कारणं कोऽप्यशोभनीयो जनो मतः। स शलाकामाध्यमेन प्राप्तः समुद्रे प्रक्षिप्तश्च। अपरं च जलजन्तूनां प्रत्याक्रमणं स्थलोत्सीदनभयं जलसंसीदनभयं जलान्तर्हितपर्वतैः प्रत्याघातः प्रभञ्जनश्च विनाशाय बभूवुः। दुर्वृत्तीनां राज्ञां तेषां कर्मचारिणां च भयं नाल्पमासीत्।[1]

स्थलमार्गेषु सर्वापहारिणां प्रवंचकानां च भयमासीत्। वनेषु कदाचित् दावाग्निना परिवृतः सार्थः दग्धः। वंशवनं यदि समक्षमापतितं तर्हि प्रत्यावर्तनं कर्तव्यमासीत्। तत्र कदाचित् वन्यानां म्लेच्छादीनामाक्रमणभयमासीत्। विषवृक्षाणां सम्पर्केण क्वचित् पीडनमभवत्।[2]

## व्यापारिणां वर्चस्विता

व्यापारिणामदम्योत्साहः कर्मण्यता बुद्धिकौशलं साहसं प्राणभये जातेऽपि निर्भीकत्वं विघ्ने जातेऽपि कार्याभिनिवेशश्च महान्तो गुणा दृश्यन्ते।

इन्द्रो वणिगिति वैदिकधारणा। वणिगिन्द्रगुणैः समन्वितो भवत्विति तत्र मान्यता। इन्द्रवत्पराक्रमिणो व्यापारकर्मणे योग्या मताः। व्यापारिणां धार्मिकाभिरुचिः प्रशस्ता। तथा हि अथर्ववेदे—

इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय।
यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम्॥
इदं हव्यं संविदानौ जुषेथां शुनं नो अस्तु चरितमुत्थितं च॥३.१५

इयं कस्यचिद् व्यापारिणो मनोवृत्तिर्निदर्शिता। अनेन वैदिकवणिजामुदात्तताऽभिव्यक्ता। वैदिकयुगेऽनुदारा लोभपरायणाः पणय आर्येतरा व्यापारिणः समाजे न समादृताः।

व्यापारिणस्तु सर्वासु परिस्थितिषु कालानुवर्तिनो यथाकालव्यवहारिणो

---

१. दिव्यावदाने धर्मरुच्यवदानाध्यायात्

२. Life in Ancient India p. 116.

वा बभूवुः । अपरिचितदेशेषु ते केवलं बुद्धिकौशलेन स्वकार्येषु सफलतां लभन्ते स्म । व्यापारिणां योग्यतां प्रतिप्रादयन् मनुर्लिखति—

सारासारं च भाण्डानां देशानां च गुणागुणान् ।
लाभालाभं च पण्यानां पशूनां परिवर्धनम् ।।
भृत्यानां च भृतिं विद्यात् भाषाश्च विविधा नृणाम् ।
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ।। ३. ३३१-३२

मृत्युमुखापतितोऽपि जीवनकलाविशारदो वणिक् सर्वथा प्रशस्यः ।

## प्रकीर्णव्यवसायाः

उपभोग्यानामाधिक्यस्य विचारणात् स्पष्टं प्रतिभाति यत् प्राचीनयुगे कृषिपशुपालनादीन् विहायासंख्यविधा व्यवसायास्तत्रासन् येषां माध्यमेन नागरिकाणां जीवनावश्यकताः सम्पूरिता बभूवुः । तद्यथा भोजन-पेय-वस्त्र-प्रसाधन-द्रव्य-गृहास्त्र-शस्त्रादीनामुपकल्पनं संगीतनृत्यादीनां मनोरंजनोपायानां करणं रत्नधातुकाष्ठपुष्पफलौषधीनां प्रकृतस्वरूपे संग्रहणं च बहुसंख्यकानां जनानामुद्योगा बभूवुः । अपरं च ब्राह्मणानां याजनं क्षत्रियाणां प्रजापालनं युद्धं वा शूद्राणां शिल्पं दासकर्म वा प्रमुखानि बभूवुः ।

सिन्धुसभ्यतायुगे वस्त्ररचनोद्योगः संवर्धितो बभूव । तत्रत्यबालकानां मनोरंजनार्थं बहुविधाः क्रीडनका निर्मिताः । शकटरचना तस्मिन्युगे विशिष्टव्यवसाय एवासीत् । नगरभवनानां निर्माणेऽसंख्या इष्टकानिर्मातारः स्थपतयः तक्षकादयो नियुक्ताः । गृहकार्यार्थं भाजनानां शयनासनानां च निर्माणे बहुजनाः व्यापृताः । अस्त्रशस्त्रकारिणां संख्याऽनल्पा प्रतिभाति । अवश्यमेव सहस्रसंख्यका अलङ्कारप्रसाधनादीनां रचयितारस्तत्र बभूवुः । चित्रकारा मूर्तिकाराश्च सर्वत्रालङ्कारप्रसाधका बभूवुः ।

सिन्धुसभ्यतायुगे भारतस्य विविधभागेषु खनिजपदार्थानां संग्रहणं प्रवर्तितमासीत् । दक्षिणभारते, सौराष्ट्रे, राजस्थाने च खनिजव्यवसायः प्राधान्येनासीत् । हिमालयाञ्चले वनवृक्षच्छेदकानां काष्ठिकानां व्यवसायः

समवर्धत। आखेटकाः वनेषु बहुविधानि वस्तूनि नागरिकाणामुपयोगाय वन्यपशूनां हत्यां कृत्वा प्राप्नुवन्ति स्म।

वैदिकयुगे प्रकीर्णव्यवसायाः—काष्ठकर्म वस्त्रनिर्माणं धातुकर्म मृत्तिकाभाजनरचना चर्मकर्म च बभूवुः। बहवो वनवासिनोऽर्धसभ्याश्च मृगयायां मत्स्यग्रहणे वा नियुक्ता बभूवुः। अपरं च धातुभिरस्त्रशस्त्रादीनामलङ्काराणां च निर्मातारो बहुसंख्यका आसन्। भूगर्भतः प्राप्तव्यधातूनां परिशोधने ध्माता संलग्नोऽभवत्। वाजसनेयिसंहितायां व्यावसायिकानां सूची प्राप्यते। तथा हि—रथकारः, तक्षा, कुलालः, कर्मारः, मणिकारः, इषुकारः, धनुष्कारः, ज्याकारः, रज्जुसर्जः, मृगयुः, श्वनी, भिषक्, सुराकारः, दार्वाहारः, चर्मसन्धाता, चर्मम्नः, धीवरः, शौष्कलः, कैवर्तः, गणक इत्यादयः पुरुषा एव। स्त्रीषु विदलकारी, कण्टकीकारी, पेशस्कारी, रजयित्री, वासःपल्पूली, आंजनीकारी, कोशकारी च बभूवुः।[1] मनोरंजनकरणे व्यापृतास्तु नृत्तगीताभिनयद्यूतवीणावादनतूणववादनशंखवादनादिषु विशारदा बभूवुः।[2] मौक्तिकसंग्रहणेऽपि कतिपयजनाः तत्पराः।[3] याजकानां पुरोहितादीनां व्यवसायस्तु प्रधानो बभूव।

परवर्तियुगेऽपि व्यवसायानां प्रवृत्तिः प्रायः पूर्ववदासीत्।[4] अभिनवव्यवसायानां प्रचलनं संस्कृतेः प्रगत्या सह सदैवाभूत्। सर्वेषु युगेषु श्रेष्ठनागरिका राजकर्मणि नियुक्ता बभूवुः। भारतीयशिल्पकलादीनां प्रख्यातिर्देशदेशान्तरं प्रसृता। तासामादर्शा विदेशेषु संगृहीताः। चित्रमूर्तिवास्तुशिल्पानां पुनरुत्थानं खीष्टाब्दस्य प्रारम्भिकयुगाद्विशेषरूपेणाभवत्। अमरकोशे तत्कालीनशिल्पिकादीनां सूची प्राप्यते। तथा हि—

---

१. वा० स० ३०  २. वा० सं० ३०.६,३६,२०  ३. ऋग्वेदे १.३५.४

४. उदाहरणार्थं महाभारते सभापर्वणि ५१.२६-२७,३२-३६; ५२ ५,६,६,१२,२५,३६;६२.५ रामायणेऽयोध्याकाण्डे ८३.१२-१५; अर्थशास्त्रे रत्नपरीक्षाप्रकरणमाकराध्यक्षप्रकरणं सुवर्णाध्यक्षप्रकरणं सूत्राध्यक्षप्रकरणं कोष्ठागाराध्यक्षप्रकरणं सुराध्यक्षप्रकरणं कुप्याध्यक्षप्रकरणं गणिकाध्यक्षप्रकरणम्।

कुलकः स्यात् कुलश्रेष्ठी मालाकारस्तु मालिकः ।
कुम्भकारः कुलालः स्यात् पलगण्डस्तु लेपकः ।।
तन्तुवायः कुविन्दः स्यात् तुन्नवायस्तु सौचिकः ।
रङ्गाजीवश्चित्रकारः शस्त्रमार्जोऽसिधावकः ।।
पादूकृच्चर्मकारः स्यात् व्याकारो लोहकारकः ।
नाडिंधमः स्वर्णकारः कलादो रुक्मकारकः ।।
स्याच्छाङ्खिकः काम्बविकः शौल्विकस्ताम्रकुट्टकः ।
तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् ।।
ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ।
क्षुरि-मुण्डि-दिवाकीर्ति-नापितान्तावसायिनः ।।
निर्णेजकः स्याद्रजकः शौण्डिको मण्डहारकः ।
स्यान्माया शाम्बरी मायाकारस्तु प्रातिहारिकः ।।
शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ।
भरता इत्यपि नटाः चारणास्तु कुशीलवाः ।।
मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः ।
वेणुध्माः स्युर्वैणविकाः वीणावादास्तु वैणिकाः ।।
जीवान्तकः शाकुनिकः द्वौ वागुरिकजालिकौ ।
वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ।।

शूद्रवर्गे ५.१४

## व्यावसायिकसंघाः

प्रथमं तावत् सिन्धुसभ्यतायुगीनानां संघात्मकव्यवसाया निश्चयात्मकरूपेण प्रतिभान्ति । तत्रत्यशिल्पिनां निर्मितवस्तुषु समरूपता गणसंस्थया प्रतिष्ठापितेति विदुषां मतम् ।[1]

---

१. Within the area already described the uniform products of the Harappa civilisation can be traced with the monotonous regularity of a highly organised community under some strong system of centralised government, controling production and distribution. Piggott : Prehistoric India p. 138.

वैदिकसाहित्ये प्रारम्भतः गणानामुदयो दृश्यते । तथा हि—मरुदादीनां देवानां गणाः सुप्रसिद्धः ।[१] गणपतिस्तत्रासीत् । वैदिकयुगीना जातिसंस्था परवर्तियुगस्य गणसंस्थासमाना दृश्यते । प्रत्येकस्याः जात्या विशिष्टव्यवसायोऽभवत् । तं व्यवसायमपेक्ष्य ये जना सम्बद्धाः तेषां पृथक् जातिरभवत् । जातीनां परिषदो बभूवुः, याभिर्जातीनां शान्तये सुव्यवस्थायै च विधानानि कृतानि ।[२]

बौद्धसाहित्यानुसारं द्विविधौ संघौ प्रतिष्ठितौ—सार्थानां शिल्पिनां च । संघानां स्थापना ज्येष्ठकानामध्यक्षत्वेऽभूत् । शिल्पिसंघाः शिल्पाचार्याणामध्यक्षत्वे प्रतिष्ठिताः । तस्मिन्युगे चौराणामपि संघा बभूवुः । एकस्मिन् दस्युसंघे ५०० लुण्टाका बभूवुः । अश्वविक्रेतॄणां व्यापारिणां संघस्य सर्वे सदस्याः समानं धनं विनियुंजन्ति स्म, लाभेषु समानाधिकारिणश्च बभूवुः ।[३] संघज्येष्ठकानां सम्मानास्पदं पदं राजसभायामपि बभूव ।[४] सांघिकशक्तिः तेषां सहयोगिनां प्रगतिपथे समापन्नान् विघ्नान् दूरीकर्तुं समर्थाऽऽसीत् । संघस्य विधानानां प्रभावक्षेत्रं सुविस्तृतं बभूव । सदस्यानां पारस्परिकविवादानां निर्णयः संघविधानानुसारं कृतः ।[५]

संघस्य नामानि रामायणमहाभारतादिषु ग्रन्थेषु निगमः, गणः श्रेणी वा प्राप्यन्ते । कतिपयसंघा आत्मरक्षार्थं सेनासमन्विता बभूवुः ।[६] रामायणानुसारं कैवर्तयुवकानामपि संघ आसीत् । तेषां नायकः राजा इति ख्यातः गुहोऽभवत् । तस्य सेना महती बभूव ।

अर्थशास्त्रानुसारं शिल्पिनां संघा महत्त्वपूर्णा बभूवुः । संघव्यवस्थायै राजकीयविधानानि बभूवुः । तस्मिन्युगे श्रेणीबलानामतिशयं माहात्म्यमासीत् । श्रेणीबलानि राजकीययुद्धेष्वपि समापतितानि । श्रेणीबलं

---

१. स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति बृहदारण्यके १.४.१२

२. गौतमधर्मसूत्रे ११.२० २१ ३. कूटवाणिजजातके ४. उरगजातके

५. गौतमधर्मसूत्रे ११.२१ ६. आश्रमवासिकपर्वणि ७ अध्यायतः ।

जनपदबलमासीत्। ईदृशानां सैनिकानां प्राथमिकप्रवृत्तिः स्वराष्ट्रस्य रक्षणं बभूव।

जैनसाहित्ये स्वर्णकारचित्रकारकुम्भकारसूपकारचर्मकारमालाकार-गन्धिकनापितताम्बूलिकतैलिकतुन्नवायधीवरादीनां संघानामुल्लेखा विद्यन्ते। व्यापारिणां संघानां नेतारः ज्येष्ठा इति ख्याता राज्ञा नियुक्ताः। संघप्रमुखः श्रेष्ठीति प्रसिद्धः।

खीष्टाब्दस्य प्रारम्भिकयुगतः श्रेणीनां प्रतिष्ठा संवर्धिता दृश्यते। श्रेणी-विवादमधिकृत्य श्रेणीविधानानुरूपं न्यायकरणमिति मनुना प्रतिपादितम्। संघहितार्थमायोजनं सम्पादयितव्यमिति प्रजासु राजकीयनियोगः प्रसिद्धः।[१] संघेषु समृद्धिशालिनां प्रजानां धनं संवर्धनाय निक्षितम्। धार्मिकसंस्थानां संचालनार्थं धनं संघेषु निक्षितं सुविन्यस्तं मतम्।[२]

संघानां शासनविधिः सर्वेषां सदस्यानां सम्मत्या प्रावर्तत। संघस्य प्रधानः सर्वैः सदस्यैर्निर्वाचितः। तस्य साहाय्यार्थं द्वौ त्रयः पंच वा सहायाः कार्य-चिन्तका इति नाम्ना बभूवुः। तेषां समितिः संघस्य शासनव्यवस्थामकरोत्।[३] संघे स्वेच्छाकारिताया अवसरो नासीत्। संघसदस्याः स्वेच्छाचारिणां बहिष्कारं कुर्वन्ति स्म। यदा कदा राजाऽपि संघविवादे हस्तक्षेपमकरोत्। तथा हि बृहस्पतिः—

मुख्यैः सह समूहानां विसंवादो यदा भवेत्।
तदा विचारयेद्राजा स्वधर्मे स्थापयेच्च तान्॥

राजा स्वयमेव संघानां गतिविधेः प्रवृत्तेश्च पर्यवेक्षणमकरोत्।

अमरकोशस्य शूद्रवर्गे तत्कालीनसंघानामुल्लेखो विद्यते। तथा हि—

कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः।
कुलकःस्यात् कुलश्रेष्ठी ॥

धार्मिकसंस्थानाभ्युदयाय संघानां प्रवृत्तिः प्रशस्यैव। प्राचीनयुगे संघैः मन्दिराणि निर्मापितानि, तेभ्य आर्थिकसहायता प्रदत्ता, यज्ञकर्माणि च व्यवस्थापितानि।

---

१. मनुस्मृतौ ८.४१, २१६
२. Epigraphia Indica Vol VIII P. 82-86
३. बृहस्पतौ १७.६, १०, १७

# मनोविनोदाः

मनोविनोदाय स्वाभाविकी प्रवृत्तिः भवति मानवानाम्। आसृष्टेः बहुविधैरुपायैः मानवानां मनोविनोदा बभूवुः। संस्कृतेः प्रगत्या सह मनोविनोदानां प्रतिष्ठा मानवानां सर्वेषु मंगलमयायोजनेषु बभूव। सर्वेषु हर्षोल्लासादिक्षणेषु विविधप्रकाराणां मनोविनोदानां करणमावश्यकं मतम्। तथा हि यज्ञविधानेषु, संस्कारसमारम्भेषु, देवार्चनासु, युद्धप्रसङ्गेषु नृत्यगीतवाद्याभिनयादीनामायोजनं कृतम्। अपरं च विश्रामकालं सानन्दं व्यत्येतुं मनोविनोदाः श्रेष्ठसाधनानि गणिताः। कतिपयमनोविनोदानां लाभप्रदायिस्वरूपाणि प्रशस्यानि दृश्यन्ते। तथा हि वनविहारजलविहारमल्लयुद्धमृगयादिकं स्वास्थ्यसंवर्धनाय, नृत्यसंगीतवाद्याभिनयकथादिकं कलाविलासाय समाजगोष्ठीवसन्तोत्सवकौमुदीमहोत्सवादिकं नागरिकतायाः विकासाय च बभूवुः। यद्यपि नवयुगे द्यूतादीनां विनाशात्मकत्वमेव प्रकाशितम्, किन्तु प्राचीनयुगे तेषामपि बहुगुणा अनुसंहिताः। एतेषु मनोविनोदेषु कलात्मकानामभिनयनृत्यसंगीतवाद्यादीनां श्रेष्ठत्वं प्रसिद्धमेव।

## नाट्याभिनयः

नाट्याभिनये सर्वेषां मनोविनोदानामेवान्तर्भावो दृश्यते। संस्कृत्या सह नाट्यस्य समारम्भो बीजरूपेण कल्पितुं शक्यते। नाट्याभिनयस्य प्राथमिकविकासस्य परिचयो ज्ञातुं न शक्यते। सर्वप्रथमं वैदिककाले नाट्याभिनयस्य प्रतिष्ठा यज्ञविधाने दृश्यते। तथा हि राजसूययज्ञे गविष्टिमभिनयन् यजमानो राजा सम्बन्धिनमपि राजानं प्रत्याक्रमणं कृतवान्।[१] विष्णोर्वामनरूपेणासुराणां छलनं विदितमेव। वैदिककालीनाः शैलूषा नाटकपात्राण्येव प्रतिभान्ति।[२] पाणिनिना नटसूत्राणां कतिपयरूपकाणां चोल्लेखः कृतः।

---

१. शतपथब्राह्मणे ५.४.३.१; तैत्तिरीयसंहितायां १.८.१५
२. वाजसनेयिसंहितायाम् ३०.६; तैत्तिरीयब्राह्मणे ३.४.२.१

रामायणमहाभारतयुगे नाट्याभिनयस्य प्रगतिर्बभूव। युधिष्ठिरस्य राजसूययज्ञे नटनर्तकैः प्रस्तुतानि मनोरंजनानि दर्शनीयानि बभूवुः। जातकेषु नटैः प्रस्तुतानामभिनयानामुल्लेखा विद्यन्ते।[१] परेषां चरितानामभिनयस्योल्लेखः चुल्लवग्गे दृश्यते।[२]

खीष्टतश्चतुर्थशताब्दं प्रागर्थशास्त्रानुसारं कुशीलवसंघस्य सुव्यवस्थाऽऽसीत्।[३] अपरं च मनोरंजनकर्तृषु नटकुशीलवाः परिगणिता दृश्यन्ते। नटानां शिक्षणार्थं राजकीयव्यवस्थाऽवर्तत। रंगोपजीविन्यः कुमारिकाः नाट्ये शिक्षिताः। गणिकापुत्रा अभिनयकर्मणि शिक्षिता रंगोपजीविनः कृताः।[४]

खीष्टतो द्वितीयशताब्दं प्राग् भरहुतसाँची-स्थानादिषु स्तूपेष्वभिनयात्मकप्रतिकृतय उत्कीर्णाः दृश्यन्ते। तत्र कतिपयबोधिसत्त्वानां समग्रजीवनकथाः पात्राणां सजीवहावभावात्मकमुद्राभिः प्रदर्शिताः।[५]

नाट्यशास्त्रे सर्वप्रथमं नाट्यस्य रूपं व्यवस्थितं दृश्यते। तदनुसारं देवर्षिगन्धर्वादयः सर्वेऽपि नाट्याभिनयस्योन्नतये जातानुरागा बभूवुः। नाट्यस्य प्रयोगप्रवृत्तीनां तस्मिन्युगे वैविध्यमपि विनिश्चितम्। तथा हि—

नैकान्ततोऽत्र भवतां देवानां चापि भावनम्।
त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम्॥
क्वचिद्धर्मः क्वचित्क्रीडा क्वचिदर्थः क्वचिच्छ्रमः।
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः॥
धर्मो धर्मप्रवृत्तानां कामः कामार्थसेविनाम्।
निग्रहो दुर्विनीतानां मत्तानां दमनक्रिया॥
क्लीबानां धाष्ट्र्यजननमुत्साहः शूरमानिनाम्।
अबोधानां विबोधश्च वैदग्ध्यं विदुषामपि॥

---

१. कण्णवेरजातके ३१८ २. चुल्लवग्गो १.१३.२ ३. अर्थशास्त्रे पीडनवर्गप्रकरणात् ४. अर्थशास्त्रे गणिकाध्यक्षप्रकरणात् ५. भरहुते मृगजातकदृश्यं साँचीस्थ-छद्दन्तजातक दृश्यं चादर्शरूपेण प्रतिष्ठिते।

नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम् ।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥
दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम् ।
विश्रान्तिजननं काले नाट्यमेतन्मया कृतम् ॥
न तच्छ्रुतं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत्कर्म यन्नाट्येऽस्मिन्न दृश्यते ॥
देवानामसुराणां च राज्ञामथ कुटुम्बिनाम् ।
ब्रह्मर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम् ॥
वेदविद्येतिहासानामाख्यानपरिकल्पनम्
विनोदकरणं लोके नाट्यमेतद्भविष्यति ॥ प्रथमाध्यायतः

अभिनयाय विशाला नाट्यमण्डपा रचिताः, तद्यथा ज्येष्ठमण्डपोऽष्टोत्तरशतहस्तायामो बभूव। नाट्यमण्डपस्य भित्तिषु चित्रकर्मप्रसाधनं कृतम्, मणयोऽपि खचिताः, यन्त्रजालगवाक्षादीनां व्यवस्था कृता।[1]

पूर्वरंगविधानेनाभिनयस्य सौष्ठवपूर्णप्रारम्भः कृतः। प्रथमं तावद्वाद्यायोजनं गायनं च, पश्चात् नान्दीपाठाः नृत्यं च समारब्धानि। अन्ततः सूत्रधारपारिपार्श्वकादीनां संलापः नाट्यविषयस्य प्रकाशनं च कृते।[2]

नाट्याभिनयाश्चतुर्विधाः—आङ्गिकः, वाचिकः, आहार्यः सात्त्विकश्च। आङ्गिकोऽपि त्रिविधः—शारीरः मुखजः चेष्टाकृतः। तत्र शारीराभिनयेऽङ्गानामनेकानेकगतिस्थितिविधानानामभिव्यक्तयो कृताः। तद्यथा नेत्रस्य षट्त्रिंशद्विधानानि परिगणितानि। तदनुसृत्य दर्शनस्याष्टौ भेदा उपकल्पिताः। नेत्रताराभिरष्टविधानि पुटकर्माणि, भ्रूभिः सप्तविधानि भ्रूकर्माणि च व्याख्यातानि। अनया दिशा नाट्यविनोदस्य सूक्ष्मकलातत्त्वाभिनिवेशः प्रदर्श्यते।[3] तथा हि—अभिनयदृष्ट्या शिरोहस्तोरःपार्श्वकटीपादाः प्रधानाङ्गानि। नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि। तेषां सर्वेषामभिनयकर्माणि सूक्ष्मरूपेण व्याख्यातानि।

१. नाट्यशास्त्रे द्वितीयाध्यायतः
२. नाट्यशास्त्रे पंचमाध्यायतः ३४. १६७-२०६ ३. नाट्यशास्त्रेऽष्टमाध्यायतः

सर्वेलौकिकव्यवहारा रंगे दर्शनीया भवन्ति। तत्तेषां सम्पादनविधिः शास्त्रीयविधानैः नियतः। कस्मिन्नभिनये केषामङ्गानां कीदृशी गतिर्भवेदिति चारीकरणमण्डलाङ्गहारादिभिरभ्यसनीयम्। लौकिकव्यवहारप्रदर्शनसामर्थ्य-मङ्गहारादिषु व्यायामेन जायते। तदधिकृत्य नाट्यशास्त्रे प्रोक्तम्

अचलैर्मधुरैर्गात्रैश्चतुरस्रेण वक्षसा।
व्यायामं कारयेद्धीमान्नरमङ्गक्रियात्मकम्॥
एवं व्यायामसंयोगे कार्यश्चारीकृतो विधिः। १०.१०१-१०२

वागभिनयो नाट्यपुरुषस्य शरीरं मतम्। रंगे वचनविन्यासः व्याकरण-छन्दःशास्त्रानुसारं शुद्धो भवितव्यः। काव्यबन्धस्य समीचीनस्वरूपं भरतेन निर्दिष्टम्—

मृदुललितपदाढ्यं गूढशब्दार्थहीनम्
जनपदसुखबोध्यं युक्तिमन्नृत्ययोज्यम्।
बहुकृतरसमार्गं सन्धिसन्धानयुक्तम्
भवति जगति योग्यं नाटकं प्रेक्षकाणाम्॥ १७.१२४

पात्राणां भाषा तेषां मातृभाषैव भवितव्या। अतः प्राकृतभाषाणामपि नाट्ये प्रयोगो निर्धारितः। रसानुसारमपि पाठ्यं समीहितम्। यथा हास्य-शृङ्गाराभ्यां मध्यमपंचमस्वरौ। नाट्याभिनयवाक्यानां सर्वजनमनोहारित्वं भरतेन प्रतिष्ठितम्। तथा हि—

वाक्यैः सातिशयैर्हृद्यैर्मधुरैर्न तु निष्ठुरैः।
हितोपदेशसंयुक्तैः प्राज्ञः कुर्वीत नाटकम्॥ २२.२८६

आहार्येणाभिनेतॄणां वेश-भूषा, मानवेतरप्राणिनां प्रतिमाः, नदीपर्वत-वनादीनां चित्राणि च समाविष्टानि। एभिराहार्यैरभिनेतॄणां पदानि परिस्थितीनां भावविघटनानां च स्वरूपाणि विद्यन्ते स्म। अभिनेतॄणां वेशैः रंगैः श्मश्रुरचनादिभिश्च तेषामभिनीतपात्राणां देशजातिव्यवसायादीनां परिचयः प्राप्यते। संजीवाहार्यैरपदद्विपदचतुष्पदादीनां पशूनां रंगे आनयनं बभूव।

नाट्ये सत्त्वाभिनयस्य प्राधान्यमासीत्। सत्त्वाभिनये रसभावादीनां निष्पत्तये मनसः समाधिना रोमांचाश्रु-स्वरभेद-स्तम्भ-स्वेद-वेपथु-वैवर्ण्य-प्रलय-भावादीनां प्रदर्शनमक्रियत।[१] अभिनेतॄणां वरणाय व्यवस्था कृता। तथा हि—

सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शनाः।
कुमारराजभूमीषु प्रयोज्या भरतोत्तमाः॥ ३५.११

प्राचीनयुगेऽपि कतिपयपुरुषाः स्त्रीभूमिकास्त्वभिनयन्ति स्म। नाट्यशास्त्रे चित्राभिनयस्य वैशिष्ट्यं प्रतीयते।[१] चित्राभिनयस्तु शरीरस्य विविधाङ्गानां विभिन्नगतिभी रात्रि-प्रदोष-दिवस-जन्तु-जलाशय-दिशा-ग्रह-नक्षत्र-चन्द्र-ज्योत्स्ना-वायु-रस-गन्ध-सूर्य-सिंहर्तु-पर्वत-वनवृक्षगृहादीनामभिव्यक्तिः क्रियते। तथा हि—

कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ।
सिंहर्क्ष-वानर-व्याघ्र-श्वापदानां निरूपणम्॥ २५.१८
शिखिनः सारसा हंसाः स्थूला येऽन्ये च पक्षिणः।
पक्षाङ्गोदारगतिभिरभिनेयाः प्रयोक्तृभिः॥ २५.६७

दिवसस्य विविधभागा विभिन्नविषयाणां रूपकाणां प्रयोगाय सम्प्रधारिताः। तथा हि—

यच्छ्रोत्ररमणीयं स्याद्धर्मोत्थानकृतं च यत्।
पूर्वाह्णे तत्प्रयोक्तव्यं शुद्धं वा विकृतं च यत्॥
सत्त्वोत्थानगुणैर्युक्तं वाद्यभूयिष्ठमेव च।
पुष्कलं सत्त्वसंयुक्तमपराह्णे प्रयोजयेत्॥
कैशिकीवृत्तिसंयुक्तं शृंगाररससंश्रयम्।
नृत्तवादित्रगीताढ्यं प्रदोषे नाट्यमिष्यते॥
यत्तु माहात्म्यसंयुक्तं करुणाप्रायमेव च।
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम्॥
२८.८०–८३

---

१. अङ्गाद्यभिनयस्यैव यो विशेषः क्वचित्क्वचित्।
अनुक्त उच्यते चित्रः स चित्राभिनयः स्मृतः॥ २५.१

लोकसंग्रहापेक्षयाऽभिनेयविषयाणां समीचीनत्वं पर्यालोचितम् । यथा

यदन्तःपुरसंबद्धं काव्यं नाटकसंश्रयः ।
शृंगाररससंयुक्तं तदाप्येष विधिर्भवेत् ।।
न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता ।
केनचिद्वचनार्थेन छेदमत्र प्रयोजयेत् ।।
यदा स्वपेदर्थवशादेकाकी सहितोऽपि वा ।
चुम्बनालिङ्गनादीनि रंगमध्ये न कारयेत् ।।
भोजनं सलिलक्रीडां तथा लज्जाकरं तु यत् ।
एवंविधं भवेद्यद्यत्तत्तद्रङ्गे न कारयेत् ।।
पितृपुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् ।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ।।

२२.२८३—२८५,२८७-२८८

ख्रीष्टाब्दस्य प्रथमशतकात् लिखितरूपकाणामुपलब्धिर्दृश्यते । अश्वघोष-भास-कालिदास-हर्ष-भवभूति-भट्टनारायण-शूद्रक - राजशेखरादयः प्राचीनयुगे महानाटककारा बभूवुः । एषां महाकवीनां रूपकाणि राजाश्रयेण समुपलब्धप्रतिष्ठानि राज्ञां नाट्यशालासु प्रायशोऽभिनीतानि च । तत्रत्य विदुषामपि मनोरंजनाय नाट्यमभूत् । कालिदासेन नाटकस्य गौरवं प्रतिष्ठापयता प्रोक्तम्

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषम्
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधकम् ।।[1]

उपर्युक्तनाट्यप्रणाली प्रायशो राजाश्रितनटानामभिनेयान्येव पर्यालोचयति । सुदूरप्राचीनकालत आधुनिकरामलीलावत् विशेषरूपेण स्वाभाविकतामादधानं नाट्यं प्रवर्तते । न तत्र नाट्यशास्त्रानुसारि नेपथ्यं

१. मालविकाग्निमित्रे प्रथमाङ्के ।

प्रेक्षागृहं च वर्तते । अभिनयस्यावश्यकतानुसारं नाट्यभूमिः परिवर्तनक्षमा दृश्यते । रंगोऽपि कार्यानुसारं स्वल्पो विशालतरो वा क्रियते । ईदृशस्य स्वाभाविकनाट्यस्याभिनिवेशः कालिदासस्य नाटकेऽपि दृश्यते । तथा हि—अभिज्ञानशाकुन्तले द्वितीयाङ्के मृगयादृश्यं वर्तते । तत्र

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ।।

इदं दृश्यं रङ्गे दर्शयितुं न शक्यते । अस्य प्रदर्शनाय प्राकृतिकस्थली समीचीना प्रतिभाति । अन्यथा कथं सूतः कथयेत्—

आयुष्मन् उद्घातिनी भूमिरिति मया रश्मिसंयमनाद्रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः संवृत्तः । सम्प्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति ।

उत्तररामचरितस्य गर्भनाटकमपि तादृशीं प्राकृतिकस्थलीमपेक्षते ।

## नृत्यं नृत्तं च

नाट्यवदभिनयप्रधानं नृत्यं भवति, किन्तु नाट्ये वाक्याभिनयो रसाश्रयो भवति, नृत्ये च पदार्थाभिनयो भावाश्रयो भवति । नाट्ये सात्त्विकाभिनयस्य प्राधान्यं दृश्यते नृत्ये चाङ्गिकाभिनयस्य प्राधान्यं भवति ।[1] नृत्यस्य स्पष्टोदाहरणं मालविकाग्निमित्रे दृश्यते । तथा हि—तत्र मालविका नर्तकी वर्तते । सा प्रथममुपगानं कृत्वा चतुष्पदवस्तु गायति—

दुल्लहो पिओ मे तस्सिं भव हिअअ णिरासं
अम्हो अपङ्गवो मे परिप्फुरइ किं वामओ ।
एसो सो चिरदिट्ठो कहं उण उवणाइदव्वो
णाह मं पराहीणं तुइ परिगणअ सतिण्हं ।। मा० २.४

---

१. कालिदासानुसारं नृत्यमङ्गसत्त्ववचनाश्रयमपि भवति । रघुवंशे १६.३६

अस्याभिनयः कृतः । तदधिकृत्य प्रोक्तम्—

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥ मा० २.८

रत्नावल्यां द्विपदीगीतस्याभिनयो नृत्यमाध्यमेन वर्णितः ।[१]

नृत्तमभिनयविरहितमङ्गविक्षेपमात्रमेव भवति । तदधिकृत्य भरतेन स्पष्टीकृतम्—

अथोच्यते न खल्वर्थं कञ्चिन्नृत्तमपेक्षते ।
किन्तु शोभां जनयतीत्यतो नृत्तं प्रवर्तितम् ॥
प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः ।
मंगल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम् ॥ ४.२६६-२७०

नृत्ते करणानां वैशिष्ट्यं वर्तते ।[२] करणं तु—

हस्तपादसमायोगो नृत्तस्यकरणं भवेत् ॥ ४. ३०
षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा ।
करणैरिह संयुक्ता अङ्गहारा इति स्मृताः ॥ ४.३३

करणाङ्गहाराभ्यां सह नृत्तं चतुरो रेचकानपेक्षते । रेचकस्तु पादकटिहस्तग्रीवाणां वलनमुद्वहनं चलनं वा करणाद्भिन्नः[३] । नृत्ते हस्तादीनां गतिस्तालयाश्रया भवति ।

नृत्तस्य नृत्यस्य च द्वौ भेदौ—ताण्डवः लास्यं च सुकुमारोद्धतभेदेन भवतः । पार्वत्याः सुकुमारं लास्यं शिवस्योद्धतस्ताण्डवश्च सुप्रसिद्धे ।[४]

---

१. रत्नावल्यां १.१२ पश्चाच्च ।

२. करणानामष्टोत्तरशतभेदा नाट्यशास्त्रे ४.३४-५५, ६२-१६६ व्याख्याताः । तेषां परस्परसंयोगेनाङ्गहाराणां रचना जायते, अंगहाराणां संख्या द्वात्रिंशत् ।तेषां व्याख्या नाट्यशास्त्रे ४.१७४—२४८ वर्तते ।

३. नाट्यशास्त्रे ४.२५०—२५१

४. रेचकैरङ्गहारैश्च नृत्यन्तं वीक्ष्य शङ्करम् ।
सुकुमार प्रयोगेण नृत्यन्तीं चैवपार्वतीम् ॥ ४.२५६
नृत्तप्रयोगः सृष्टो यः स ताण्डव इति स्मृतः ॥ ४.२६६

नृत्यकलायाः समारम्भः सुदूरप्राचीनकाले समभवत्। प्रस्तरयुगीनेषु कतिपयचित्रेषु प्राचीनतमनृत्यस्य स्वरूपमधुनाऽपि दृश्यते। नृत्तस्य प्राचीनतम स्पष्टस्वरूपं सिन्धुसभ्यतायुगीनाभिर्नर्तकीनां मूर्तिभिर्लभ्यते। ताभ्यः मूर्तिभ्यो नर्तनकाले तासां नर्तकीनां शरीरस्यानावृतत्वं प्रतिभाति। नर्तकानां मूर्तयोऽपि प्राप्यन्ते। नर्तनमाध्यमेन हावभावादीनामभिव्यक्तिरक्रियत। काललयाश्रितं नृत्तमपि प्रचलितमासीत्। नृत्येन सह वाद्यस्य संगतिः कृता। सामूहिकनृत्यस्य प्रचलनं तदासीत्।

शोभनवस्त्रावृता उषःस्वरूपधारिण्यो नर्तक्यो वैदिकयुगे सुप्रतिष्ठिता दृश्यन्ते। नृत्येन सहाघाटिवाद्यस्य संगतिः कृता। यज्ञावसरे मनोरंजनाय वंशनर्तिनां वंशावलम्बनेन नर्तनमायोजितम्। पुरुषाणां नृत्यं प्रचलितमासीत्।

महाभारतयुगे राजकुलेषु नृत्यस्य महती प्रतिष्ठा दृश्यते। स्वयमर्जुनो नृत्यमशिक्षत। राजकुमारीणां नृत्याचार्याः शिक्षका बभूवुः। राजकुलस्य परिचारिका अपि नृत्यविशारदा बभूवुः। युधिष्ठिरस्य राजसूययज्ञावसरे नर्तकसमुदायो दर्शकानां मनोरंजनमकरोत्। नृत्यगीतादिविशारदा गन्धर्वाः प्रतिदिनं यज्ञकर्मणि समाप्ते स्वकलानां प्रदर्शनमकुर्वन्।

रामायणानुसारमयोध्याकिष्किन्धालङ्कादिषु नगरीषु नागरिकाणां राज्ञां च मनोरंजनाय प्रतिदिनं नृत्यायोजनं कृतम्। राज्ञां प्रातःकाले जागरणाय नर्तका नियुक्ताः। गणिका नृत्यसंगीतादिषु निपुणाः बभूवुः। ताभ्यो मनोरंजनाय प्रतिरात्रं शतकार्षापणशुल्को दातव्य आसीत्। जैन-बौद्धसाहित्यानुसारं तत्कालीन समाजे गणिकानां प्रतिष्ठा समधिकासीत्। राजधानीषु काचित् प्रमुखगणिका बभूव। राजधान्याः ललामभूतैव सा गणिका बभूव।

न केवलं मनुष्याणामपितु हस्तिनामपि नृत्यशिक्षणं समभवत्। ग्रीकलेखक एरियनः लिखति—I have myself actually seen an elephant playing on cymbals, while other elephants were dancing to his strains : a cymbal had been attached to

each foreleg of the performer and a third to what is called his trunk, and while he beat in proper time those on his two legs. The dancing elephants all the while kept dancing in a circle, and as they raised and curved their forelegs in turn they too moved in proper time, following as the musician led.[१]

मयूरनृत्यं तु शाश्वतरूपेण प्रसिद्धमेव ।

नृत्यस्यान्येऽपि बहवो भेदा दृश्यन्ते । तथाहि—अर्धाङ्गनृत्ये शरीरस्यैकार्धस्य सर्वाण्यङ्गानि नर्तनशीलानि बभूवुः। अपरार्धस्याङ्गानि निश्चलानि बभूवुः।[२] देवानां परितोषार्थं नृत्यायोजनस्य कथा दशकुमारचरिते लभ्यते। तथा हि कन्दुकोत्सवे कन्दुक-क्रीडितेन देवी विन्ध्यवासिनीमाराधयितुं कन्दुकावती भगवतीमभिवन्द्य कन्दुकममन्दरागरूषिताक्षमनङ्गमिवालम्बत। लीलाशिथिलं च भूमौ मुक्तवती। मन्दोत्थितं च किंचित्कुंचिताङ्गुष्ठेन प्रसृतकोमलाङ्गुलिना पाणिपल्लवेन समाहत्य हस्तपृष्ठेन चोन्नीय, चटुलदृष्टिलाञ्छितं स्तबकमिव भ्रमरमालानुविद्धमवपतन्तमाकाश एवाग्रहीत्। अमुञ्चच। मध्यविलम्बितलये द्रुतलये मृदुमृदु च प्रहरन्ती तत्क्षणं चूर्णपदमदर्शयत्। प्रशान्तं च तं निर्दयप्रहारैरुदपातयत्, विपर्ययेण प्राशमयत्। पक्षमृज्वागतं च वामदक्षिणाभ्यां कराभ्यां पर्यायेणाभिघ्नन्ती शकुन्तमिवोदस्थापयत्। दूरोत्थितं च प्रपतन्तमाहत्य गीतमार्गमारचयत्। प्रतिदिशं च गमयित्वा प्रत्यागमयत्।

परवर्तियुगे राज्ञां सामन्तानां च मनोरंजनाय प्रायशोऽसंख्या नर्तक्यो नियुक्ताः। तासां बहुविधानि नृत्यानि बभूवुः। नर्तकीनां नृत्यमाध्यमेन मृगयापराणां पुलिन्दानामनुकरणं वेशभूषारंगादीनां संस्करणैः दृश्यते।

---

१. M' Crindle Ancient India p. 221.

२. सुरुचिजातके ४८६

अपरं च योगिनीनृत्यमाध्यमेन लय-प्रदर्शनं कतिपयाभिर्नर्तकीभिः कृतम्।[१] नर्तकीनां नेतृत्वे सामन्तवधूनामुत्सव-यात्रा कृता।[२] राजकन्यकाः राजभवनस्य मण्डपे नृत्तस्य सार्वजनिकं प्रदर्शनं कुर्वन्ति स्म। राजकुमारीणां विवाहयोग्यता तासां नृत्तपरीक्षयाऽपि निर्णीता।[३]

पौराणिकयुगे देवार्चनाय नृत्यस्य श्रेष्ठसाधनरूपेण ग्रहणमभूत्। भक्तानां नृत्यं प्रसिद्धम्। कृष्णस्य कालियदमननृत्यं महारासनृत्यं च लोकप्रियम्। महारासे कृष्णो नायको गोपिकाश्च नायिका बभूवुः। कृष्णस्य गायनमनुसृत्य गोपिका अनृत्यन्त। भागवते बालनृत्यस्य सांगोपाङ्गनिदर्शनं दृश्यते।[४]

जैनसंस्कृतौ स्वयमेवेन्द्रो नाट्यस्य नृत्यस्य च प्रवर्तकः। तत्रेन्द्रस्य नर्तनं कृष्णस्य राससमानं प्रतिभाति। इन्द्रस्याप्सरसः नर्तनशीलाः। नृत्यस्याभिनवविकासो दृश्यते। तथा हि सूचीनाट्यं वंशयष्टिनाट्यं विशिष्टम्। महोत्सवानामवसरे सर्वे पुरवासिनः नर्तनशीला बभूवुः।

भारतीयशिल्पकलायां नृत्यस्य महती प्रतिष्ठा दृश्यते। प्राचीनयुगस्य चित्रावलीमूर्तिपट्टेषु बहुविधानि नृत्यानि दर्शितानि।

## संगीतम्

संगीतस्य प्राकृतिकस्वरूपमनादिकालात् प्रवर्तितम्।[५] ब्रह्माण्डे प्रायः सर्वत्र पशुपक्षिणां संगीतं श्रूयते। प्रकृतेः संगीतं समाहृत्य तस्मात्प्रेरणां वा प्राप्य मानवोऽपि विशेषसंगीतमयोऽभूत्। तथा हि सप्त स्वराः पशुपक्षिध्वनिमनुकुर्वन्ति—

---

१. कर्पूरमंजर्यां चतुर्थेऽङ्के। २. कथासरित्सागरे ४.३.८२-८५

३. कथासरित्सागरे १२.४ ७३–७८;६.५.६२ ४. भागवते १०.१८

५. तद्दृश्यते राजकुलेऽपि प्राकृतिकसंगीतं प्रति रुचिः। तथा हि—

राजभवनमयोध्यायां—

शुकबर्हिणसंघुष्टं क्रौञ्चहंसरुतायुतम्।
सारसैश्च मयूरैश्च निनदद्भिर्विराजितम्।।

अयोध्याकाण्डे १०.१२;११.३५

षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् ।
अजाविकौ च गान्धारं क्रौञ्चो नदति मध्यमम् ॥
पुष्पसाधारणे काले कोकिलो रौति पंचमम् ।
अश्वस्तु धैवतं रौति निषादं रौति कुंजरः ॥

रागा अपि प्राकृतिकवातावरणैः सम्बद्धाः । भैरवरागः प्रातःकालीनछटां मानसपटले स्फोटयति, पशूनां कलरवस्य, पुष्पाणां गन्धस्य माधुर्यस्य, नवतायाश्च समारम्भं निदर्शयति च । हिन्दौलरागस्तु वासन्तिकमधुरिमाणं कुसुमराशेः सौरभं च श्रोतृणां मनसि निदधाति । दीपके ग्रीष्मसन्तापो भवति । श्रीरागेणास्तप्रायदिवसस्याभिव्यक्तिः क्रियते । मेघरागेण वर्षर्तोः मेघागमनस्य च प्रवृत्तयः सृष्टाः ।

वैदिकयुगे गायत्रीप्रगाथादीनां छन्दसां गायनप्रवृत्तिः दृश्यते ।[२] उद्गाता यज्ञावसरे सामवेदस्य गायनमकरोत् । सामवेदस्यार्चिकभागस्य श्लोका विद्यार्थिनां गायनशिक्षणाय बभूवुः । आर्चिकस्य पंचाशीत्युत्तरपंचशतर्चः सप्तत्युत्तरैकादशशतसाममाध्यमेन गेयाः । तत्र सामवेदस्य गीतानां त्रयो भागाः – प्रस्तावः, उद्गीथः, प्रत्याहारश्च । तेषां गानं क्रमशः प्रस्तोतारः उद्गातारः प्रतिहर्तारश्च कुर्वन्ति स्म । गायनकाले स्वराभिव्यक्तिः हस्ताङ्गुलीनां गत्या कृता । कतिपयसाम्नां गानं केवलमरण्ये कृतम् । ततो ग्रामगेयगानमरण्यगेयगानं च प्रावर्तताम् । वैदिकसंहितासु प्रायः देवाभिप्रायाणां स्तुतीनां संकलनं दृश्यते । तेषु मध्ये क्वचित् कृषकाणां गीतानि संगृहीतानि । यथा—

शुनं नः फाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः ।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् ॥

ऋग्वेदे ४.५७.८

---

२. गायत्रीप्रगाथयोरुद्भवः 'गै' धातोः वर्तते । अतः तयोः गायनं सिद्धम् । पाणिनियुगे गाथकः, गायनः पुरुषगायकस्य, गाथिका-गायनी स्त्रीगायिकानां संज्ञाः द्रष्टव्याः । ३.१.१४६-१४७

यज्ञमाध्यमेन संगीतविद्यायाः विशेषोन्नतिरभूत्। अश्वमेधसत्रे वर्षपर्यन्तं प्रतिदिनं यजमानस्य चरितगाथाः गीताः। ब्राह्मणगायका राज्ञ औदार्यमधिकृत्य क्षत्रियगायकास्तु तस्य पराक्रममधिकृत्य गायन्ति स्म। तस्मिन्युगे गाथानाराशंसीसाहित्यस्य वैपुल्यमभवत्। राज्ञां चरितगाथागायनस्य प्रचलनं महाभारत युगेऽपि दृश्यते।[१]

महाभारतानुसारं युद्धकाले सैनिकानां मनोरंजनार्थं मंगलगीतानां गायनमायोजितम्।[२] पाणिस्वनिकमागध-मधुपर्किकवैतालिक-सूतादयः राज्ञां मनोरंजनार्थं स्तुतिगानमकुर्वन्। तेषां गीतेषु राजवंशविरुदावली व्याख्याता।[३] शयनात्प्राक् राजकुमाराणां मनोरंजनार्थं गायिकाः संगीतं प्रास्तुवन्।[४]

महाभारतयुगे गन्धर्वकिन्नरादीनामार्येतराणां संगीते परमप्रावीण्यं दृश्यते। अर्जुनस्य गुरुः चित्रसेनो गन्धर्व आसीत्। स एवार्जुनो विराटस्य राज्ञः संगीतशालायाः प्रधानाचार्यः सन् राजकुमारीमुत्तरां संगीतमशिक्षयत्।

रामायणानुसारं रामस्य राजसूययज्ञकाले यजमानस्य विरुदावली गेयाऽऽसीत्। सा तु कुशलवाभ्यां गीता। तयोर्गायनस्य वैशिष्ट्यं निदर्शितम्—

इमानि च फलान्यत्र स्वादूनि विविधानि च।
जातानि पर्वताग्रेषु चास्वाद्यास्वाद्य गायताम्॥
न यास्यथः श्रमं वत्सौ भक्षयित्वा फलानि वै।
मूलानि च सुमृष्टानि न रागात् परिहास्यथः॥
इमास्तन्त्रीः सुमधुराः स्थानं वापूर्वदर्शनम्।
मूर्छयित्वा सुमधुरं गायेथां विगतज्वरौ॥
गायेथां मधुरं गेयं तन्त्रीलयसमन्वितम्।

लङ्कायामपि राजभवनेषु हनुमान्—

---

१. द्रोणपर्वणि ५७.१०; ६७.१४
२. द्रोणपर्वणि ७२.१२
३. द्रोणपर्वणि ८२.२-३
४. सभापर्वणि ५८.३६

शुश्राव मधुरं गीतं त्रिस्थानस्वरभूषितम् ।[१] सुन्दर० ४.१०

न केवलं मानवानां प्रलोभनाय संगीतमभवत्, अपितु मृगादीनामपि मृगयार्थं प्रलोभनं कृतं संगीतेन ।[२] हस्तिकान्तावीणा सुप्रसिद्धासीत् ।

बौद्धयुगे जातकानुसारं संगीतस्य प्रसरणं पर्याप्तमेव साधारणजनेष्वपि दृश्यते । तत्कालीनाः कतिपयसंगीताचार्याः गुत्तिलः, मुसिलः, सग्गश्च बभूवुः । तेषां विद्यार्थिनः दूरदेशादपि समागताः ।

संगीतशास्त्रस्य वैज्ञानिकं विवेचनं सर्वप्रथमं भरतस्य नाट्यशास्त्रे लभ्यते ।[३] तस्य किंचिद्विकसितं स्वरूपं वायुपुराणे दृश्यते । नागरिकाणां सुखार्थं गीतप्रवृत्तिः कालिदासेनोपलक्षिता—

व्रजतु तव निदाघः कामिनीभिः समेतो
निशि सुललितगीते हर्म्यपृष्ठे सुखेन ।। ऋतुसंहारे १.२८

भारतीयसंगीतकलायाः प्रसरणं विदेशेषु दृश्यते । तथा हि—

In music the Hindus have exerted an immense influence on the west, perhaps through Greece, and also on Asia, where the Indian quarter tones and subtle harmonies can be found every where, as they may be found in Spain and other countries, whither the Arabs carried them.[४]

वैदेशिकसंगीतज्ञा अपि भारतेऽभ्यर्थिताः । भरुकच्छप्रदेशस्य राज्ञे संगीतप्रवीणा यवनरमण्य उपहारार्थं प्रेषिताः ।[५]

---

१. त्रिस्थानानि कण्ठउरः शिरश्च । तद्रामायणेऽन्यत्रापि—

तन्त्रीलयसमायुक्तं त्रिस्थानकरणान्वितम् ।
संस्कृतं लक्षणोपेतं समतालसमन्वितम् ।।
उत्तरकाण्डे ७१.१५

२. गीतशब्देन संरुध्य लुब्धो मृगमिवावधीः । अयोध्याकाण्डे १२.७७

३. नाट्यशास्त्रे २८ अध्याये ४. A Pageant of India p. 126

५. Intercourse Between India and the Western World p. 117

# वाद्यम्

नाट्यस्य नृत्यस्य संगीतस्य च संगतिः वाद्येन भवति। वाद्यं तु संगीतस्य मौखिकं ध्वनिं संवदति। नृत्यापेक्षितः तालः वाद्येनापि व्यक्तः क्रियते। वाद्यस्यापि समारम्भः संस्कृतेरादिकालतः प्रतीयते।

सिन्धुसभ्यतायुगे ढोल-वीणा-कांस्यतालकोटिकानां वाद्यानां प्रचलनं बभूव। वैदिकयुगे नृत्यसंगतावाघाटिः वाद्यते स्म। दुन्दुभिः युद्धवाद्यमासीत्। वीणा वैदिकयुगस्य श्रेष्ठवाद्यमासीत्। वीणायां शततन्तूनां प्रवर्तनमक्रियत। वीणैव वाणोऽभवत्। तस्मात् सप्तधातूनां निःसृतिरभवत्।[१] धातवस्तु स्वरा एव। वीणा स्वरूपानुसारं बहुविधाऽऽसीत्। तस्या विविधानि नामानि प्रचलितान्यभवन्। श्वासापूरणेन शंखवेणुनाडीतूणवादीनां वाद्यं समुत्पन्नम्।

महाभारतयुगे भेरी-मृदङ्ग-पणवानकझर्झरक्रकच-दुन्दुभि-पुष्कर-पटहादयो युद्धोपयोगिनो ढौलस्य भेदा बभूवुः।[२] भेरीतूर्यादीनां निनादं श्रुत्वा सेनाः शस्त्रास्त्रैः सुसज्जिता बभूवुः। युद्धकाले गोविषाणिकगोमुखयोः विविधसन्देशप्रसारायोपयोगोऽभूत्। विजये प्राप्ते बहुमासान् भेरीनिनादेनोत्सवोऽक्रियत। राज्ञां प्रातःकाले जागरणाय मृदङ्गझर्झरभेरीपणवानकगोमुखाडम्बरशंखदुन्दुभीनां वाद्यं प्रास्तूयत।[३]

रामायणानुसारं राजकुलस्य स्त्रीणां वीणाभ्यासः प्रशस्योऽभवत्। तासामन्यानि वाद्यानि पटहमड्डुकवंशविपञ्चीमृदङ्गपणवडिण्डिमाडम्बरादयो बभूवुः। बौद्धसाहित्येऽन्यानि वाद्यानि—पणिस्सर—सम्मतल-कुम्भत्थूण—मूतिङ्गा-मुरजादयो बभूवुः। श्वासापूरणवाद्यानि शंखपणव—वेणुदेण्डिमा—खरमुख--गोधापरिवादेन्तिकाकुटुम्बतिण्डिमादीनि बभूवुः।

भरतानुसारं वाद्यायोजनाय बहवोऽवसरा बभूवुः। तथा हि—

---

१ ऋग्वेद १०.३२.४ २. द्रोणपर्वणि ३६.३१; भीष्मपर्वणि ६६.१७-१६
३. द्रोणपर्वणि ८२.४-६

नास्ति किंचिदनायोज्यमातोद्यं दशरूपके।
रसभावप्रयोगं तु ज्ञात्वा योज्यं विधानतः॥
उत्सवे चैव याने च नृपाणां मंगलेषु च।
शुभकल्याणयोगे च विवाहकरणे तथा॥
......उत्पन्ने संग्रामे शुद्धसंकुले।
ईदृशेषु च कार्येषु सर्वातोद्यानि वादयेत्॥

कतिपयवाद्यानां लोकप्रियत्वं देवानां तदनुकूलप्रवृत्तिभिः समापन्नं दृश्यते। तथा हि शिवस्य डमरुः कृष्णस्य वंशी नारदस्य सरस्वत्याश्च वीणा सर्वत्र प्रतिष्ठिता बभूवुः। राज्ञामपि वाद्यप्रियत्वं दृश्यते। समुद्रगुप्तस्तु स्वयं वीणावादकोऽभवत्। वाद्यानां समारम्भः देवानां परितोषाय सम्मतः। बालकानां वाद्यप्रियता तु शाश्वतरूपिणी दृश्यते। वृक्षाणां पत्रैरपि तेषां वाद्यानि निर्मितानि।[1]

वाद्यस्य प्रयोगं पशुपक्षिणां मृगयायै कुर्वन्तः व्याधाः प्राचीनयुगेऽपि बभूवुः। सततमेकस्वराभ्यासेन पशुपक्षिणो निश्चेष्टाः कृताः गृहीताश्च।

वाद्यानि चतुर्विधानि सदैव बभूवुः। तथा हि—ततं वाद्यं तन्त्रीसमायुक्तं भवति। आनद्धं चर्मणाच्छादितं वर्तते। सुषिरवाद्ये छिद्राणि भवन्ति। घनवाद्यं तु घनत्वविशिष्टं घण्टादिकमेव। एतेषां शतभेदा यथाकालं विकसिताः।

वाद्यानां सामाजिकजीवने प्रधानं स्थानमभवत्। प्राचीनयुगस्य चित्रण-मूर्तिकरणादीनां कलानां माध्यमेन यत्र यत्रामोदमयं सार्वजनिकं जीवनं प्रस्तुतं तत्र तत्र वाद्यानां प्रतिकृतयः तेषां वादनविधिसहिता दृश्यन्ते।

## कथा

मनोरंजनार्थं कस्यापि वस्तुनः कौतुकपूर्णविधिना वर्णनं कथायाः शाश्वतस्वरूपं ज्ञायते। कथाभिः मनोविनोदेन सह सामाजिकचरित्रनिर्माण-

१. भागवते १०.१४.४७

स्योद्देश्यं प्रारम्भतः परिलक्ष्यते । वैदिकयुगीनाः कथाः त्रिविधाः—संघर्षात्मिकाः, उपकारात्मिकाः तथा यज्ञात्मिकाः । देवासुरसंग्रामकथाः संघर्षात्मिकाः सन्ति । देवानामुपकारशीलत्वमुपकारात्मिकासु कथासु संगृहीतम्। यज्ञविधानानां व्याख्यापराः कथा यज्ञात्मिकाः सन्ति । तासां त्रिविधानां कथानां संग्रहो यत्र तत्र ब्राह्मणसाहित्ये दृश्यते ।

परवर्तियुगे कथासाहित्यस्य पुराणेतिहासनाम्ना लोकप्रियः संग्रहोऽभवत्। महाभारतं पुराणानि च तादृशानां कथानां सागरा एव । पौराणिककथासु देवानां तेषामवताराणामृषीणां महापुरुषाणां च चरितगाथाः, तेषां पूजायाः लाभाश्च प्रासंगिकव्रतोपवासादिवृत्तान्तेन सह निबद्धाः । अपरं च भारते प्रायः सदैव पशु-पक्षिसम्बद्धाः कथाः बभूवुः ।

पशुपक्षिभिः सम्बद्धानां कथानां प्रथमो महासंग्रहः बौद्धानां जातकान्येवोपलभ्यन्ते । पश्चात् पञ्चतन्त्रहितोपदेशयोः कथाः विकसिताः । ख्रीष्टाब्दस्यारम्भिकयुगे गुणाढ्येन पैशाचीभाषायां बड्ढकहाओ (बृहत्कथा) लिखिता। तस्याः परवर्तिरूपं कथासरित्सागरे निबद्धम् । जातकपंचतन्त्रादीनां बृहत्कथायाश्च कथाः देशान्तरेषु तत्रत्यसाहित्येषु प्रतिष्ठिताः। भारतीयसामाजिकजीवनेऽपि कथायाः स्थानमुच्चतरमभवत् । अश्वमेधयज्ञावसरे पारिप्लव-कथामाला वीरगाथेति श्राविता । स्वर्गकामाय वाचकाः धार्मिककथा अश्रावयन् । महापुरुषसम्बन्धिकथानां वाचकाः श्रोतारश्च स्वर्गे प्रतिष्ठिता भवन्तीति भारतीया धारणा ।[१]

कवयः कथानां रसोत्कर्षं जानन्त एव काव्यशैलीप्रयोगेण तासां माहात्म्यं समवर्धयन् । तथा हि वाणानुसारं

स्फुरत्कलालापविलासकोमला करोति रागं हृदि कौतुकाधिकम् ।
रसेन शय्यां स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव ॥
हरन्ति कं नोज्ज्वलदीपकोपमैर्नवैः पदार्थैरुपपादिताः कथाः ।
निरन्तरश्लेषघनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव ॥

---

१. विष्णुपुराणस्य प्रह्लादाख्यानप्रशस्तिः ।

तत्र काव्यशैलीमनुगताः वासवदत्ता-कादम्बरी-दशकुमारचरितादयः कथाः विरचिताः। तस्मिन् युगे राज्ञीभ्योऽपि कथावृतान्तज्ञानं पुण्यकथाश्रावण-मितिहासपठनं च गुणा मताः। सम्राजामपि दिग्विजयकाले राजभिरमात्या-दिभिश्च वर्णिताः कथाः मनोरंजनाय बभूवुः।[१] राजसभासु कथा-श्रावणं विज्ञानमिति प्रतिष्ठितम्। कथामाध्यमेन कस्यापि जनस्य कठिनपरिस्थितिषु तस्य समस्यानां समाधानं मार्गप्रदर्शनं च कृतम्। पंचतन्त्रादिभिः राज-कुमाराणामपि नीतिशिक्षा सम्भूता। कथां शृण्वन्तो वियोगिनः सुखं लभन्ते इति विलासिवर्गे कथाप्रचारकारणम्। अतिथीनां मनोरंजनाय मुनयः कथां कुर्वन्ति स्म। राज्ञा सह कथाविदां परिवारोऽभूत्। राज्ञीनां मनोविनोदाय परिव्राजिका नियुक्ताः। धार्मिककथाकारिणः प्रायशो मनीषिण उदारचरिता बभूवुः। कथा प्राचीनभारते दीनहीनानां समृद्धानां च बालानां वृद्धानां च, शयालूनां पथिकानां च सर्वेषां सर्वासु परिस्थितिषु विनोदायोत्थानपथ-प्रदर्शनाय च बभूव।

## राजसभा

राजसभायां विविधविनोदानां प्रतिष्ठाऽभवत्। ऋग्वेदानुसारं विशिष्टमनो-विनोदप्रवणाः जना अमात्यमण्डलस्य सदस्या बभूवुः। उपनिषद्युगे दार्श-निकानां स्पर्धापरायणविवादाः विनोदमपि कुर्वन्ति स्म। कवीनां गाथागाय-नेन राज्ञां मनोरंजनमभूत्। रामायणानुसारं रामस्य राजसभायां लवकुशयोः रामायणगायनं सार्वजनिकमनोविनोदाय बभूव। परवर्तियुगे राजभिर्नियुक्ता राजकवयः राज्ञां प्रशस्तिमतिशयोक्तिपूर्णकाव्यमाध्यमेन कुर्वन्ति स्म, राज-सभासु तां श्रावयित्वा विनोदानुतुल्यं पारितोषिकं लब्धवन्तश्च। दिग्विजये-च्छूनां कवीनां राजसभासु स्वागतमक्रियत। तस्मिन्नवसरे कविसम्मेलनमा-योजितम्। विजयिनां कवीनां रथं स्वयमेव संचालयन् कोऽपि राजात्मानं प्रतिष्ठितमेवामन्यत। सम्मानोऽयं ब्रह्मरथयानमिति ख्यातः। कवीनां ललाट-पट्टे विजयसूचकं स्वर्णपत्रं बद्धम्।

---

१. कादम्बर्यां पृ० ६३,११८

राजसभासु द्यूताष्टापद-परिवादिनीवाद्य-चित्रकरण-काव्यालाप-परिहास-बिन्दुमतीरचना-प्रहेलिकाविचार-शरीराङ्गचित्रण-संगीतादीनि सामन्तानां विनोदसाधनानि बभूवुः।[१] राजकुलविनोदाय वानरकुब्जनपुंसकबधिरवामन-मूकादयो नियुक्ताः। मेषकुक्कुटकुररकपिंजललावकवर्तिकादीनां युद्धं तत्रा-दृश्यत। पक्षिणां पारस्परिकः संलापोऽजायत। सिंहहरिणमयूरसारसादय-स्तत्र प्रदर्शनाय विनोदाय च रक्षिताः। राज्ञो विचित्रपशुपक्षिणामुपहारः सर्वतः समागतः। अपरं च राजसभाविनोदार्थं मल्लयुद्धमस्त्रशस्त्रकलाप्रदर्शनं च बभूवतुः। ईदृशः विनोदः रंगभूमिपरिधौ व्यवस्थापितः। राजसभासु विदूषकाणां स्थानं सुविदितम्।

## समाजो गोष्ठी च

नागरिकाणां मनोरंजनार्थं राजसभावदायोजनानि नगरेषु कृतानि। वैदिक-युगे समन-संस्था स्त्रीपुरुषेभ्य आनन्दोल्लासाय बभूव। तत्रैव कवीनां नव-रचनाः श्रुताः, धनुर्धराणां कलाप्रर्शनं कृतं रथधावनं समारब्धं च।

महाभारते वारणावतनगरस्य समाजोत्सववर्णनेन समाजस्य रमणीयता प्रतिपादिता। परिजनैः सह राजकुमारा अपि तत्रागताः। गायकास्तत्र पुर-स्कृताः। कतिपयदिनानि समाजोत्सवोऽभूत्। रामायणानुसारमयोध्यायाः सुश्रीकता समाजोत्सवैः समवर्धत। तेषु समाजेषु नाट्यनृत्यादीनां वैशिष्ट्य-मभूत्।

सरस्वतीमन्दिरे प्रतिपक्षमेकवारं नृत्यगीतादीनामायोजनं कृतम्। ईदृशेषु समाजेषु देशदेशान्तरेभ्यः समागताः कलाविदः सभाजो बभूवुः। पौराणिकयुगे समाजोत्सवः प्रचलितो दृश्यते। कंसस्य समाजोत्सवः कृष्णादीनां विनोदाय संयोजित इति श्रूयते। तस्मिन्नुत्सवे धनुर्महः मल्लयुद्धं च प्रवर्तितम्।

समाजस्यैव प्रायः लघुरूपा गोष्ठी बभूव। मर्यादितसंख्यकानामेव कृते गोष्ठीनामायोजनं नागरिकाणां गृहेषु गणिकानां गृहेषु वा कृतम्। तत्र नृत्य-नाट्यवाद्यसंगीतकाव्यकथादीनां सुरुचिपूर्णसमारम्भः कृतः।

---

१. कादम्बर्यां ८८ पृष्ठे

## वनविहारः

नगरे नित्यवासश्चित्तं वनोन्मुखं करोति। कृत्रिमैः साधनैः प्राप्तव्यानि बहूनि सुखानि। किन्तु तेभ्यः प्रतिकृतं मनः प्राकृतिकसंश्रयैः विनोदमिच्छति। तस्यां परिस्थितौ वनोपवनेषु पुष्पलतापशुपक्षिणां वन्यानां साधारणं सौरभं सौन्दर्यं च मनोहारि जायते।

जातकयुगीनाय नागरिकाय गृहं पिञ्जरमेव यदा प्रतीतं स प्रेयस्या सह भोजनपानादिभिः सामग्रीभिः सज्जितो यानेनोद्यानं गतवान्। तत्र विलासमयीषु लीलासु दिनमयापयत्।[1] राजानोऽपि स्वानुयायिभिः सहोद्यानविहारं कुर्वन्ति स्म। महाभारतानुसारं राजकुमाराणां घोषयात्रा वनविहाररूपासीत्। तत्र मृगयाऽक्रियत। ईदृशेषु वनविहारेषु रमणीनां सहस्राणि, सपत्नीकाः नागरिकाः, वेश्याः, वन्दिनः, हस्त्यश्वरथयानानि वनाय प्रस्थितानि। तदा वने नवनगरमेवोद्भूतम्। तत्र गोपानां नृत्यगीतादिकं मनोरंजनमभूत्।[2] रामायणानुसारं लङ्कायाः रमणीयवनेषु बह्वो रम्याक्रीडा निर्मिताः।[3] जनपदेषु कुमारीणां सन्ध्याकालीनमनोरंजनायोद्यानानि नियतानि। अयोध्यावासिनस्तु दिनकाले वने विहृत्य सन्ध्यायां सौमनस्येन गृहमागताः। समुद्रतीरेषु पुष्पितवृक्षाणां मध्ये प्रेयस्या सह विहरणस्य प्रचलनमासीत्।[4] पाणिन्यनुसारं भारतस्य पूर्वप्रदेशेषु उद्दालकपुष्पभंजिकावीरणपुष्पप्रचायिकाशालभंजिकादयो वनविहारक्रीडाः प्रचलिताः।

राज्ञां विहाराय प्रमदवनानि व्यवस्थितानि। साधारणजनेभ्यः वनक्रीडैवासीत्।[5] वसन्ततौं वनविहारस्य शोभनत्वमतिशयमासीत्।

खीष्टतः पश्चात् सप्तमशतके वन-विहारस्य शृङ्गारव्यापारोऽतिशयोद्दामोऽभवत्। तत्र युवकयुवतीनां पुष्पावचयः, पल्लवचयनं नायिकानां हावभावाश्च

---

१. कणवेरजातके ३१८ २. वनपर्वणि २३८-२३६ अध्यायतः
३. सुन्दरकाण्डे २.१२ ४. सुन्दरकाण्डे २०.३६
५. अर्थशास्त्रे ५.२ कोशाभिहरणप्रकरणात्

सविशेषं बभूवुः। तत्र पल्लवेषु नखाग्रैः प्रेमपत्रं लिखितम्। पुष्पप्रहारः सर्वेषां मनोरंजनमासीत्।[१]

## जलविहारः

मानवेभ्यो जलक्रीडा स्वाभाविकी प्रतिभाति। वैदिकसाहित्ये अप्सरसां क्रीडाया उल्लेखः पुरूरवसः कथाप्रसङ्गे प्राप्यते। गन्धर्वाप्सरसां जलक्रीडा तदा प्रसिद्धाभूत्। वैदिकयुगे जलोर्मिषु नौकामध्ये आन्दोलनमाध्यमेन प्रेङ्खाऽनुभूता।

परवर्तियुगे राजकीयपुष्करिणीषु जलविहारस्य वर्णनं प्राप्यते। प्रथमं वन-विहारं कृत्वा मध्याह्नकाले जलविहारेणानन्दातिरेको विश्रान्तिश्च प्राप्तौ। विहारकालेऽन्तःपुररमण्यो राज्ञा सह बभूवुः। साधारणजनानां जलविहारो नदीषु नौकयाऽथवा तत्रैव तरणेनाभवत्।

महाभारतयुगे समृद्धिशालिनां जलविहारायोदकक्रीडनकनामकं भवनं जले स्थले च निर्मितम्। गृहेऽस्मिन् भोज्यपानानि रक्षितानि। तदाऽभिनव-राजदम्पतीनां वनविहारजलविहारयोः प्रचलनमासीत्।

राज्ञां जलविहाराय नदीजलेभ्यः हिंस्रजन्तवः विनाशिताः। नौकायामारुह्य प्रथमं राजाऽन्तःपुररमणीनां विहारमपश्यत्। पश्चात् स स्वयमेव ताभिः सह जलक्रीडामकरोत्। कालिदासमुखेन तस्य वर्णनं पठनीयमेव। तथा हि—

परस्पराभ्युक्षणतत्पराणां तासां नृपो मज्जनरागदर्शी।
नौसंश्रयः पार्श्वगतां किरातीमुपात्तबालव्यजनां बभाषे॥
अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम्।
पारिप्लवाः स्रोतसि निम्नगायाः शैवाललोलाँश्छलयन्ति मीनान्॥
तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम्।
श्रोत्रेषु संमूर्च्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम्॥
वर्णोदकैः कांचनशृंगमुक्तैस्तमायताक्ष्यः प्रणयादसिञ्चन्।
तथागतः सोऽतितरां बभासे स धातुनिष्यन्द इवाद्रिराजः॥[२]

---

१. शिशुपालवधे सप्तमसर्गतः  २. रघुवंशे १६.५४-७०

राजभवनदीर्घिकासु जलक्रीडायै मोहनगृहाः रचिताः ।

राज्ञां जलविहारो नागरिकैः सहापि बभूव । सार्वजनिकोऽयं जलविहारः कुमारपालचरिते हेमचन्द्रेण वर्णितः ।

जलविहारं प्रति विशिष्टरुचिरेव प्राचीनकाले जलाशयानामतिशय-रमणीयोपकल्पनादिभ्यः कारणमभूत् । तत्रोपवनवृक्षलतापशुपक्षिणां शोभा कृता । तीर्थानां रचनाऽपि जलविहारायाऽभूत् ।

## मृगया

सुदूरप्राचीनयुगे मृगयाया विशेषावश्यकता जनपदनिवेशनानां हिंसक-पशूनां विनाशार्थमासीत् । पुरा वनानां वनपशूनां च बाहुल्यमासीत् । वन्य-पशून् हत्वा वनमार्गाः सुरक्षिताः । तेषां पशूनां मांस-चर्म-शृंगास्थि-पुच्छ-खुरादीनां च विक्रयेण धनमपि लब्धम् । तत्र बहवो व्यावसायिका एव मृगयवो बभूवुः, किन्तु मनोरंजनार्थं मृगयाकारिणां संख्या नाल्पासीत् । राजाधिष्ठिता मृगया सदैव सुप्रतिष्ठिता बभूव ।

प्रस्तरयुगीनेषु वनवासिनां गुहासु वन्यचित्रेष्वपि मृगयादृश्यानि विद्यन्ते । तेषु चित्राचार्याणां कला मृगयूनामुत्साहस्य मृगयारुचेश्चाभि-व्यक्तिं करोति । व्यावसायिकी मृगया स्वभावतः मनोरंजनपूर्णा भवति ।

सिन्धुसभ्यतायुगीना आखेटका; धनुर्भिः, गोलिकाभिः भल्लासिगदादि-भिश्च मृगयां कुर्वन्ति स्म । मत्स्यग्रहणमपि जालादिभिरक्रियत । वैदिकयुगे विशेषतः आर्येतराणां मृगया दृश्यते । ते मत्स्यपक्षिपशूनां विविधैः कुशलोपायैः ग्रहणं कुर्वन्ति स्म ।

परवर्तियुगे सामूहिकमृगयायाः प्रचलनं दृश्यते । तथा हि—उपद्रव-कारिणां व्याघ्रमहिषाणां मृगयायै द्विसहस्रधनुर्धराः समागताः । उपाया अपि मृगयूनां मनोरंजनपूर्णा दृश्यन्ते । तथा हि—शृगालानां मृगयायै शववत् श्मशाने शयनं कृत्वा तेषु समीपमागतेषु दण्डप्रहारेण तेषां प्राणनिष्कालन विधिः प्रचलितः । मयूराणां ग्रहणाय पालितमयूराङ्गना तेषां प्रलोभनाय नियुक्ता । पालिततित्तिरस्य ध्वनिं श्रावयित्वा समागतानां तित्तिराणां ग्रहणं

कुर्वन्ति स्म कतिपयाखेटकाः। मृगयायै ग्रामसिंहानामुपयोगोऽभूत्।

रामायणयुगीना मृगयाभिरुचिः रामविषयकेण रामायणस्याधोलिखित-श्लोकेन भवति—

निघ्नन्मृगान्कुंजरांश्च पिबंश्चारण्यकं मधु।
नदीश्च विविधाः पश्यन्न राज्यं संस्मरिष्यति॥[1]

दशरथः स्वयमेव मृगयाभिषक्त आसीदिति श्रवणवृत्तान्तेन ज्ञायते। मृगयाकर्मणि स शब्दवेधिबाणप्रयोगमकरोत्। यज्ञदीक्षिता ऋषयोऽपि मृगयाकरणमर्हन्ति स्म।[2] चन्द्रगुप्तमौर्यादीनां मृगयायाः वर्णनं ग्रीकलेखकैः कृतम्। तदनुसारं राजानः सैनिकैः सुरक्षिता एव हस्तिपृष्ठेभ्यो मंचेभ्यो वा मृगयां कुर्वन्ति स्म। राजप्रासादसमीपवर्तिनो जलाशयात् पालित-महामत्स्यानां ग्रहणे कुमारा आनन्दमनुभवन्ति स्म।

गुप्तयुगीनमृगयाया मनोरंजनत्वं कालिदासस्य वर्णनैः परिचीयते—

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम्।
आकर्णकृष्टमपि कामितया स धन्वी बाणं कृपामृदुमनाः प्रतिसंजहार॥
निर्घातोग्रैः कुंजलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान्।
नूनं तेषामभ्यसूयापरोऽभूद्वीर्योदग्रे राजशब्दो मृगेषु॥
तान्हत्वा गजकुलबद्धतीव्रवैरान्काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान्।
आत्मानं रणकृतकर्मणां गजानामानृण्यं गतमिव मार्गणैरमंस्त॥
इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरं धराधिपम्।
परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी॥[3]

मृगयायाः गुणदोषविवेचनं सम्यक्प्रकारेण कृतम्। दोषं विविच्य मृगयां व्यसनमिति मन्यन्ते मनीषिणः। तथा हि—दशरथस्य पाण्डोश्च मृगयायां मुनिकुमारवधः सुविदित एव। प्राणसंशयोऽपि नातिस्वल्पः आसीन्मृगया-याम्। हिंस्रपशूनामाक्रमणैः मरणं दावाग्निभिः प्रज्वलनं मार्गभ्रंशने इतस्ततो

१. अयोध्याकाण्डे ३६.६  २. महाभारते आदिपर्वणि ११८ १२—१५
३. रघुवंशे ६.५७–६६

भ्रमणं कठोरजीवनं दस्यूनां भयं च मृगयां भीषणामेव प्रमाणयन्ति ।[१] चाणक्यसूत्रानुसारं मृगयाशीलस्य राज्ञो धर्मोऽर्थश्चापयातः ।

मृगयागुणानामाकलनं कालिदासमुखेन श्रवणीयम्—

मेदश्च्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥

अभिज्ञानशाकुन्तले २.५

वाल्मीकिना तदेव प्राक् प्रतिपादितम् । वनवासाय प्रस्थानकाले रामः कथयति—

कदाहं पुनरागम्य सरय्वाः पुष्पिते वने ।
मृगयां पर्यटिष्यामि मात्रा पित्रा च संगतः ॥
नात्यर्थमभिकांक्षामि मृगयां सरयूवने ।
रतिर्ह्येषातुला लोके राजर्षिगणसम्मता ॥
राजर्षीणां हि लोकेऽस्मिन् रत्यर्थं मृगया वने ।
काले वृतां तां मनुजैर्धन्विनामभिकांक्षितम्[२] ।

मृगयाया भयङ्कररूपं सोमदेवेन चित्रितम् । तथा हि—

तदेवं मृगया नाम प्रमादो नृपभूभृताम् ।
घोरनादामिषैकाग्रा रूक्षा धूम्रोर्ध्वमूर्धजा ।
कुन्तदन्ता कथं कुर्याद्राक्षसीव हि सा शिवम् ॥
तस्माद्विफलमायासं जहीहि मृगयारसम् ।
वन्यवाहनहन्तॄणां समानः प्राणसंशयः ।।[३]

## द्यूतक्रीडा

प्राचीनैव द्यूतक्रीडा महाव्यसनमूर्तिः । सिन्धुसभ्यतायुगीना नागरिकाः १,२,३,४ आदिभिः लक्षितैरक्षैर्दीव्यन्ति स्म । वैदिकयुगे सभाभवनेषु द्यूतेन

---

१. अर्थशास्त्रे पुरुषव्यसनप्रकरणे पिशुनमतम् ।
२. अयोध्याकाण्डे ४६.१५–१७ ३. कथासरित्सागरे ४.१.२८–३०

मनोरंजनं कृतकार्याणां जनानामभूत्। द्यूतस्य मनोहारिमायाभयस्वरूपस्य कल्पना द्यूतकारस्यात्मनिवेदनप्रसङ्गेन सूक्तेन कार्यते—

न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव
नीचाः वर्तन्त उपरि स्फुरन्त्य हस्तासो हस्तवन्तं सहन्ते।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति॥

तत्रैव द्यूतस्य महती निन्दा वर्तते। द्यूतस्य संगतिः मांसमदिराभ्यां-चाभूत्[1]। द्यूते धौर्त्यस्य शाश्वतप्रतिष्ठा दृश्यते। महाभारतानुसारं राजकुमाराणां द्यूतक्रीडायै सभाभवनं समृद्धं निर्मितम्। नलयुधिष्ठिरयोः हृदयविदारिणी द्यूतक्रीडा प्रसिद्धा। महाभारतयुगे द्यूतविद्यायाः शिक्षणमपि प्रचलितम्।

अर्थशास्त्रानुसारं द्यूतक्रीडाया आयोजनं राज्ञा नियुक्तेन द्यूताध्यक्षेण कृतम्। द्यूतकाराणां विवादाः न्यायालये निर्णीताः। द्यूताध्यक्षो विजयिनां लाभधनात् ५% ग्रहणमकरोत्। नागरकाणां वासगृहे द्यूतफलकमाकर्षफलकं च बभूवतुस्तेषां सुरुचिप्रदर्शनाय।

खीष्टस्य पश्चात् सप्तमे शतके पंचविंशतिविधा द्यूतक्रीडा विकसिता। स्त्रीपुरुषाणां सामूहिकद्यूतमप्यायोजितम्। सिद्धहस्ता द्यूतकारास्तु धौर्त्येन नागरिकाणां धनमपहरन्ति स्म। खीष्टतः पश्चात् दशमे शतके द्यूतस्य भीषणस्वरूपं दृश्यते। तदा द्यूतगृहस्य गुणानुसारं नाम महाठिणठा बभूव। द्यूतेऽपहृतधना जना वस्त्रहीना एव पलायमानाः कृताः। यदा कदा ते दण्डैः मारिताश्च।[2] तदनुसृत्य सोमदेवेन कथितम्—

द्यूततान्तस्य किं नाम कितवस्य हि दुष्करम्। कथासरित्सागरे ५.१.६५

द्यूतकाराणामनुपमसहानुभूतिरपि द्यूतकारेभ्यो दृश्यते। तथा हि—मालवराजः श्रीसेनः दरिद्रतांगतेभ्यः द्यूतकारेभ्यो महामठेषु जीवनव्यवस्थामकरोत्।[3] कविवाणी कदाचिद् द्यूतप्रशस्तौ प्रवृत्ता दृश्यते। तथा हि शूद्रकः—द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्। दण्डी तु द्यूतेनौदार्यवर्धनं सुख-

१. अथर्ववेदे ६ ७०.१ २. कथासरित्सागरे १२.२५.१५-३०
३. कथासरित्सागरे १२.६.१८६-१६०

दु:खयो: समव्यवहाराभ्यसनं साहसबुद्धिपराक्रमात्मविश्वासादीनामौत्कृष्ट्यं च सम्भवं मन्यते ।

## इन्द्रजालम्

अलौकिकसाधनैरलौकिकसिद्धीनां प्रदर्शनमिन्द्रजाल: । वैदिकमन्त्र-स्तुतिभिर्देवानुग्रहेण चालौकिकसिद्धयो हस्तगता मता: । तद्यथा मन्त्रतन्त्रै: पत्युरीर्ष्याभावस्य विलोपनं नायकस्य कौटुम्बिकजनानां स्वापनं नायके शृङ्गारभावस्योत्पादनं कृतानि । देवासुराणामिन्द्रजालपरायणता मायापूर्णा-चरणं च परिचिते ।

बौद्धसाहित्ये मेराडकपरिवारस्येन्द्रजालकथोपलभ्यते । तदनुसारमन्न-वर्षया कोष्ठागारपूरणं भोजनशालायां सर्वश्रेष्ठपाकानामुपकल्पनम्, एकफालेन सप्तसीताकर्षणं च सिद्धानि ।[२] कश्चिन्नट: स्वाङ्गानि परिच्छिद्य पुन: तानि संयोजयति स्म । प्रज्वलिताग्नौ नटानां प्रवेशं कारयित्वा पुनर्जलेनाग्निं निर्वाप्य नटानां संजीवनमपि तेन प्रदर्शितम् ।[३] रामायणमहाभारतानुसारं तपो-मन्त्रतन्त्रै: दिव्यास्त्रशस्त्राणां निर्माणं कृतम् । रावणो मायया सिंहव्याघ्रगृध्र-कुक्करकुक्कुटमुखान् बाणानसृजत् ।[४]

अर्थशास्त्रानुसारमौषधिप्रयोगेण मासपर्यन्तं निराहारजीवनयापनं शरीरस्य रंगस्य परिवर्तनम्, अग्निना शरीरस्याज्वलनं धूमाग्नीनां भक्षमेक-स्मिन्नेव दिने ५० योजनानि गमनं सम्भावितानि । ईदृशै: प्रयोगै: रात्रावपि दिनवद्दर्शनं शरीरस्यादर्शनत्वविधानं प्राणिनां प्रस्वापनं पिहितद्वारस्याना-वरणं यथेच्छफलप्राप्तिकरणं च सिद्धानि ।[५]

परवर्तियुगे कापालिकानामिन्द्रजालप्रदर्शनं प्रसिद्धमभवत् । तेषां प्रदर्शनपरिधि: राजभवनादारभ्य दीनकुटीरपर्यन्तं विस्तृत: । तद्यथा दशकुमारचरिते–'स च विद्येश्वरनामधेयोऽहमैन्द्रजालिकविद्याकोविदो विविध-

---

१. अथर्ववेदे ४.५; ३.२५
२. महावग्गे ६.३४
३. सुरुचिजातके ४८६
४. लङ्काकाण्डे २७.४–२०
५. अर्थशास्त्रे प्रलम्भनभैषज्यप्रकरणे द्रष्टव्ये ।

देशेषु राजमनोरंजनाय भ्रमन्नुज्जयिनीमद्यागतोऽस्मि' इति शशंस। परेद्युः प्रभाते विद्येश्वरो रसभावरीतिगतिचतुरः परिजनताड्यमानेषु वाद्येषु नदत्सु, गायकीसु मदकलकोकिलामंजुलध्वनिषु मुकुलितनयनः क्षणमतिष्ठत्। तदनु विषमं विषमुल्बणं वमन्तः फणालंकरणा भोगिनो निश्चेरुः। गृध्राश्च तुण्डैरहिपतीनादाय दिवि समचरन्। ततोऽग्रजन्मा नरसिंहस्य हिरण्यकशिपोर्दैत्येश्वरस्य विदारणमभिनीय महदाश्चर्यान्वितं राजानमभाषत।[१]

ख्रीष्टतो दशमशताब्दे डाकिनीभिः स्त्रीभिः कृतानि बहुविधानि विस्मयजननानि वर्णितानि। तथा हि वायौ संचरणम्, अदृश्यकरणं पुरुषस्य पशुरूपविधानं भित्तिदारणं च सुकराणि तासाम्।

## मल्लयुद्धम्

स्वाभाविकमेव मल्लयुद्धं मनोरंजनार्थं दृश्यते। प्राचीनयुगे मानवा न केवलं परस्परमयुध्यन्त, अपि तु पशुभिरपि युद्धं कृत्वा शरीरबलस्य युद्धकलायाश्च परिचयं ददतिस्म। सिन्धुसभ्यतायुगीनाः मल्लाः चित्रकैरयुध्यन्त। महाभारतकालीनमल्लयुद्धस्य विवरणं भीमजरासन्धप्रकरणे दृश्यते। तदा मल्लयुद्धकला सुविकसिता बभूव। तथा हि—

करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम्।
कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः॥
चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः।
गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम्॥
उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ।
अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत्॥[२]

युद्धमिदं चतुर्दशदिवसानचलत्। तस्य दर्शनाय स्त्रीपुरुषा बालवृद्धाश्च सर्वे समागताः।

ब्रह्ममहोत्सवे जनपदेभ्योऽगणितमल्लाः राजधानीं समागताः। विजयिभ्यो

---

१. दशकुमारचरितस्य पंचमोच्छ्वासात्।
२. सभापर्वणि त्रयोविंशाध्यायतः

मल्लेभ्यो धनमुपहाररूपेण प्रदत्तम्। येषां महामल्लानां प्रतिद्वन्द्विनो न दृष्टास्तेषां युद्धं व्याघ्रसिंहहस्तिवृषभादिभिरायोजितम्।[१] मल्लानामपि दिग्विजयोऽभूत्।

परवर्तियुगेऽपि मल्लानामीदृशं युद्धं मल्लमहोत्सवे संयोजितम्। गोपानां नित्यमल्लयुद्धे क्रीडनं साधारणमेव।

पशूनां पशुभिः सह युद्धमायोजितम्। हस्तिमहिषवृषाजाकुक्कुटलावादीनां युद्धस्य दर्शनाय बहुशः जनाः समागताः। चन्द्रगुप्तमौर्यस्य पशुयुद्धदर्शनरुचिरतिशयासीत्।

## वसन्तोत्सवः

हर्षोल्लासानामुपक्रमे मानवानां प्रकृत्या सह संगतिः स्वभावतः भवति। वसन्तस्तु मानवानां श्रृंगारवासनानामुद्दीपक इति वाल्मीकिना प्रतिपादितम्। तत्परिलक्ष्यादिकविना राममधिकृत्य गीतम्—

मां हि पल्लवताम्रार्चिर्वसन्ताग्निः प्रधक्ष्यति।
न हि तां सूक्ष्मपक्ष्माक्षीं सुकेशीं मृदुभाषिणीम्॥
अपश्यतो मे सौमित्रे जीवितेऽस्ति प्रयोजनम्।
अयं हि दयितस्तस्याः कालो रुचिरकाननः॥

किष्किन्धाकाण्डे १.३०-३१

अस्मिन्नृतौ सर्वेषां मनोरंजनानां कृते श्रेष्ठवातावरणं भवति।

वसन्तोत्सवविधाने पुरा कामार्चनस्य स्थानं महत्त्वपूर्णमासीत्। स्त्रिय आम्रमंजरीं धनुर्धराय कामदेवाय समर्पितवत्यः। नागरिकाणां काममहोत्सवे तेषां सार्वजनिकं सामूहिकं च चर्चरीसंगीतमभवत्। राजमार्गेषु स्त्रीपुरुषा वासन्तिकसौरभेणोन्मत्ताः वासन्तिकवेशधारिणो नृत्यसंगीतपरायणाश्च बभूवुः। वाराङ्गनाभिरपि नागरिकाणां मनोरंजनं कृतं श्रृङ्गकजलप्रहारादिभिः। मदनोद्याने पुष्पावचय-मालागुम्फन-नृत्य-संगीतादीनामायोजनं कृतम्।

---

१. विराटपर्वणि १३ अध्यायतः। अर्थशास्त्रेऽपि-ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा प्रतियोधयेयुः ते तीक्ष्णाः।

वसन्तोत्सवे कदाचित् परिहासपूर्णायोजनानि कृतानि दुर्ललितैः जनैः। तद्यथा बाणेन समर्थितम्—वृद्धधार्मिकस्य कस्यचिद्विवाहः कयाचिद्वृद्धया सह भग्नशय्यायामेव सम्पन्नः।

पौराणिकधारणानुसारं चैत्रशुक्लद्वादश्यां रतिकामयोरावाहनं कृत्वा नृत्यगीतादिभिः तयोः पूजा कृता; विष्णुकामदेवविषयककथाः श्रुताश्च। काम एव जनार्दनः सर्वेषां कल्याणाय प्रार्थितः। अपरं च फाल्गुनशुक्लपूर्णिमायां कामस्य प्रदाहः क्रियत इति कतिपयपुराणकाराणां मतम्।

## कौमुदीमहोत्सवः

कौमुदीमहोत्सवः कार्तिकमहोत्सवो वा ऋतुसौष्ठवमधिकृत्य समारब्धः। सन्ध्यागमे नागरिकदम्पती गृहाद् बहिर्गतौ रात्रिपर्यन्तं कौमुदीमहोत्सवानन्दं गृह्णीतः स्म। राजानस्तु समागताः दिव्यवेषधरा चित्रराजयज्ञसमीपं पुष्पसज्जितं चित्रितबाणं क्षिपन्ति स्म।

पौराणिकयुगे आश्विनपूर्णिमायां लक्ष्मीपूजनं कृतम्। दिनकाले व्रतपरायणा भूत्वा जनाः सन्ध्यायां स्वर्णरजतमृत्तिकादीनां शतदीपकान् प्रज्वालयन्ति स्म। पश्चात् घृतशर्करासमायुक्तक्षीरौदनं रजतपात्रे चन्द्रिकायां प्रहरपर्यन्तं निधाय तेन द्रव्येण लक्ष्म्या आराधनं कृतवन्तः। तदा मांगलिकसंगीतमायोजितम्। तत्कालीनधारणानुसारं निशीथे विचरन्ती लक्ष्मीः पूजापरायणेभ्यो जनेभ्यो सद्दैश्वर्यं प्रददाति।

रामायणानुसारमाश्विनपूर्णिमायामिन्द्रमहोत्सवः सम्पादितः।

## देवोत्सवः

मानवानामिव देवानामपि नृत्यसंगीतवाद्यादिभिः विनोदः संकल्पितः। वैदिकयुगे यज्ञावसरे गाथागायनसमारम्भे वीणावादनं कृतम्। वाजपेययज्ञे रथधावनमायोजितम्। रामायणमहाभारतानुसारं कथानृत्यगीतवाद्यादीनामायोजनं समागतानां जनानां मनोरंजनायाभूत्। एभिरायोजनैः न केवलं मानवानाम्, अपितु देवानामपि मनोरंजनं विधेयमिति तेषां यज्ञस्यानिवार्याङ्गता प्रसिद्धा।

वैदिकयुगस्य पश्चात् यज्ञस्य स्थाने पूजाया लोकप्रियत्वं दृश्यते। पूजानां समारम्भः कश्चिदुत्सवरूपेण कृतः। ईदृशेषूत्सवेषु महाभारतकाले राज्ञो परिचरेणेन्द्रमहोत्सवः प्रवर्तितः। अस्मिन्नुत्सवे यष्टिरेका भूमौ संस्थापिता। सा इन्द्रयष्टिरिति समाख्याता। यष्टिः वस्त्रगन्धमाल्यालङ्कारैर्विभूषिता। तस्याः समीपं हंसरूपेण भगवत इन्द्रस्य पूजा कृता। अनेन समारम्भेण राष्ट्रे श्रीः विजयश्च सङ्कल्पितौ। जैनसाहित्यानुसारं सप्तदिवसपर्यन्तं विविधमनोरंजनसमायुक्तः इन्द्रमहोत्सवोऽभूत्। इन्द्रध्वजः संस्थापितः। पूर्णिमायां स्वयं राजा ध्वजस्य पूजां कृतवान्। कुमार्यो बलिपुष्पादिभिरिन्द्रपूजां कृत्वा सौभाग्याय प्रार्थयन्त।

पौराणिकयुगे पुरग्रामेषु शरदि देवेन्द्रमहोत्सवः कृतः। व्रजप्रदेशे कृष्णः इन्द्रमहोत्सवस्थाने गोवर्धनपूजां प्रतिष्ठापितवान्। अपरेऽपि देवोत्सवाः स्कन्दनागमुकुन्दादीनां कृते समारब्धाः। उत्सवेषु रथयात्रा सज्जिता। अशोकस्य धर्मयात्रा विख्याता बौद्धसंस्कृतौ। परवर्तियुगे गौतमबुद्धस्याराधनाय सुशोभना रथयात्रा कल्पिता। तस्मिन्नवसरे दीनहीनरुग्णादीनां सहायता सविशेषं कृता।

## बालक्रीडाः

शिशूनां मनोरंजनानि प्रायः सर्वेषु युगेषु बहुविधानि बभूवुः। स्वभावतः शिशवो विनोदप्रियाः। तेषां मनोरंजनानि महार्घाणि न भवन्ति। अतः सर्वदा सर्वत्र च क्षणेन मनोविनोदायापेक्षितानि वस्तूनि तेभ्यः संयोजितानि भवन्ति। वृद्धानामनुकरणं बालानां शाश्वतक्रीडाऽस्ति।

सिन्धुसभ्यतायुगे बहुविधानि मृण्मयानि क्रीडनकानि शिशुभ्यः प्रस्तुतानि दृश्यन्ते। तद्यथा—चलशिराः बलीवर्दः, रज्जुमाध्यमेन नीचैरुपरि गच्छन् वानरः, शकटः, पक्षिसदृशः शीश्कृत्, पिञ्जराधीनः पक्षी, झणझणकृत्, वामनश्च मृण्मयाः कृताः। अपरेषामपि पशुपक्षिणां बहुविधानि मनोरंजकानि मृण्मयस्वरूपाणि कृतानि। क्रीडनकानामसंख्यत्वेन तेषां लोकप्रियता सिद्धा। कतिपयक्रीडनकानि बालैः रचितानि प्रतिभान्ति।

बालानां मनोरंजनं सूत्रबद्धपक्षिणामुत्पतनेन, तृणसर्पैणान्येषां भय-जननेन च बभूव। क्रीडायै वामनाकाराः पशुपक्षिणो निर्मिताः। अश्वघोषा-नुसारं राजकुमारगौतमस्य क्रीडायै स्वर्णमयानि क्रीडनकानि दत्तानि। तद्यथा—

मृगप्रयुक्तान् रथकांश्च हैमानाचक्रिरेऽस्मै सुहृदालयेभ्यः॥
वयोऽनुरूपाणि च भूषणानि हिरण्मयान् हस्तिमृगाश्वकांश्च।
रथांश्च गोपुत्रकसंप्रयुक्तान् पुत्रीश्च चामीकररूप्यचित्राः॥ २.२१-२२

कन्याः पुलिनसिकतासु गोपितमणीनामन्वेषणं क्रीडायै कुर्वन्ति स्म। मृगशावैर्बालिकानां सदा क्रीडा भवति। दुष्यन्तकुमारस्य भरतस्य सिंहशावकैः क्रीडा सुविदिता।

भागवते बालकृष्णलीलाः साङ्गोपाङ्गं वर्णिताः। गोपबालाः रमि-सम्पन्नवनभूमिषु वेणुवंशिकादिभिः संगीतायोजनं कुर्वन्ति स्म। तद्यथा—

प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः।
रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः॥
कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन्।
वेणुपाणितलैः शृङ्गैः प्रशशंसुरथापरे॥
भ्रामणैर्लंघनैः क्षेपैरास्फोटनविकर्षणैः।
चिक्रीडतुर्नियुद्धेन काकपक्षधरौ क्वचित्॥
क्वचिद् बिल्वैः क्वचित्कुम्भैः क्व चामलकमुष्टिभिः।
अस्पृश्यनेत्रबन्धाद्यैः क्वचिन्मृगखगेहया॥
क्वचिच्च दर्दुरप्लावैर्विविधैरुपहासकैः।
कदाचित् स्पन्दोलिकया कर्हिचिन्नृपचेष्टया॥
एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने।
नद्यद्रिद्रोणकुञ्जेषु काननेषु सरस्सु च॥[1]

---

१. भागवते १०.१८

यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम्।
अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे॥
केचिद्भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैः परे।
विच्छायाभिः प्रधावन्तो गच्छन्तः साधु हंसकैः॥
बकैरुपविशन्तश्च नृत्यन्तश्च कलापिभिः।
विकर्षन्तः कीशबालानारोहन्तश्च तैर्द्रुमान्।
विकुर्वन्तश्च तैः साकं प्लवन्तश्च पलाशिषु॥
साकं भेकैर्विलङ्घन्तः सरित्प्रस्रवसम्प्लुताः।
विहसन्तः प्रतिच्छायाः शपन्तश्च प्रतिस्वनान्॥[1]
क्वचिच्च कलहंसानामनुकूजति कूजितम्।
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन्क्वचित्॥
चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः।
अनुरौति स्म सत्त्वानां भीतवद् व्याघ्रसिंहयोः॥[2]
क्वचिद्वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित्।
क्वचित्पादैः किंकिणीभिः क्वचित् कृत्रिमगोवृषैः॥
वृषायमाणौ नर्दन्तौ युयुधाते परस्परम्।
अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा॥[3]
एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे।
निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः॥[4]

कन्यकानां क्रीडाः क्रीडनकानि च प्रायः बालकेभ्यः भिन्नानि बभूवुः। तासां कन्दुकक्रीडा सनृत्यापि प्रचलिता दृश्यते। पंचालिकाभिः कन्यकानां क्रीडनं विशिष्टम्। मालाविरचनम्, मृत्तिकाकाष्ठादीनां गृहनिर्माणम्, मृत्तिकादीनामेवान्नरूपपाचनं तासां शिल्पात्मकं मनोरंजनमभूत्। कन्यकानां

---

१. भागवते १०.१२    २. भागवते १०.१५.११,१३
३. भागवते १०.११.३९,४०    ४. भागवते १०.११.५९

व्यायामेनापि मनोरंजनं बभूव। द्वैलितकक्रीडा साधारणतः सदा प्रचलितासीत् प्राचीनयुगे।

## विविधमनोरंजनानि

अपराण्यपि बहूनि मनोरंजनानि प्रचलितानि बभूवुः। वैदिकयुगेऽश्वारोहाणां प्रतियोगिता 'आजिः' इति विख्याता। रथधावनमपि प्रतियोगितारूपेणायोजितम्। तदा प्रेङ्खान्दोलनं मनोरंजनरूपेण प्रतिष्ठितम्।

परवर्तियुगे सुरानक्षत्रोत्सवे मण्डपे समागता नागरिका यथेच्छं पानं कुर्वन्ति स्म। रेखाकूर्दनं कृत्रिमहलकर्षणप्रतियोगिता विलुठनं वायुचक्रिका-निर्माणं शरसन्धानम्, अङ्गुलिप्रहारेण मर्मरोत्पलक्षेपणं मुष्टिप्रहरणं च विनोदा असंयतानां भिक्षूणामपि बभूवुः।[१] राज्ञा प्रवर्तिते मंगलोत्सवे प्रजाभ्यो बहुविधानि मनोरंजनानि कल्पितानि। सर्पक्रीडाकारिणः, वानरिकाश्च क्रमशः सर्पनर्तनं वानराभिनयं च दर्शयन्ति स्म। लंघनटाः शक्तिलंघनं कुर्वन्ति स्म। अतिशयवेगेन कूर्दनं धावनमास्कन्दनं च सार्वजनिकमनोरंजनाय प्रदर्शितानि।

मनोरंजनप्रसङ्गे गणिकानां गणना कर्तव्यैव। राजभिः राजधानीषु राजगणिका नियुक्ताः। ता राजकोशाभिवृद्धये बभूवुः। अर्थशास्त्रे वाग्जीवन-प्लवक-सौभिक-चारणादयोऽपरे मनोरंजनकारिणो बभूवुः। तदा सार्वजनिक-मनोरंजनाय क्रीडागृहा निर्मिताः। शिल्पानां प्रदर्शनेन प्रजानां मनोरंजनं राज्ञायोजितम्।

गुप्तयुगे दोलोत्सवस्य विशेषप्रचारोऽभवत्। शय्याऽपि दोलारूपेण लम्बिता। सारिकाभिः सह वार्तालापेन मयूरनर्तनेन च स्त्रीणां मनोरंजनमभूत्। खीष्टतःपश्चात् सप्तमे शतके शुकसारिकादीनां विवाहायोजनं कृतं विनोदाय। नकुलिका तु राजकुमारीणामङ्के शयितवती। अन्तःपुरे मृगशावकाः पालिताः। क्रीडापर्वते चकोरदम्पती प्रतिष्ठितौ। वनमानुषी राजकुले मनोरंजनाय रक्षिता। अपरेऽपि कलहंसमयूरचक्रवाककोकिलहारीतचकोराः

---

१, चुल्लवग्गे १.१३.१-२

कुब्जकिरातनपुंसकबधिरवामनमूकाः मेषसिंहाश्च मनोरंजनाय राजकुले रक्षिताः।[१] समाजे विषमप्रकृतयः कतिपयजनाः सदैव सार्वजनिकमनोरंजनाय भवन्त्येव। तदधिकृत्य कादम्बर्यां जरद्द्रविडधार्मिकस्य कथाऽमरीकृता बाणेन।[२]

परवर्तियुगेऽश्वक्रीडायाः प्रचलनं समवर्धत। अश्वारोही विविधप्लुतिभंग्या दर्शकानां मनोरंजनमकरोत्। तदधिकृत्य सोमदेवेन लिखितम्—अत्यर्थं हयविनोदोऽङ्गभंगमनापाद्य न तिष्ठति।[३] अपरं च वाजिवाह्यालीविनोद आधुनिक 'पोलो'वदासीत्। रज्जौ शरीर संस्थानं कृत्वा गोलिकाभिः क्रीडाः कृताः। चतुरंगं (शतरंज) चतुस्सारिः (चौसर) भारतादेव अरबदेशं ततः योरपदेशं च गते।[४] काष्ठपुत्तलिकानां नृत्यं कथाकरणं च प्रायशः मनोरंजनमभूत्।

---

१. कादम्बर्यां ८६, १८८, ३१६ पृष्ठेषु
२. कादम्बर्यां २२६-२२८ पृष्ठेषु
३. वाक्यामृते प्रकीर्णकसमुद्देशात्
४. अरब और भारत का सम्बन्ध १४६-१५७

# राजनीतिकजीवनम्

सर्वेषु समाजेषु प्रजानां शासनस्यावश्यकता प्रत्यक्षं विद्यते। शासनस्य मूलस्रोतः पुरा राजाऽऽसीत्। राजकीयव्यवस्थायाः विपुलपरिधौ—प्रजा-परिपालनं धर्मसंस्थापनं पापानां निग्रहणं शान्तिप्रतिष्ठापनं राष्ट्रे सत्प्रवृत्तीनां समाधानं च शाश्वतरूपेण वर्त्तमानानि दृश्यन्ते।

## राजकर्मपरिधिः

राजकीयव्यवस्थाया व्यापकस्वरूपेण राज्ञः कर्मण्यता परिचीयते। तद्यथा[1] राजानमधिकृत्य शतपथब्राह्मणे निदर्शितम्—ऊर्जे च नोऽसि वृष्ट्यै च नोऽसि प्रजानां च न आधिपत्यायासि[1]। राजा वरुणसमः धर्मपतिः मतः[2]। तदधिकृत्य राजोवादजातके प्रोक्तम्—सब्बं रट्ठं सुखं सेति राजा चे होति धम्मिको। महाभारते संक्षेपेण राजकीयव्यवस्थायाः परिधिः वर्णितः—

यज देहि प्रजां रक्ष धर्मं समनुपालय।
अमित्रान् जहि कौन्तेय मित्राणि परिपालय॥

शान्तिपर्वणि १५.५३

प्रजानामभ्युदयाय महाभारतयुगे राजा प्रजावृत्तं निवेदयितुं चारान् नियुक्तवान्, राजमार्गाणां निर्माणं कृतवान्, रोगिणामुपचाराय वैद्यान् नियुक्तवान्, नागरिकाणां मनोरंजनाय नटमल्लादीन् व्यापारितवान् युधिष्ठिरमधिकृत्य तत्रैव प्रोक्तम्—

दीनान्धकृपणानां च गृहाच्छादनभोजनैः।
आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः॥

शान्तिपर्वणि ४३.११–१२

---

१. श. ब्रा. ६.३.३.११ २. शत. ५.३.३.९

तस्मिन्युगे राष्ट्रस्यौद्योगिकाभ्युदयाय राज्ञः प्रयत्नः श्लाघ्योऽभवत्। अर्थशास्त्रे राज्ञः कर्मसु दण्डस्य प्राधान्यं निदर्शितम्।[1]

चतुर्वर्णाश्रमो लोको राजा दण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु॥ १.४.१६

राष्ट्रस्य प्रायशः सर्वासामाधिभौतिकप्रवृत्तीनां नियन्त्रणाय विविधानां विभागानामध्यक्षाः नियुक्ताः। राजा प्रजाः पीडकेभ्यः सर्वथाऽरक्षत्। अर्थशास्त्रे राजा धर्मप्रवर्तको मतः।[2]

उपर्युक्तराजकर्मणां व्यवस्था प्राचीनानामैतिहासिकराजानामितिवृत्तेषु लभ्यते। तद्यथा—अशोकस्य धर्मविजयो धर्मयात्रा च सुविदितौ। धर्ममङ्गलादर्शेन स सर्वेषां प्राणिनां समादरं प्रतिष्ठापितवान्। स सर्वेषां सम्प्रदायानां पारस्परिकसहिष्णुताभावं प्रतिपादितवान्। अशोकः सामाजिकजीवनस्यादर्शप्रतिष्ठां विन्यस्तवान्। तथा हि—तत एवं देवानां प्रिय आह—मातापितरौ शुश्रूषितव्यौ, गुरुत्वं प्राणेषु द्रढयितव्यम्। सत्यं वक्तव्यम्। ते इमे धर्मगुणाः प्रवर्त्तयितव्याः। एवमेव अन्तेवासिना आचार्योऽपचेतव्यः। ज्ञातिकेषु च कुले यथार्हं प्रवर्तयितव्यम्। एषा पुराणी प्रकृतिः दीर्घायुषे च। एतत् एवम्–एतत्कर्तव्यं च।[3] न केवलं भारतेऽपितु विदेशेष्वपि स मनुष्यचिकित्सायाः पशुचिकित्सायाश्च व्यवस्थां कारितवान्। स्वराष्ट्रे स मार्गेषु छायाप्रदान् वृक्षान्, जलाशयान् विश्रामगृहान् च व्यवस्थापितवान्। सौराष्ट्रप्रदेशे सुदर्शनतडागस्य रचनसंस्करणादिकर्मणः यशः चन्द्रगुप्तमौर्याशोकरुद्रदामस्कन्दगुप्तादिभ्यो राजभ्यः प्रतिष्ठितम्। सार्वजनिकोपयोगिताया अपरा अपि बहवः संस्थाः पुरा राजभिः प्रवर्तिताः सञ्चालिताश्च।

कवीनां दार्शनिकानां कलाकाराणां चैकाश्रयः पुरा राजा बभूव। अश्वघोषः, कालिदासः, बाणः, भवभूतिः, वाक्पतिः, राजशेखरः, हेमचन्द्रः, बिल्हणश्चेदृशाः राजसमाश्रिता बभूवुः।

---

१. दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः॥ मनु ७.१८

२. अर्थ० ३.१  ३. अशोकस्य ब्रह्मगिरौ द्वितीये शिलालेखे

प्रजानां विपत्तीनां निवारणाय राजानः सदैवोद्योगपरायणा बभूवुः। ते प्रायः युद्धभूमिषु राष्ट्ररक्षायै अग्रस्थानमलंचक्रुः। बहवो राजानः स्वयं प्रजानां दशां ज्ञातुं ग्रामाद् ग्रामं पर्यटनं कृतवन्तः। तेषां तात्कालिकचेष्टाभिः प्रजानां सुखमपेक्षितमासीत्।

सुदूरप्राचीनकाले शिक्षायाः व्यवस्थाऽऽचार्याणामाश्रमेषु बभूव। ते आचार्याः कदाचिदेव राजसहायतां वाञ्छन्ति स्म। किन्तु कालान्तरे शिक्षायाः प्रकामविस्तारे भूते राजकीयसहायताया अपेक्षा बभूव। राजानोऽपि शिक्षाप्रसाराय सदा समुद्यता बभूवुः। राजभिः संचालिता बहवः शिक्षणसंस्थाः बभूवुः। शिक्षाभवनानि राजभिः निर्मापितानि। नालन्दा-विश्वविद्यालयस्य प्राङ्गणेऽधुनापि तेषां राज्ञां कीर्तिः दृश्यते।

राज्ञः कर्मपरिधिः संक्षेपेण वर्णाश्रमधर्मरक्षापदेन परिचीयते। तदनुसारं सर्वे वर्णाश्रमिणः निजाभ्युदयं कर्त्तुं राजकीयसंरक्षणमपेक्षन्ते इति स्पष्टम्। राज्ञः प्रयत्नेन ब्रह्मचारिणः शिक्षां प्राप्तवन्तः, गृहस्था उद्योग-परायणाः सुखेन समृद्धिं प्राप्तवन्तः, वानप्रस्था वनानां शान्तवातावरणे तपसः तत्त्वज्ञानस्य च संवर्धनं कुर्वन्ति स्म, संन्यासिनोऽपि सर्वत्र प्रचारक्षेत्र-मनुभवन्ति स्म। सर्वेषां वर्णानां स्वकीयोद्योगेषु नियोजनं तत्रत्यबाधानां निवारणं च राज्ञः कर्तव्यमासीत्। तत् परिलक्ष्य कालिदासेनामरवाक्य-मुद्घाटितम्—

प्रजानां विनयाधानाद्रक्षणाद् भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः॥

## राज्ञः व्यक्तित्वम्

'यथा राजा तथा प्रजा' इति सिद्धान्तानुसारं राज्ञो व्यक्तित्वस्य राज-नीतिकजीवनेऽतिशयप्रभावोऽभिव्यक्तः। भारतीयराजस्य व्यक्तित्वं दिव्यमिति पर्यालोचितम्[1]। प्राचीनकालतः भारते राजा इन्द्रविष्णुवरुणादीनां देवानां प्रतिनिधिः मतः। इन्द्रादर्शमनुसृत्य राजा विजेता बभूव। वरुणादर्शमनुसृत्य स न्यायपरायणोऽभवत्। विष्णोरादर्शमनुसृत्य राजा प्रजापालकोऽभवत्।

१. मनु० ७.४-५

वैदिककालीनस्य राज्ञो व्यक्तित्वमुदात्तमासीदिति प्रमाणितमाप्तवचनैः—

ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति। अथर्व ११.५.१७

सिंहप्रतीको विशो अद्धि सर्वा व्याघ्रप्रतीकोवबाधस्व शत्रून् ॥

अथर्व ४.२२.७

उपनिषद्युगीनाः कतिपयनृपाः जनकाजातशत्रुप्रमुखाः परमदार्शनिका बभूवुः।

राजकुमाराः साधारणाच्छात्रसमाना एव वेदविद्यानां शिल्पविज्ञानकलादीनां शिक्षां गृह्णन्ति स्म[1]। अर्थशास्त्रानुसारम्—विद्यानां तु यथास्वमाचार्यप्रामाण्याद्विनयो नियमश्च। वृत्तचौलकर्मा लिपिं संख्यानं चोपयुञ्जीत। वृत्तोपनयनः त्रयीमान्वीक्षिकीं च शिष्टेभ्यो वार्तामध्यक्षेभ्यो दण्डनीतिं वक्तृप्रयोक्तृभ्यः। ब्रह्मचर्यं चाषोडशाद्वर्षात्। नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं तन्मूलत्वाद्विनयस्य। पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु विनयं गच्छेत्। पश्चिममितिहासश्रवणे। पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः। शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं च कुर्यात्।

विद्याविनीतो राजा हि प्रजानां विनये रतः।
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः॥[2]

महाभारतानुसारं तु—

सङ्ग्रहश्चैव भूतानां दानं च मधुरा च वाक्।
अप्रमादश्च शौचं च राज्ञो भूतिकरं महत्॥शान्तिपर्वणि६१.५३

दातारं संविभक्तारं मार्दवोपगतं शुचिम्।
असंत्यक्तमनुष्यं च तं जनाः कुर्वते नृपम्॥
यस्तु निःश्रेयसं श्रुत्वा ज्ञानं तत् प्रतिपद्यते।
आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते॥

शान्तिपर्वणि ६३.२७-२८

---

१. महासीलवजातके ५१, पंचाबुधजातके ५५, तिलमुट्ठिजातके २५२

२. अर्थशास्त्रे विनयाधिकारिके पंचमाध्यायात्।

मनुना राज्ञः सर्वोच्चगुणाः निदर्शिताः। चान्द्रव्रतिको नृप आदर्श एव प्रतिभाति। तद्यथा—

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः।
तथा प्रकृतयो यस्मिन्स चान्द्रव्रतिको नृपः॥

पार्थिवव्रतिको राजा पृथिवीवत् सर्वेषां प्राणिनां भरण-पोषणं करोति। जितेन्द्रियस्य नृपस्य प्रकल्पनं मनुस्मृतौ विद्यते। तथाहि—

इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम्।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः॥ ७.४४

उपर्युक्तगुणानां प्रादुर्भावः पुराणानुसारं शिबिहरिश्चन्द्ररामयुधिष्ठिरादिषु नृपतिषु दृश्यते। इतिहासप्रसिद्धानां राज्ञामशोकविक्रमादित्यहर्ष भोजादय उपर्युक्तगुणैः समन्विता बभूवुः। अशोकस्तु गौतमबुद्धवत् मानवतायाः विपत्तीनामभावानामार्तीनां चानुभूत्या द्रवितो बभूव। स सत्प्रवृत्तीनां लोकप्रियतां विधातुं ताभिरेव स्वर्गप्राप्तिप्रकल्पनमपि बोधयामास। स प्राणिमात्रेभ्यः दयालुरासीत्। तस्य कर्मण्यताऽधुनाऽपि शिलालेखेन प्रमाणिता। तथाहि—देवानां प्रियः प्रियदर्शी राजा एवमाह—तत् मया एवं कृतं—सर्वं कालमदतः मे अवरोधने, गर्भागारे, वर्चसि, विनीते, उद्याने सर्वत्र प्रतिवेदकाः स्थिताः अर्थं जनस्य प्रतिवेदयन्तु मे इति। सर्वत्र जनस्यार्थं करिष्यामि अहम्। नास्ति हि मे तोषः उत्थाने अर्थसन्तरणाय च। कर्तव्यमतः हि मे सर्वलोकहितम्। तस्य च पुनः एतत् मूलमुत्थानमर्थ-सन्तरणं च। नास्ति हि कर्मान्तरं लोकहितात्। यत् च किंचित् पराक्रमे अहं किमिति भूतानामानृण्यमियाम्।[१]

## राजपदस्य योग्यता

राजपदाय प्राचीनकाले प्रायः सदा युद्धवीरत्वमपेक्षितमभवत्। आक्रमण-कारिभ्यः शत्रुभ्यः प्रजानां रक्षणं राज्ञः प्रथमं कर्तव्यमासीत्। अस्यां परिस्थितौ यदि कश्चित्कोऽपि योग्यताविहीनः पुरुष उत्तराधिकारित्वेनापि

१. षष्ठशिलालेखात्।

राजपदं प्राप्तवान् तर्हि स चिरकालं स्वपदमलङ्कर्तुं समर्थो नाभवत्। अयोग्यानां राज्ञां स्थाने तेषां विजेतॄन् स्वीकर्तुं प्रजा समुत्सुकाऽदृश्यत।

प्रायशः राज्ञां ज्येष्ठपुत्राः तेषां पदं गृह्णन्ति स्म। क्वचित् राज्ञो निर्वाचने मन्त्रिणामधिकारोऽपि बभूव। ते राजपुत्रस्य परीक्षणां कृत्वा तस्य तीक्ष्णबुद्धेः परिचयं प्राप्य तं राजपदेऽभिषेचयन्ति स्म। राजपुत्रस्यायोग्यतायाः परिचयं प्राप्य ते कंचित् परमेव गुणिनं जनं प्रतिभाशालिनमवलोक्य प्रतिष्ठापितवन्तः। राजा स्वयं योग्योत्तराधिकारिणं नियुनक्तु—इति कौटिल्यमतम्।

युद्धवीरनेतारः शस्त्रबलेन विशालभारतीयप्राङ्गणे यथेच्छं राज्यं परिकल्पयन्ति स्म। राजा भवितुं पुरा क्षत्रियत्वमपि नासीदपेक्षितम्। आर्येतराणां राजानः प्रायशः आर्येतरा बभूवुः। बहवो राजानो ब्राह्मणाः, वैश्याः, शूद्रा वा बभूवुः। स्त्रियोऽपि क्वचिद्राजपदमलंचक्रुः।

राज्ञां क्वचिन्निर्वाचनमपि बभूव। निर्वाचनस्याधिकारः क्वचित् प्रजासु गण्यमानपुरुषाणामेवासीत्। एतादृशं निर्वाचनमाधुनिकनिर्वाचनाद् भिन्नमेवासीदिति सुनिश्चितम्।

दुष्टानां राज्ञां विनाशोऽवश्यम्भावीति शास्त्रकाराणां शाश्वतं मतं दृश्यते। तद्यथा मनुः—

कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते। ७.२७

## राज्य-विस्तारः

पुरा प्रजानामितिवृत्तस्य ज्ञानायाधुनिकयुगवत्साधनानि नासन्। सुदूरस्थप्रजानां केन्द्रस्थानात् सम्यक् परिपालनं कठिनमासीत्। अस्यां परिस्थितौ यद्यपि विशालराज्यानां समीचीनत्वं न दृश्यते, तथापि दिग्विजयिनां समग्रभारते स्वाधिपत्यस्थापनस्याभिलाषः प्रायः सदैवावर्तत। पुरा भारते साम्राज्यानि, राज्यानि, आश्रितराज्यानि च बभूवुः। साम्राज्यानामनेकप्रान्तेषु विभाजनमभवत्। दिग्विजयिनां सम्राजां

वाधिपत्ये बहूनि राज्यान्याश्रितानि बभूवुः। वनप्रदेशेषु पर्वतभागेषु चार्येतराणां वन्यजातीनां वा राज्यानि प्रतिष्ठापितानि बभूवुः।

साम्राज्यस्योल्लेखः प्रथममृग्वेदे प्राप्यते[1]। वैदिकयुगे राजत्वसूचकानि पदानि बहुविधानि बभूवुः। तद्यथा—साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं च[2]। इमानि पदानि राज्यविस्तारं शासनप्रणालीं वाऽधिकृत्य प्रयुक्तानि बभूवुरिति कल्प्यते। सार्वभौमपदं प्राप्तुं वैदिकयुगे आसमुद्रराज्यविस्तारोऽपेक्षितः। ऐन्द्रमहाभिषेकेण सार्वभौमपदस्य प्रतिष्ठा कृता[3]।

उपनिषद्युगे भारतस्य विविधभागेषु प्रायः स्वतन्त्रराज्यानां सत्ता दृश्यते। तद्यथा काश्यामजातशत्रोः, विदेहे जनकस्य, पंचाले प्रवाहणस्य जैवलेः, कैकयेऽश्वपतेः राज्यानि बभूवुः। महाभारतस्य दिग्विजयप्रकरणे वनभागेषु, पर्वतप्रदेशेषु मध्यदेशेषु चावस्थितानां बहूनां राज्यानामुल्लेखो दृश्यते।

परवर्तियुगे षोडशजनपदानां प्रादुर्भावो बभूव। तद्यथा—काशी-कोशलाङ्ग-मगध-वृजि-मल्ल-चेदि-वत्स-कुरु-पंचाल-मत्स्य-शूरसेनाश्मका-वन्तिगन्धार-कम्बोजाः।

ऐतिहासिकयुगे सर्वप्रथममशोकस्य महाराज्यं प्रतिष्ठापितम्। तस्मिन् महाराज्ये पश्चिमोत्तरप्रदेशे कम्बोज-गान्धार-यवनराज्यानि समन्वितानि। उत्तरस्यां कश्मीरपर्यन्ता महाराज्यसीमाऽऽसीत्। पूर्वभागे वङ्गप्रदेशः महाराज्ये सम्मिलितो बभूव। प्रायः समग्रदक्षिणभारतमपि तस्याधिपत्ये आसीत्। इदं महाराज्यमनेकप्रान्तेषु विभक्तं बभूव।

परवर्तियुगे यद्यपि कस्यापि सम्राजः राज्यसीमा तावन्मात्रं विस्तृता नाभूत्, तथापि खारवेल-कनिष्क-समुद्रगुप्त-चन्द्रगुप्त-हर्षादीनां महाराज्येषु भारतस्याधिकांशभागः समन्वितो बभूव। लघुराज्यानां संख्या तु गणना-परिधेः बाह्या सदाऽऽसीत्।

---

१. ऋग्वेदे ४.४२.१ २. ऐतरेयब्राह्मणे ८.१४
३. ऐतरेयब्राह्मणे ८ १२

# मन्त्रिपरिषदः प्रजासभाश्च

वैदिकयुगे सभा समितिश्च द्वे संस्थे राजनीतिकदृष्ट्या महत्त्वं प्रापतुः। तस्मिन्युगे ग्रामेषु सभाभवने सम्मिलिता जनाः सामाजिकसमस्याः राजनीतिकसमस्याश्चाधिकृत्य विचारविमर्शं कृतवन्तः। सा सभाऽऽधुनिकयुगस्य 'पञ्चायत' समाऽभूत्। सभासदां निर्णयाः राज्ञे निवेदिताः। राजाऽपि क्वचित्सभायाः सदस्योऽभवत्।

समितिः राजनीतिकदृष्ट्या विशेषमहत्त्वपूर्णा बभूव। उपनिषद्युगे स्वयं राजा समितेः प्रधानो बभूव। समितौ गण्यमानसदस्या राजनीतिकपरिस्थितीरधिकृत्य तर्कपूर्णं व्याख्यानं प्रददुः। समितेः मतं राज्ञेऽवश्यं ग्रहणीयमासीदिति प्रतिभाति। समितिविरोधे भूते राजा स्वपदात् च्युतो बभूव।

वैदिककालानन्तरं गणराज्येषु राजधान्यां समितयः प्रतिष्ठिताः। समितयः शासनकर्मणि व्यापृता आसन्। ग्रामेषु नगरेषु च साधारणसमितयो बभूवुः।

## रत्निसंस्था

वैदिकयुगे राज्ञः समीपवर्तिनां श्रेष्ठजनानां शासनकर्मणि विशेषाधिकारो बभूव। ते 'रत्नि' इति ख्याता आसन्। पुरोहितः, सेनानी, भागधुक्, संग्रहीता, राज्ञी, सूतः, ग्रामणी, क्षत्ता च साधारणतः रत्निसदस्या आसन्। इयं संस्था परामर्शदात्री बभूव। संस्थेयं परवर्तियुगे मन्त्रिमण्डलरूपेण विकसिता अभवत्।

## मन्त्रिमण्डलम्

राज्ञे परामर्शदातारो महाभारतयुगेऽमात्याः मन्त्रिणो वा ख्याता बभूवुः। अमात्यानां संख्या सप्तत्रिंशदासीत्। तथा हि—

चतुरो ब्राह्मणान् वैद्यान् प्रगल्भान् स्नातकाञ्शुचीन्।
क्षत्रियांश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः॥
वैश्यान् वित्तेन सम्पन्नानेकविंशतिसंख्यया।
त्रींश्च शूद्रान् विनीतांश्च शुचीन् कर्मणि पूर्वके॥

अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम्॥
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम्।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम्॥
वर्जितं चैव व्यसनैः सुघोरैः सप्तभिर्भृशम्।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत्॥[१]

मन्त्रणायै मन्त्रिणां संख्या तिस्रः, पञ्च, अष्ट वा निर्धारिता। मन्त्रोपयोगो महाभारतेऽधोलिखितश्लोकयोः निगदितः—

तेषां त्रयाणां विविधं विमर्शं विबुद्ध्य चित्तं विनिवेश्य तत्र।
स्वनिश्चयं तं परनिश्चयं च निवेदयेदुत्तरमन्त्रकाले॥
धर्मार्थकामज्ञमुपेत्य पृच्छेद् युक्तो गुरुं ब्राह्मणमुत्तरार्थम्।
निष्ठा कृता ते न यदा सहः स्यात् तं मन्त्रमार्गं प्रणयेदसक्तः॥[२]

साधारणतः राजपुरोहितः सर्वोच्चः परामर्शदाता बभूव। तमधिकृत्य महाभारते प्रोक्तम्—

य एव तु सतो रक्षेत् असतश्च निवारयेत्।
स एव राज्ञा कर्तव्यो राजन् राजपुरोहितः॥[३]

अर्थशास्त्रानुसारं तु मन्त्रपूर्वाः सर्वारम्भाः। कौटिल्यः त्रिभिश्चतुर्भिर्वा मन्त्रिभिः सह मन्त्रणां समीचीनां मन्यते। अपरं च कौटिल्यानुसारम्—कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः। तानेकैकशः पृच्छेत् समस्तांश्च।[४]

रुद्रदाम्नः शिलालेखे द्विविधौ मन्त्रिणौ—कर्मसचिवः मतिसचिवश्च वर्णितौ। मतिसचिवाः मन्त्रणायै, कर्मसचिवाः राजकर्मसम्पादनाय च नियुक्ताः।

गुप्तयुगे सर्वोच्चमन्त्रिणः—प्रधानमन्त्री सान्धिविग्रहिकः, अक्षपटला-

---

१. शान्तिपर्वणि ८५.७-११ २. तत्रैव ८३.५३-५४
३. तत्रैव ७२.२ ४. अर्थशास्त्रे मन्त्राधिकारप्रकरणात्

धिकृतश्च बभूवुः। शुक्रनीतौ मन्त्रिपरिषदः सदस्यानां संख्या दश निर्धारिता—पुरोहितः, उपराजः (प्रतिनिधिः), प्रधानमन्त्री, सचिवः, मन्त्री, प्राड्विवाकः पण्डितः, सुमन्त्रः, अमात्यः, दूतश्च।[१]

साधारणतो मन्त्रिणः सुयोग्या बभूवुः। राष्ट्रस्याभ्युत्थाने मन्त्रिणां भरोऽतिशय एवासीत्। भारतीयेतिहासे सर्वगुणसम्पन्नानामुदारचरितानां राज्ञः कृते सर्वस्वत्यागिनां मन्त्रिणामादर्शाः सदा प्रतिष्ठिता बभूवुः।

## शासनतन्त्रम्

सिन्धुसभ्यतायाः युगे तत्कालीनराष्ट्रौत्थानिकप्रवृत्तीनां संचारणाय कुशलशासनप्रबन्धः प्रकल्पितुं शक्यते। तत्रत्यनगरपालिकायाः सुव्यवस्थाऽनुकरणीयाऽऽसीत्।

वैदिकयुगे आर्याणां राज्ञां प्रधानोद्देश ऋतस्य प्रतिष्ठापनमासीत्। वरुणस्यादर्शः राजभिरस्मै प्रयोजनाय स्वीकृतः। दुर्वृत्तानां जनानामन्वेषणं राजा दूतैरकारयत्। पापिनस्तु सदैव दण्ड्या बभूवुः।

वैदिककालीनशासनस्य प्रारम्भिकसंयोजनं 'जन' संस्थयाकृतम्। आर्या आर्येतराश्च मूलतः विविधजनेषु संविभक्ता बभूवुः। तथाहि पुरु-यदु-द्रुह्यु-भारत-गन्धारादय आर्याणां जनाः यत्तु-शिग्रु-शिम्यु-कीकटादय आर्येतराणां जना आसन्। जनाः विट्सु, विशः ग्रामेषु च विभक्ता बभूवुः। ग्रामेषु बहवः कुटुम्बानि वसन्ति स्म। ग्रामाध्यक्षो 'ग्रामणी' इति ख्यातो बभूव। स ग्रामसेनानायक आसीत्। सततं ग्रामस्य सुरक्षायै प्रयत्नशीलो बभूव।

वैदिकयुगे सेनाया द्विविधं महत्त्वमासीत्। प्रथमं तावत् सेना विजय-कर्मणि प्रयुक्ता बभूव। सेनया स्वराष्ट्रस्य शत्रुभ्यः रक्षा कृता। अपरं च प्रजासु सेनया शान्तिः व्यवस्थापिता। राज्ये विपत्तावुपस्थितायां राजा सेनया सह सहायतार्थं प्रस्तुतोऽभूत्।

---

१. सचिवो युद्धमन्त्रीबभूव। मन्त्री परराष्ट्रसमस्याधिकृतोऽभवत्। पण्डितस्तु राष्ट्रे सदाचारप्रतिष्ठामकरोत्। सुमन्त्रः कोशाध्यक्ष आसीत्। अमात्यो राजकीयस्यायस्य चिन्तामकरोत्।

जातकानुसारं ग्रामाणां शासनं राजा ग्रामभोजकैरकारयत्। ग्रामभोजकः ग्रामे दण्डार्हानदण्डयत्, मादकवस्तूनां क्रय-विक्रययोः नियन्त्रणमकरोत्, पशु-वधं निषेधितवान्, ग्रामाभ्युदयस्य योजनाः कार्यान्विता अकरोत् च। ग्रामभोजकाः साधारणात आचारनिष्ठा बभूवुः।

ग्रामस्याभ्युदयार्थं ग्रामवासिनां सहयोग आदर्श आसीत्। कतिपयग्रामवासिनः प्रातरुत्थाय मार्गाणां जलाशयानां सभाभवनानां च स्वच्छतां स्वयं कुर्वन्ति स्म। तस्मिन् युगे स्वयंसेवका इव नागरिकाः कर्तव्यरूपेण ग्रामकृत्यानि—सार्वजनिकभवनानां निर्माणं मार्गस्य समतलविधानं सेतुरचनं जलाशयखननं च कुर्वन्ति स्म।[1]

महाभारतानुसारं राष्ट्रगुप्तिः राष्ट्रसंग्रहश्च शासनस्य द्वे अङ्गे बभूवतुः। राष्ट्रगुप्तिः राष्ट्रस्य रक्षणाय राष्ट्रसंग्रहः राष्ट्रस्याभ्युदयाय चास्ताम्। राष्ट्रस्य विविधाः परस्परानुबद्धा विभागाः शासननिमित्तं कृताः। तद्यथा ग्रामः, दशग्रामाः, विंशतिग्रामाः, शतग्रामाः, सहस्रग्रामाश्च परस्परं शासनसूत्रे प्रत्येकस्याधिपतिरिति ख्यातैरधिकारिभिः शासिताः। यस्मिन्नर्थे कश्चिदपि अधिपतिः उच्चतराधिकारिणां सहायतामपेक्षितवान् तदर्थं स तेभ्यो निवेदितवान्। इमेऽधिकारिणो ग्रामकृत्येषु सङ्ग्रामकृत्येषु च व्यापृता बभूवुः। ग्रामकृत्यं तु प्रागेव वर्णितम्। सङ्ग्रामकृत्यं युद्धमेवाभवत्। नगराणां शासनं सर्वार्थचिन्तकेन कृतम्।

अर्थशास्त्रानुसारं पुरा गुप्तचराणां नियोजनं राज्ञां प्रधानकर्म एवासीत्। गुप्तचरेभ्यः समाचारं विज्ञाय राजानः आत्मरक्षार्थं प्रजारक्षार्थं च योजनाः कार्यान्विताः कर्तुं समर्था बभूवुः। अपरं च—राज्ञः शासनतन्त्रेष्वजस्रं नियोग एव कौटिल्येन समीहितः। तथा हि—राजानमुत्तिष्ठमानमनूत्तिष्ठन्ते भृत्याः। प्रमाद्यन्तमनुप्रमाद्यन्ति। तस्मादुत्थानमात्मनः कुर्वीत। नाडिकाभिरहरष्टधा रात्रिं च विभजेत। तत्र पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात्। द्वितीये पौरजानपदानां कार्याणि पश्येत्। तृतीये स्नानभोजनं

१. कुलाबकजातके ३१

सेवेत। स्वाध्यायं च कुर्वीत। चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत। पञ्चमे मन्त्रपरिषदा पत्रसम्प्रेषणेन मन्त्रयेत। चारगुह्यबोधनीयानि च बोधेत्। षष्ठे स्वैरविहारं मन्त्रं वा सेवेत। सप्तमे हस्त्यश्वरथायुधीयान्पश्येत्। अष्टमे सेनापतिसखो विक्रमं चिन्तयेत्। प्रथमे रात्रिभागे गूढपुरुषान्पश्येत्। द्वितीये स्नानभोजनं कुर्वीत स्वाध्यायं च। तृतीये तूर्यघोषेण संविष्टश्चतुर्थ-पञ्चमौ शयीत। षष्ठे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत्। सप्तमे मन्त्रमध्यासीत गूढपुरुषांश्च प्रेषयेत्। अष्टम ऋत्विगाचार्यपुरोहितसखः स्वस्त्ययनानि प्रतिगृह्णीयात्।

समीचीनः शासनविधिः कौटिल्येन प्रस्तुतः। तद्यथा—उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत्। दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते। तस्माद्देवताश्रमपाषण्डश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधिता-नाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत्।

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्॥[1]

अर्थशास्त्रानुसारं राजा निर्जनप्रदेशेष्वभिनववसतीनां प्रतिष्ठायै व्यवस्था मकरोत्।

शासनतन्त्रस्य व्यवस्थायै विविधविभागानामध्यक्षाः, संख्यायकाः, गोपाः, स्थानिकाः, अनीकस्थाः (पशुचिकित्सकाः), चिकित्सकाः, अश्वदाः (अश्वशिक्षकाः) च बभूवुः। साधारणपदाधिकारिणो लेखकाः, रूपदर्शकाः, नीवीग्राहकाः, उत्तराध्यक्षाश्चासन्। एतेषां राजकर्मचारिणां कार्यपरिधौ राष्ट्रस्याभ्युदयाय, प्रजानां संरक्षणाय, साधूनां परित्राणाय, पापिनां विनाशाय च सर्वाः योजनाः समन्विता बभूवुः। दिङ्मात्रनिर्देशार्थम्—पौतवा-ध्यक्षः मापतोलयोः, पण्याध्यक्षः क्रयविक्रययोः, सुराध्यक्षः मदिरापानस्य, नावध्यक्षः नौव्यापारसुविधायाश्च व्यवस्थायां व्यापृता बभूवुः। समाहर्त्ता जनपदस्य सर्वेषां ग्रामाणां ग्रामवासिनां चेतिहासं योगं क्षेमं च संग्राहित-

१. अर्थशास्त्रस्य राजप्रणिधिप्रकरणात्।

वान्। नागरिकः नगराणां व्यवस्थामकरोत्, अग्निप्रकोपान्नगराणां सुरक्षायै समुचितविधानानि कृतवान्। प्रजापीडकेभ्यः प्रजां रक्षितुं त्रयोऽमात्याः प्रदेष्टारो वा नियुक्ताः।

चन्द्रगुप्तस्याशोकस्य च शासनपद्धतिः प्रायश उपर्युक्तविधानानुसारं सञ्चारिताऽऽसीत्। सांस्कृतिकदृष्ट्याऽशोकस्य शासनतन्त्रे यद्वैशिष्ट्यमासीत् तद् धर्मशासनमिति विख्यातम्। स राजकर्मचारिणां कृते उत्कारितवान्—देवानां प्रियस्य वचनेन तोसल्यां महामात्या नगरव्यवहारका वक्तव्याः—सर्वे मनुष्याः प्रजा मम। यथा प्रजायै इच्छामि अहं किमिति सर्वेण हितसुखेन ऐहलौकिकपारलौकिकेन युज्येरन् इति तथा मनुष्येषु अपि इच्छामि अहम्।

गुप्तयुगे केन्द्रीयशासनस्य महत्त्वं विशिष्टमासीत्। केन्द्रीयकार्यालयप्रधानः सर्वाध्यक्ष आसीत्। सर्वाध्यक्षः राजकीयशासनसूत्रेण प्रान्तेषु जनपदेषु च राजकर्मचारिणामनुबन्धनं कृत्वा सर्वत्र शासनस्य एकसूत्रतां प्रतिष्ठापितवान्। प्रान्ताधिपतीनां विषयपतीनां च साहाय्यार्थं दाण्डिकाः, चौरोद्धरणिकाः, दण्डपाशिकाः, नगरश्रेष्ठिनः, सार्थवाहाः, प्रथमकुलिकाः, प्रथमकायस्थाः, पुस्तपालाश्च नियुक्ताः।[1] ग्रामशासनाय ग्रामिकाः, महत्तराः, भोजकाश्च नियुक्ताः। ग्रामशासनस्य परिधौ ग्रामीणानां गृहक्षेत्र- मार्ग - मन्दिर - कूप-वनादीनां सुव्यवस्था कृता। सीमाकरः क्षेत्राणां मापं कृतवान्। ग्राममुख्यः ग्रामेयको ग्रामाध्यक्षो वा बभूव। कतिपयप्रदेशेषु 'पंचायत'-समा संस्था पंचमण्डली, ग्रामजनपदो वा बभूव। नगराणां शासनं पुरपालोऽकरोत्। तत्र नगरमहत्तराणां परिषदाधुनिकनगरपालिकासमाऽऽसीत्। नगरपरिषदां प्रचलनं परवर्तियुगे दक्षिणभारते विशेषरूपेण दृश्यते। नगरस्य सर्वोच्चाधिकारी पुरपालो

---

१. दाण्डिको दण्डव्यवस्थामकरोत्। सार्थवाहः व्यापारिणां संघानां संचालक आसीत्। प्रथमकुलिकः शिल्पकाराणां नेताऽऽसीत्। प्रधानकायस्थः प्रधानलेखको बभूव। पुस्तपालः शासनलेखानां संग्रहमकरोत्।

नागरिकाणां प्रतिनिधीनां परिषदः साहाय्येन नगरशासनमकरोत्। राजस्थानमध्यप्रदेश-गुर्जर-कर्णाट-कोङ्कणादिप्रदेशेषु नागरिकाणां प्रतिनिधीनां सभा कार्यकारिणीति ख्याता।

परवर्तियुगे ग्रामाणां शासनं तत्रत्यप्रधानपुरुषेण कृतम्।[1] तत्र शासनसहायाः कर्मचारिणः साहसाधिपतिः, ग्रामनेता, भागहारः, लेखकः, शुल्कग्राहः, प्रतिहारश्च बभूवुः।[2] दक्षिणभारते ग्रामसभायां सर्वे ग्रामवासिनोऽपि क्वचित् समागताः। तेषामेका कार्यकारिणी समितिः निर्मिता। क्वचिदुपसमितीनां निर्वाचनमपि कृतम्।

ग्रामाणां शासनव्यवस्था सर्वाङ्गीणा बभूव। तथा हि—आभिः ग्रामसभाभिः अकालपीडितानां प्राणरक्षा, दुर्बलेभ्यो भोजनदानम्, शिक्षणसंस्थानां धार्मिकसंस्थानां च संचालनं सार्वजनिकोपयोगिपूर्तादीनां निर्माणं च कृतानि।

## सेना युद्धं च

सेना राजत्वस्य प्रधानकारणं भवति। सिन्धुसभ्यतायुगीनानां राज्ञां महती सेनाऽऽसीदिति सम्भावना स्थाने स्यात्। तस्मिन्युगे राज्ञां युद्धानि बभूवुरिति प्रकल्पनं समीचीनम्।

### वैदिकयुगे

आर्याणामार्येतराणां च महती सेना, घोरयुद्धानि च सविशेषमुल्लेखनीयानि वर्तन्ते। इन्द्रो देवराजो देवसेनाया नेता बभूव। आर्याणां सेना प्रायशो राजभिरधिष्ठिता बभूवुः। युद्धे बाणानां विशेषोपयोगः कृतः। अन्यानि शस्त्रास्त्राणि—ऋष्ट्यङ्कुशशतघ्नीपरशुकृपाणवज्रादीनि बभूवुः। सैनिकाः कवचशिरस्त्राणादिभिः सुरक्षिता बभूवुः।

---

१. ग्रामप्रधानस्योपाधिः महाराष्ट्रे 'ग्रामकूटः', 'पट्टकीलो' वा, कर्णाटप्रदेशे 'गावुन्दः', उत्तरप्रदेशे महत्तरो महत्तमो वाऽभवत्।

२. साहसाधिपतिः न्यायकर्मणि व्यापृतो बभूव। ग्रामनेता ग्रामं दुर्वृत्तजनानामाक्रमणेभ्योऽरक्षत्। भागहारो ग्रामवृक्षाणां रक्षामकरोत्। लेखको गणक आसीत्। प्रतिहारः शस्त्रधरो योद्धाऽऽसीत्।

युद्धानि महोत्सवरूपेण सम्पादितानि। तत्र वीराणां हर्षनादः दुन्दुभि-प्रमुखवाद्यानां सिंहनादश्च मनोज्ञौ बभूवतुः। युद्धेषु प्रायः रथानामश्वानां चोपयोगः कृतः। वैदिकयुद्धकला सुविकसिता प्रतिभाति। शत्रूणां मार्गा-वरोधः, तेषां मार्गे पाशजालादीनां नियोजनं च कृते। मायाविभिः सह मायात्मकं युद्धं कृतम्।[1] युद्धकौशलमाकूनमिति ख्यातम्। उत्तरवैदिकयुगे दिग्विजयानां विशेषप्रचलनं बभूव। दिग्विजयिनः सम्राडिति उपाधिना समलंकृताः।

वैदिकयुगेऽपि कतिपयजनाः युद्धानां बिभीषिकाभिः परिचिताः दृश्यन्ते। तद्यथा कश्चिदृषिः स्पष्टं कथयति—

यस्मिन्नाजा भवति किं च न प्रियम्। ऋग्वेदे ७ ८३.२

वैदिकयुगेऽपि युद्धाचारस्य प्रतिष्ठाऽविद्यत। धर्मयुद्धं तु साफल्यस्य बीजं मतम्। तथा हि—मित्रावरुणौ युद्धे सत्यव्रतानां रक्षां कुरुत इति धारणाऽऽसीत्।

## जातकयुगे

वैदिककालानन्तरं प्रायः सदैव युद्धेषु हस्तिनां विशेषोपयोगो दृश्यते। जातकानुसारं स्तम्भभञ्जनाय, तोरणपातनाय, नगरद्वारभ्रंशनाय च हस्तिनां सहायताऽपेक्षिताऽऽसीत्।[2]

जातकेषु सेनायाः प्रयाणपथे विशेषसुविधानां प्रस्तुतिः वर्णिता दृश्यते। तथा हि—सेनापथे ग्रामाः निवेशिताः, तेषु ग्रामेषु भोजनवस्त्रालङ्कारादीनां संचयः कृतः। बहुविधयानानि तेषु ग्रामेषु प्रस्तुतानि। सुखसामग्रीणां तेषु ग्रामेषु समाहारः कृतः।

सनिमित्तानि युद्धानि साधारणतः सदैवापेक्षितानीति संख्यातम्, किन्तु निर्निमित्तानि युद्धानि प्राचीनग्रन्थेषु श्रूयन्ते। तथा हि—कलिङ्ग-राजः कदाचित् मन्त्रिणः प्राह योद्धुकामोऽस्मि। प्रतिपक्षी न दृश्यते। तर्हि

१. विष्णुर्वामनो भूत्वाऽसुराणां छलने सफलो बभूव।
२. संगामावचरजातके।

किं कर्तव्यम् ? मन्त्रिणः प्रोचुः—निजदुहितरः ग्रामाद् ग्रामं, नगरात् नगरं भ्रामय। यः कश्चित्ताः स्वभवने नेतुमिच्छति तेनैव सह योद्धव्यम्। अस्सकराजेन सहानया रीत्या सोऽयुध्यत।

केवलमपवादस्वरूपमेव पराजितैः राजभिः सह सद्व्यवहारो दृश्यते। काशिराजः पराजितान् नृपान् 'वयं न पुनः विद्रोहं करिष्यामः' इति गृहीत-शपथान् मुक्तवान्।[1] अपरे तु कतिपयविजेतारः पराजितं राजानं मारयन्ति स्म, कारागारे वा निक्षिपन्ति स्म।[2]

युद्धविज्ञानं विकसितमिव दृश्यते। तद्यथा—नगराणामवरोधः कृतः। नगरगामिमार्गेष्ववरुद्धेषु शीघ्रं नागरिका भोजनपानादीनामभावात् व्याकु-लीभूताः शत्रुराजस्य विजयं काङ्क्षन्ति स्म। तस्यां परिस्थितौ राजविद्रोहस्य सम्भावनाऽऽसीत्।[3] कदाचित् राजाऽपरस्य कस्यापि साधारणसैनिकस्य वेषं गृहीत्वा सैन्यसंचालनमकरोत्, राजवेषे तु साधारणसैनिकोऽयुध्यत।[4]

सेना चतुर्विधाऽऽसीत्—हस्तिसेना, रथसेना, अश्वसेना, पदातिसेना च। युद्धवीराणां क्वचित्परीक्षाऽपि राजभक्तिनिर्णयाय कृता। तद्यथा—कश्चिन्मन्त्री सहस्रसैनिकेभ्यः प्राह—यदि यूयं राज्ञे प्राणान् परित्यक्तुमु-द्यतास्तर्हि पर्वतादस्मादधःपातं प्रदर्शयत। यदा ते पतनासन्ना बभूवुः स तान्न्यवारयत्।[5]

राजधान्यां विजयोत्सवस्य प्रचलनमासीत्। अस्मिन्नुत्सवे राजा स्वलंकृतस्य नगरस्य प्रदक्षिणामकरोत्।[6]

### रामायणमहाभारतयोः युगे

अस्मिन्युगे एकाकिनो वीरस्य पराक्रमगाथा विशिष्टा दृश्यते। रामायणे रामो महाभारतेऽर्जुनश्चैकशः प्रायः स्वयुद्धकौशलं प्रदर्शयन्तौ विजयं

---

१. भोजाजानीयजातके २३
२. असातरूपजातके १००; एकराजजातके ३०३; घतजातके ३५५
३. असातरूपजातके १००
४. सिरिजातके १५६
५. चुल्लकालिङ्गजातके ३०१
६. बन्धनजातके १२०

प्रापतुः। युद्धपरायणा वीराः परस्परं वार्त्तालापमपि कृतवन्तः। व्याख्यान-रूपेण वार्त्तालापविषयेण तेषां सुप्रवृत्तीनां दुष्प्रवृत्तीनां च परिचयः प्राप्तुं शक्यते। दुष्प्रवृत्तयस्तु पराजयाय दैवविधानं संख्याताः।[1]

कतिपययुद्धानि धर्मसंस्थापनार्थाय बभूवुः। यज्ञविरोधिनो राक्षसाः पराजेतव्या मताः। तद्यथा रामायणे ताडकावधाय रामः प्रोत्साहितो विश्वामित्रेण—

विश्वामित्रः—स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम्।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः॥

बालकाण्डे २४.३०

रामः— गोब्राह्मणहितार्थाय देशस्यास्य सुखाय च।
तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः॥
एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिंदमः।
ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन्॥ तत्रैव २५.५-६

अपरं च रामः राक्षसान् प्रत्यवदत्—

युष्मान् पापात्मकान्हन्तुं विप्रकारान् महाहवे।
ऋषीणां तु नियोगेन प्राप्तोऽहं सशरायुधः॥ अरण्ये २०.६

निष्कारणं योद्धुकामाः बहवः तत्रासन्। तद्यथा दुन्दुभिरिति ख्यातोऽसुरः युद्धार्थं शत्रुमन्विष्यन् वालिनं प्राप्तवान्। स तेन युद्धे हतः।

युद्धदृश्यमद्भुतरससमाविष्टं बभूव। एकाकी रामः खरेण तस्य सहस्रवीराणां सेनया च सहायुध्यत। रामो बाणप्रहारैरसंख्यानां राक्षसानां वधं कृतवान्। तत्र छिन्नशरीराङ्गानां नर्तनं हस्त्यश्वादीनां मरणं भीषणशत्रुसंहरणं च सर्वं भयङ्करमेवाभूत्। द्वन्द्वयुद्धमपि पराक्रमपूर्णमासीत्। तत्र गदाबाणाश्वकर्णसप्तपर्णखड्गतोमरशक्तिपट्टिशादीनामस्त्रशस्त्राणां प्रयोगोऽभवत्। रात्रावपि क्वचिद्युद्धानि बभूवुः। शब्दवेधिबाणाः प्रयुक्ताः। तत्र म्रियमाणानां वीराणां व्यथापूर्णो ध्वनिः दुन्दुभिनिनादेन प्रत्याहतः।

---

१. रामायणे अरण्यकाण्डे २६ सर्गतः

भिन्नदेहानां सैनिकानां चिकित्सायै क्वचित् साधनानि समुपस्थापितानि बभूवुः ।

युद्धप्रयुक्तानामस्त्रशस्त्राणां संख्याऽगणितैव परिलक्ष्यते । दिव्यास्त्राणां प्रयोगः प्रचलित आसीत् ।[1]

सन्ध्यायां प्रायः युद्धाद्विश्रामोऽभवत् । राक्षसा अपि तदेव कुर्वन्ति स्म । आत्मप्रशंसायां रता वीराः निन्दिता गण्यन्ते स्म । मत्तप्रमत्तसुप्तपरित्यक्तादीनां जनानां हन्ता भ्रूणहेति मतः । शरणागतो जनो रक्षितः । सत्यवादिनो दूताः शत्रुसेनायामपि दुर्वार्ताः कथयन्तोऽपि वध्या न मताः । युद्धारम्भात्प्राक् सन्धिप्रस्तावः समीचीनोऽभिमतः ।

सैन्यप्रयाणं शुभमुहूर्ते समारब्धम् । कश्चित् कुशलः सेनापतिः प्रयाणमार्गस्य पर्यवेक्षणायाग्रेऽगच्छत् । सेनापतिः सैन्यार्थं भोजनपानादीनां सुलभतां दृष्ट्वा प्रयाणपथं निर्णीतवान् । क्वचित् शत्रुभिर्विषाक्तेभ्यो भोजनपानादिभ्यः सेना सुरक्षिता । वनदुर्गेषु गूढैः शत्रुसैन्यैः स्वपक्षस्य रक्षा करणीयाऽऽसीत् । प्रयाणमार्गे सेनासन्निवेशः सुखेन कारितः । सैन्यं परितः कतिपयवीराः निरन्तरं परिभ्रमणं चक्रुः । मार्गस्य नद्यः सेतुभिः संलंघिताः ।

सैन्यस्याष्टाङ्गानि गणितानि तद्यथा—

रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ।
विष्टिर्नावश्चराश्चैव देशिका इति चाष्टमम् ॥ शान्ति० ५९.४१

सेनाविभागाः पत्तिः सेनामुखं (गुल्मः) गणः वाहिनी पृतना चमूः

---

१. कतिपयास्त्रशस्त्राणि परिगणितानि—दण्डचक्र-धर्मचक्र-वज्र-ब्रह्मास्त्र-वरुणपाशाग्नेयास्त्र-मुसल-प्रस्वापन-प्रशमन-सौर वर्षण-शोषण-पैशाचादीनि ।

अनीकिनी च उत्तरोत्तरं त्रिगुणाः बभूवुः ।[१] रथेषु चत्वारः अश्वाः प्रायः नियोजिताः । सारथिना सह चत्वारः योद्धारः रथे उपाविशन् । हस्तिनः उपरि द्वौ अङ्कुशधरौ, द्वौ धनुर्धरौ, द्वौ असिधरौ, एकः शक्तिधरः, एकः पिनाकधरश्चोपाविशन् । रथस्य रक्षायै दश हस्तिनः, हस्तिनः रक्षायै दशाश्वाः, अश्वस्य रक्षायै दश पदातयो नियोजिताः । सेनायाः प्रमुखवीराः महारथिनः, अर्धरथिनश्चेति प्रविभक्ताः । तत्रैकः सर्वसेनापतिः नियुक्तः । तस्मिन् मृते कश्चिदपरः सर्वसेनापतिः नियुक्तः । प्रमुखवीराः स्वध्वजैः शङ्खैर्वा विशेषिताः ।

महाभारतयुगे शतघ्नी महास्त्रमासीत् । युद्धसामग्रीणामस्त्रशस्त्रादीनां च परिगणनमीदृशमासीत्—

सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ।
सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सहर्ष्टयः ॥
सध्वजाः सपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिः सपाशाः सपरिच्छदाः ॥
सकचग्रहविक्षेपाः सतैलगुडवालुकाः ।
साशीविषघटाः सर्वे ससर्जरसपांसवः ॥
सघण्टफलकाः सर्वे सायोगुडजलोपलाः ।
सशालभिन्दिपालाश्च समधूच्छिष्टमुद्गराः ॥
सकाण्डदण्डकाः सर्वे ससीरविषतोमराः ।
सशूर्पपिटकाः सर्वे सदात्राङ्कुशतोमराः ॥
सकीलकवचाः सर्वे वासीवृक्षादनान्विताः ।
व्याघ्रचर्मपरीवारा द्वीपिचर्मावृताश्च ते ॥

---

१. एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥
सेना पंचशतं नागा रथास्तावन्त एव च ।
दशसेना च पृतना पृतना दशवाहिनी ॥ उद्योगपर्वणि १५५.२५

सहर्ष्टयः सश्रृङ्गाश्च सप्रासविविधायुधाः ।
सकुठाराः सकुद्दालाः सतैलक्षौमसर्पिषः ॥[१]

बहूनि तत्रालौकिकान्यस्त्राणि बभूवुः । तथा हि—शरं सन्धाय पर्जन्यास्त्रेण संयोज्य च पृथ्वीं वेधयित्वा ततः वारिधारोत्पादिता ।[२] ब्रह्मेषीकायाः अग्निः प्रज्वालितः । तेन शत्रूणां दहनं कृतम् ।[३]

युद्धाय प्रस्थानं प्रतिदिनमुत्सव एवाभूत् । तथा हि—

आप्लाव्य शुचयः सर्वे स्रग्विणः शुक्लवाससः ।
गृहीतशस्त्रा ध्वजिनः स्वस्तिवाच्यहुताग्नयः ॥
सर्वे ब्रह्मविदः शूरा सर्वे सुचरितव्रताः ।
प्रययुः सर्व एवैते भारद्वाजपुरोगमाः ॥ उद्योगे १६५.३-५

युद्धवाद्यानि प्रयाणकाले तुमुलध्वनिं कुर्वन्ति स्म । वीरा युद्धभूमौ वृषभवन्नादं कृतवन्तः शङ्खान् दध्मुश्च ।

सेनाभिः सह सैन्यसन्निवेशे सूताः, मागधाः, वन्दिनः, व्यापारिणः, गणिकाः, चाराः, दर्शकाश्च निवसन्ति स्म । रुग्णानां व्रणितानां च सैनिकानामुपचाराय वैद्याः नियुक्ताः । सन्ध्याकाले तूर्यादिभिः माङ्गलिको ध्वनिः कृतः । मनोरञ्जनाय रात्रिकाले नर्तकाः नृत्यन्ति स्म । शिबिरेषु स्त्रियः वर्षवराश्च सेवार्थं नियुक्ताः ।[४]

प्रायशः भूम्यर्थं युद्धानि कृतानि । तद्यथा महाभारते प्रोक्तम्—

भूमौ च जायते सर्वं भूमौ सर्वं विनश्यति ।
भूमिः प्रतिष्ठा भूतानां भूमिरेव परायणम् ॥
यस्य भूमिस्तस्य सर्वं जगत् स्थावरजंगमम् ।
तत्रातिगृद्ध्रा राजानो विनिघ्नन्तीतरेतरम् ॥भीष्म० ४.२०-२१

---

१. उद्योगपर्वणि १५५.३–६ । अन्यदपि सविशेषं तत्रैव द्रष्टव्यम् ।
२. भीष्मपर्वणि १२० २३–२४ ३ सौप्तिकपर्वणि १३.२२; १४.७–१०
४. उद्योगपर्वणि १६५.१८–१६; द्रोणपर्वणि ७२.११–१३; ८५.७,१७ शल्यपर्वणि ६२.५

क्वचित् प्रजानां सामूहिकरूपेण दस्युभिः सह युद्धमभूत्। दस्युभिः सह युद्धं कर्तुं राजाऽपि सेनया सह प्रयाणमकरोत्।[१] राजकन्यानां कृते स्वयंवरावसरे प्रायः युद्धानि समारब्धानि। गवार्थं बहूनि युद्धानि महाभारते दृश्यन्ते।

महाभारतकालीनो युद्धाचारः प्रशस्तः। तथा हि—युद्धे जिताः यशोहीनाः, स्त्रीभिः रक्षिताः, पराक्रमरहिताः शत्रवो न मारणीयाः। युद्धस्थले दर्शका रक्षितव्याः। दिव्यास्त्रैः शत्रुमारणमसमीहितम। मायाविभिः सहैव केवलं कुटिलं युद्धं समीचीनं मतम्। अतिकटु वदन्नपि दूतोऽक्रोधनीयोऽभवत्। युद्धाय धर्माः समयाश्च प्राक् प्रकल्पिताः। महाभारतयुद्धे तु—

निवृत्ते विहिते युद्धे स्यात् प्रीतिर्नः परस्परम्।
यथापरं यथायोगं न च स्यात् कस्यचित् पुनः॥
वाचा युद्धप्रवृत्तानां वाचैव प्रतियोधनम्।
निष्क्रान्ताः पृतनामध्यान्न हन्तव्याः कदाचन॥
रथी च रथिना योध्यो गजेन गजधूर्गतः।
अश्वेनाश्वी पदातिश्च पदातेनैव भारत॥
यथायोगं यथाकामं यथोत्साहं यथाबलम्।
समाभाष्य प्रहर्तव्यं न विश्वस्ते न विह्वले॥
एकेन सह संयुक्तः प्रपन्नो विमुखस्तथा।
क्षीणशस्त्रो विवर्मा च न हन्तव्यः कदाचन॥ भीष्म० १.२७-३१

महाभारते स्पष्टं प्रोक्तम्—यतो धर्मस्ततो जयः।[२] अपरं च—

न तथा बलवीर्याभ्यां जयन्ति विजिगीषवः।
यथा सत्यानृशंसाभ्यां धर्मेणैवोद्यमेन च॥ भीष्म० २१.६-१०

विपक्षेऽपि स्थितेभ्यो गुरुभ्योऽनुमतिमाशीर्वादं च गृहीत्वा वीराः युद्धं समारभन्त।

युद्धाचारानुसारमवध्यानां संख्याऽनल्पैव समभवत्। तथा हि—स्त्रियः,

---

१. शान्तिपर्वणि ७८.३५ ३७; १००.४ २. भीष्मपर्वणि २.१४

शरणागताः, प्रमत्ताः, सुप्ताः, बालकाश्च न हन्तव्याः। ये केचित् मुखे तृणं धारयित्वाऽऽगच्छन्ति ते न प्रहर्तव्याः। व्यसनग्रस्तः सन्तानहीनो वाऽवध्यो मतः। सन्नाहरहितैः सह युद्धमपि न शोभनं विचारितम्।

युद्धस्थले मरणासन्नस्य महावीरस्य समीपमन्ये पार्थिवा उपतिष्ठन्ति स्म। सहस्रशः कन्याः तत्र गत्वा चन्दनचूर्णैः लाजैः माल्यैश्च सर्वशोऽवाकिरन्। सर्वे तस्याभिवादनं कृत्वा तस्योपभोगाय सामग्रीमुपाजह्रुः।

विजिता राजानः वर्षपर्यन्तं वन्दिनः एव विनीताः। ततः पश्चात् ते विजेतुः पुत्रवतु सम्मानिताः। विजिताः कन्याः वर्षान्ते पितुर्गृहं गन्तुमनुमताः। युद्धकाले द्वयोः सैन्ययोर्मध्ये यदि कोऽपि सन्धिकामो ब्राह्मण आगच्छत् तर्हि युद्धं स्थगितम्। अन्यथाव्यवहारिणः जातिबहिष्कृता एव निर्मर्यादिताः।[1]

विपक्षे स्थितानामादरणीयपुरुषाणां प्रणामं कर्तुं कुशलं प्रष्टुं च तेषां चरणस्य कर्णस्य च समीपं बाणौ निक्षिप्तौ।[2]

महाभारतयुगे युद्धविज्ञानं विकसितमासीत्। प्रयोजनानुसारं सेनानां बहुविधा व्यूहा रचिताः। युद्धार्थिनां सैनिकानां शिक्षा परीक्षा च सम्यक् प्रकारेण कृते। तेषां व्यायामेषु नित्यपरिश्रमोऽपेक्षितः। कुलीनाः यशस्विनः मनस्विनश्च सेनार्थं स्वीकृताः।

महाभारतकाले युद्धस्य लोकप्रियता संवर्धिता। धर्मयुद्धे क्षत्रियाणां प्राणत्यागः प्रशस्ततमो मतः।[3] कतिपयविचारकाः युद्धे नरसंहारं दृष्ट्वैव विधानं चक्रुः यत्—

> उपायविजयं श्रेष्ठमाहुर्भेदेन मध्यमम्।
> जघन्य एव विजयो यो युद्धेन विशाम्पते॥ भीष्म० ३.८१

युद्धदृश्यं तु प्रायः द्वन्द्वमयमासीत्। तत्र रथिनां युद्धे रथाः परस्परसंघट्टेन चूर्णिताः, हस्तिनः परस्परं दन्तेन विदारिताः, वीराणां

---

१. शान्तिपर्वणि ९६ अध्यायतः।   २. विराटपर्वणि ५३.६-८

३. क्षत्रियाणां व्याधिमरणं शय्यामरणं वा निन्दितमेव। भीष्मपर्वणि १२२.२६-३१

प्रहारेण हस्तिनः मारिताः। गदामुसलादिभिराहता असिना छिन्नाः, हस्तिदन्ताभ्यां विदारिताः, हस्तिपादैः मर्दिताः वा धराशायिनो वीराः परस्परमाक्रोशन्ति स्म। हस्तिभिः रथा अश्वाश्च मर्दिताः। अश्वानां पादघातैः बहवो व्रणिताः। वीभत्सं सर्वं युद्धदृश्यमासीत्। तद्यथा भीष्मपर्वणि प्रोक्तम् —

गजवाजिमनुष्याणां शोणितान्त्रतरङ्गिणी।
प्रावर्तत नदी तत्र केशशैवलशाद्वला॥ ६३.२७

युद्धस्थले क्वचिद्वाग्युद्धमपि समारभत।[1] स्वपक्षस्य विपक्षस्य वा वीरमधिकृत्य यत्सर्वमवद्यं प्रोक्तं तदशोभनीयमासीत्। तत्र कदाचित् कचाकचि दन्तादन्ति नखानखि युद्धमपि दृष्टम्। मुष्टियुद्धं मल्लयुद्धं च क्वचित् समारभेताम्।

विजेतॄणां स्वागतं सोत्सवं सम्पादितम्। सर्वे स्वलंकृताः पुरवासिनः कुमारीभिः गणिकाभिश्च सह वाद्यैः तुमुलीकृतवातावरणे विजेतॄणामभिनन्दनं कुर्वन्ति स्म। तदा राजमार्गेषु पताकाः सज्जिताः, सर्वे देवाः पूजिताश्च। नागरिकाः हस्ते मंगलद्रव्याणि गृहीत्वा, स्त्रियो बहुमूल्यवस्त्राणि परिधाय च सूतमागधादिभिः सह नगराद् बहिरेत्य सुगन्धिभिः अलङ्कारमालादिभिश्च विजेतॄन् प्रसाधितवन्तः।[2]

अर्थशास्त्रानुसारं राज्यं परितः सर्वेषामन्येषां राज्यानां शासकाः शत्रवो मताः। तेषां न्यक्करणं समीचीनं कल्पितम्। शत्रूणां शत्रवो मित्रवत् दृष्टाः। ईदृशं वातावरणं युद्धोत्पादकमासीत्। पार्श्ववर्तिनो राजानःपरस्परमयुध्यन्तेति चिन्तनीयमासीत्। इयं युद्धपरम्परा सर्वेषां हानयेऽभवत्।

अर्थशास्त्रयुगे विविधानि युद्धोपकरणानि बभूवुः। प्रथमं तावदस्त्रशस्त्राणां वर्गीकरणं दर्शनीयम्।

---

१. कर्णपर्वणि ४४,४६ तथा ६८ अध्यायतः।
२. विराटपर्वणि ३४.१५-१६; ६८ अध्यायतः।

स्थिरयन्त्राणि—सर्वतोभद्रजामदग्न्यबहुमुख-विश्वासघाती - संघाटी-यानकपर्जन्यकार्धबाहूर्ध्वबाहवश्च ।

चलयन्त्राणि—पाञ्चालिकदेवदण्डसूकरिकामुसलयष्टिहस्तिवारकताल-वृन्तमुद्गरगदास्पृक्तलाकुद्दालशतघ्नीत्रिशूलचक्रादीनि ।

हलमुखानि—शक्तिप्रासकुन्तहाटकभिन्दिपालशूलतोमरवराहकर्णकणय-त्रासिकादीनि ।

धनूंषि—कार्मुककोदण्डद्रुणादीनि ।

खड्गाः—निस्त्रिंशमण्डलाग्रासियष्टयः ।

क्षुरकल्पानि—परशुकुठारपट्टिशखनित्रकुद्दालचक्रकाण्डच्छेदनानि ।

आयुधानि—यन्त्रपाषाणगोष्पणपाषाणमुष्टिबाणरोचनीदृषदादीनि ।

वर्मावरणैश्च शरीरस्य विविधाङ्गानां रक्षा कृता ।

अर्थशास्त्रयुगात् युद्धप्रकरणे दुर्गविधानस्य महत्त्वमवर्धत । राज्य-सीमान्ते राजधान्यामटव्यां मरुभूमौ, पर्वते, जलप्रदेशे च शत्रूणामाक्रमणस्य निवारणाय दुर्गरचना कृता । दुर्गे स्थित एव राजा शत्रोर्विनाशं कर्त्तुमचेष्टत ।

कौटिल्यानुसारं त्रिविधं युद्धमासीत्—प्रकाशं कूटं तूष्णीकं च । प्रकाशं युद्धं प्रकाशे एव निर्दिष्टे देशे काले च बभूव । कूटं युद्धं कपटमय-मभवत् । तत्रासाधुव्यवहारेण शत्रोर्विनाशः कृतः । तूष्णीकयुद्धे विपक्षी सेनापतिः मन्त्रबलेन स्वपक्षे नीतः । क्वचित्तीक्ष्णपुरुषाणां नियुक्तिः शत्रुविनाशाय कृता । ते विषप्रयोगेण शत्रूणां मारणं सम्पादितवन्तः । दुर्गविजयाय कौटिल्यः पञ्चोपायान् निर्दिशति । तद्यथा—उपजापः, अपसर्पः, वामनः, पर्युपासनमवमर्दश्च । उपजापेन विपक्षे परस्परवैमनस्य-मुत्पादितम् । अपसर्पेण गूढपुरुषाणामुपयोगः कृतः । वामनेन विपक्षिणः स्वपक्षे धृताः । पर्युपासनं तु शत्रोरुपरि परित आक्रमणम् । अवमर्दस्तु साक्षादाक्रमणमेव । अग्नियोगेन दुर्गाणां प्रदहनायाग्निः समुत्पादितः ।

कौटिल्यः विजयिनां राज्ञां कर्तव्यं निर्दिशति । तथा हि—

चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत् ।
प्रवर्तयेन्न चाधर्म्यं कृतं चान्यैर्निवर्तयेत् ॥

कौटिल्यानुसारं विजयाय न कदापि ग्रहनक्षत्रादीनां प्रतीक्षा करणीया। स्वप्रयत्नैः सफलता लभ्या भवति, न तु ग्रहनक्षत्रादिकैः।

भारतीयसैन्यबलस्योत्कर्ष ऐतिहासिकयुगे 'अलक्षेन्द्रस्य' आक्रमणावसरे प्रतीतः। बह्वो वन्यजातीनां सेनाः स्वतन्त्रतां रक्षितुं प्राणपणेनाचेष्टन्त। ईदृशीषु जातिषु प्रथममश्वका दृश्यन्ते। तैः सह युध्यमानोऽलक्षेन्द्रः क्षतविक्षतो बभूव। ते सर्वेऽश्वकाः समरे मारिताः। पञ्चनदप्रदेशस्य बन्दीभूताः सैनिका अलक्षेन्द्रस्य सेनायां सम्मिलिता न बभूवुः। ते सर्वे शनकैः पलायितुमचेष्टन्त। अपरेद्युः विफला एव ते मारिताः। महाराजेन पौरवेणालक्षेन्द्रस्य महायुद्धमभवत्। स प्रार्थितोऽपि कदापि अलक्षेन्द्रस्याधिपत्यं नैच्छत्, अपितु युद्धमेव दातुमियेष।

मौर्ययुगे राजकीययुद्धसमारम्भे नौसेनायाः महत्त्वं सविशेषमभवत्। युद्धस्थले हस्तिनामुपयोग आधुनिकटैङ्कवत् कृतः। चन्द्रगुप्तस्य मौर्यस्य सेनायां ६,००० हस्तिनः समायुक्ताः बभूवुः। सेनायाः शासनार्थं षट् समितय आयोजिता आसन्। ताः सेनायाः विविधाङ्गानां सुव्यवस्थां चक्रुः। तत्कालीनधनूंषि पुरुषवत् प्रलम्बानि बभूवुः। द्वन्द्वयुद्धं प्रायोऽसिना कृतम्।

युद्धकालेऽपि प्रजाः स्वकर्मणि शान्तमनसा व्यापृता बभूवुः। कृषका युद्धभूमेः समीपमपि शान्तमनसः कृषिं कुर्वन्ति स्म। शत्रुभूमेः प्रदाहनं वृक्षाणां छेदनं वा निषिद्धमासीत्।[१]

युद्धं प्रति विरागस्य भावना महाराजस्याशोकस्य मनसि संवर्धिता। तेनोल्लिखितम्—तदस्ति अनुशोचनं देवानां प्रियस्य विजित्य कलिङ्गान्। अविजितं हि विजितं यत् तत्र वधः वा मरणं वा अपवाहः वा जनस्य। इच्छति हि देवानां प्रियः सर्वभूतानामक्षतिं संयमं समचर्यां मार्दवम्। एषः च मुखमतः विजयः देवानां प्रियस्य यः धर्मविजयः। गाढा सा भवति प्रीतिः धर्मविजये। ये पुत्राः प्रपौत्राः मे सन्तु ते नवविजयं मा विजेतव्यं मन्येरन्।

---

१. Ancient India P. 31-32

तमेव विजयं मन्यन्तां यः धर्मविजयः । स ऐहलौकिकपारलौकिकः । सर्वा च निरतिः भवतु या श्रमरतिः ।[१]

परवर्तियुगे भारतीयसैन्यव्यवस्थायां शैथिल्यमजायत । सैनिकानां जीवन-विन्यासो विलासपूर्णोऽभवत् । सेनया सह राजदाराणां नायिकानां वेश्यानां मदिराघटवाहकानां च निर्याणमभवत् । मार्गे स्थाने स्थाने सन्निवेशकाले पुष्पावचय-वनविहार-जलक्रीडा-गोष्ठी- मधुपान - प्रणयालापादीनामायोजनं कृतम् ।[२] सेनायाः परिमाणं बृहदासीत् । हर्षस्य सेनायां प्रारम्भकाले ५००० हस्तिनः २०,००० अश्ववाराः, ५०,००० पदातयश्च बभूवुः । पश्चादश्व-वाराणां संख्या १००,००० हस्तिनां संख्या ६०,००० बभूवतुः । रथसेनानां प्रचलनं गुप्तयुगादेव न दृश्यते ।

युद्धानि त्रिविधानि बभूवुः—भारतीयानां राज्ञां पारस्परिकं युद्धम्, भारतीयानां राज्ञां वैदेशिकैः आक्रमणकारिभिः सह युद्धम्, बृहत्तरभारते उपनिवेशस्थापनार्थं युद्धम् । प्रथमद्विविधैः युद्धैः भारतस्य प्रायशो जर्जरत्वमेव घटितम् । पारस्परिकं युद्धं भारतस्य विनाशायाभूत् । न क्वचित् शास्त्रेष्वपि पारस्परिकयुद्धानां निषेधो विद्यते । वैदेशिकाक्रमणकारिभिः सह योद्धुं भारतीयानां संघाः अपवादरूपेणैव निर्मिताः । कतिपयभारतीयनृपा वैदेशिकैः सह सन्धिं कृत्वा भारतस्य स्वातन्त्र्यविनाशाय उद्युक्ता इति शोचनीयमेव ।

## न्यायव्यवस्था

वैदिकधारणानुसारं दण्डव्यवस्थायाः प्रथमाधिष्ठाता वरुण एव प्रकल्पितः । वरुणस्य चराः विश्वमखिलं पर्यालोचयन्तः पापकारिणः दण्डाधानाय चिन्वन्ति । स्वयं वरुणो मानवानां सदसतोः परीक्षकः पापिनः दण्डयति । वरुणोऽनवधानेन पापं कुर्वतो जनान् क्षमते ।

उपर्युक्तविवरणेन वैदिकानां राज्ञां न्यायव्यवस्था परिचीयते । राजानः

---

१. अशोकस्य त्रयोदशशिलालेखात् ।

२. शिशुपालवधे ५-१० सर्गतः

वरुणासमाः दण्डविधानं कुर्वन्ति स्म । वैदिकयुगे सभाऽपि न्यायकर्मणि व्यापृता बभूव । ग्रामेषु ग्राम्यवादिनो न्यायं कृतवन्तः । प्रश्नविवाका न्याय-कर्मणोऽधिकृताः ।

न्याय-व्यवस्थायाः वैदिकयुगीना प्रक्रिया सरला बभूव । साक्षिणां महत्त्वमल्पमेवासीत् । शपथमात्रेण निर्दोषत्वं सिद्धं कृतम् । क्वचिदाशुदण्ड-विधानमपि प्रचलितमासीत् । तथा हि—चौराः अधमर्णाश्च निगडिताः एव बाधिताः । चौर्याभियुक्ताः तप्तलौहखण्डं गृहीत्वाऽदग्धाः एव निर्दोषा गणिताः ।

वैदिकयुगे कठोरा दण्डव्यवस्था बभूव । तद्यथा—प्रजानां मेषाणां हन्ता ऋज्राश्वः पित्राऽन्धीकृतः । राज्ञः विद्रोहिणः पुरोहिता मृत्युदण्डभागिनो बभूवुः । चौरास्तु प्राणवियुक्ताः कृताः । 'अपराधो मया कृतः' इति कथनमात्रेण पापस्य सम्मार्जनं मतम् ।[1]

महाभारतानुसारं ब्राह्मणाः समाजायाचारपद्धतिं व्यवस्थापितवन्तः । आचारपद्धतेः च्युता जना राज्ञा दण्डनीया घोषिताः । मृत्युदण्डोऽपवाद-रूपेण दत्तः । चतुर्विधाः दण्डाः ख्याताः—उद्वेजनं ( शरीराय कष्टकरम् ) बन्धनं विरूपकरणं वधश्च । पुरोहितशरणं गत्वा यदि पापी कथयेत्—नाहं पापं पुनः करिष्यामि, स मुक्तोऽभवत् । वानप्रस्था ब्राह्मणा वाऽपराधिनः राजदण्डभागिनो बभूवुः । स्वबन्धवः सम्बन्धिनो वा राज्ञा दण्डनीया इति विधानमासीत् । न्यायपद्धतौ सर्वे समानाः गणिताः । न्यायव्यवस्थायाः तत्कालीनं स्वरूपमधोलिखितश्लोकैः परिचीयते—

कार्येष्वधिकृताः सम्यक्कुर्वन्तो वा नृपानुगाः ।
आत्मानं पुरतः कृत्वा यान्त्यधः सहपार्थिवाः ।।
ततः साक्षिबलं साधु द्वैधवादकृतं भवेत् ।
असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः ।।

---

१. शतपथब्राह्मणे २.५.२.२०

अपराधानुरूपं च दण्डं पापेषु धारयेत्।
वियोजयेद्धनैः ऋद्धानधनानथ बन्धनैः॥
कामकारेण दण्डे तु यः कुर्यादविचक्षणः।
स इहाकीर्तिसंयुक्तो मृतो नरकमृच्छति॥
न परस्य प्रवादेन परेषां दण्डमर्पयेत्।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयीत वा॥[१]

न्यायाधिकारे श्रेष्ठामात्या नियुक्ताः। न्यायालये साक्षिणां सत्यप्रवणतायै धार्मिकानुशासनं प्रस्तुतम्। तथा हि—

पृष्टो हि साक्षी यः साक्ष्यं जानानोऽप्यन्यथा वदेत्।
स पूर्वानात्मनः सप्त कुले हन्यात्तथापरान्॥
यश्च कार्यार्थतत्त्वज्ञो जानानोऽपि न भाषते।
सोऽपि तेनैव पापेन लिप्यते नात्र संशयः॥

आदिपर्वणि ७.३-४

न्यायकर्मणि चिरकारिताऽप्रशस्ता मता। न्यायाधिकारे नियुक्ता जनाः प्रतिदिनं यथाकालं धर्मासनमधिष्ठाय धर्मनिर्णयं कुर्वन्त्विति विधानमासीत्। अलसाः राजानः नृगवद्दण्डनीया मताः।[२]

बौद्धसाहित्यानुसारं तत्कालीनन्यायकर्म सरलं सहजं च प्रतिभाति। वादी प्रतिवादी च राज्ञः समक्षं वादं प्रतिवादं च क्रमशः प्रस्तुतः स्म। राजा स्वयमपि स्वसन्देहनिवारणाय तान् प्रश्नानपृच्छत्। मिथ्यावादी तु क्वचिदन्धीकृतः। तस्य जिह्वा वा छिन्ना। जनपदेषु ग्राममुख्यः साधारणन्यायं कृतवान्। न्यायाधिकारेणाधर्मं कुर्वतः जनान् राजा दण्डयति स्म।[३] राज्ञः पुरोहिताः सेनापतयश्च क्वचित् न्यायाधिकारे नियुक्ता बभूवुः।

उपर्युक्तयुगे बन्दिनां जीवनं कठोरमभूत्। तेषां शारीरिकदण्डाय यः प्रतोदः कृतः तस्मिन् कण्टकानि जटितानि बभूवुः।

---

१. शान्तिपर्वणि ८५.१७-२५ २. रामायणे उत्तरकाण्डे ५३ सर्गतः
३. गामणीचण्डजातके २५७

मौर्ययुगीनन्यायव्यवस्थायाः कठोरत्वं सुप्रसिद्धम्। मिथ्यावादिनां साक्षिणामङ्गानि छेदितानि। जलपरीक्षया सन्दिग्धस्थले सत्यासत्ययोर्विवेकः कृतः। प्रायोऽपराधिनः स्वापराधं स्वीकुर्वन्ति स्म। राजाऽपि न्यायकर्मणि व्यापृतो बभूव।

महाराजोऽशोको न्यायाधीशेभ्य आदेशं कृतवान्—सर्वे मनुष्याः प्रजा मम। पश्यत हि यूयमिदं सुविहिता अपि नीतिरियम्। एकः पुरुषोऽप्यस्ति यो बन्धनं वा परिक्लेशं वा प्राप्नोति, तद्भवति अकस्मात् तेन बन्धनान्तिकम्। अन्यच्च, बहुजनः दवीयः दुःखीयति। ततः एष्टव्यं युष्माभिः किमिति मध्यं प्रतिपादयेम इति। एभिस्तु जातैः न सम्प्रतिपद्यते ईर्ष्ययाऽश्रमेण नैष्ठुर्येण त्वरयाऽनावृत्त्याऽऽलस्येन तन्द्रया। एवं कुर्वन्तः स्त, उद्गच्छत। संचरितव्यं, व्रजितव्यं, एतव्यं वा। एवमेव यत् पश्यथ यूयं तेन वक्तव्यम्—"आज्ञां न पश्यथ एवं च एवं च देवानां प्रियस्यानुशिष्टिः।' एतस्मै अर्थाय इयं लिपिः लिखिता इह येन नगरव्यवहारकाः शाश्वतं समयं युञ्ज्येरन्।[१]

राजकीयोत्सवकाले बन्दिनां बन्धनविमुक्तिरायोजिता।

गुप्तयुगीने शासने दण्डव्यवस्था प्रायः मृदुला बभूव। मृत्युदण्डः प्रायोऽप्रचलित आसीत्। अङ्गच्छेदनमेव महत्तमो दण्डो बभूव। दाण्डिकाः, चौरोद्धरणिकाः, दण्डपाशिकाश्च दण्डव्यवस्थया सम्बद्धा बभूवुः। स्वयं राजाऽपि धर्मासनाधिकरणेऽधिष्ठितः सन् न्यायमकरोत्।

ह्वेनसांगानुसारमभियुक्तानामपराधित्वस्य निर्णयाय बहुविधाः दिव्यपरीक्षाः कृताः। तथा हि—जलपरीक्षा, अग्निपरीक्षा, तुलापरीक्षा, विषपरीक्षा च।

सूत्रस्मृतिग्रन्थेषु प्रतिपादितो न्यायविधिः भारते शाश्वतरूपेण प्रतिष्ठितो बभूव। तेषु मनुस्मृतिः सर्वव्यापिनीति ख्याता। मनुस्मृतौ वैज्ञानिकविधिना विवादविषयाणां विवेचनं दृश्यते। तथा हि—विवादास्तावदष्टादश-

---

१. कलिङ्गशिलालेखात्

विधा:—ऋणादानम्, निक्षेप:, अस्वामिविक्रय:, सम्भूयसमुत्थानम्, दत्तस्यानपकर्म, वेदनादानम्, संविद्व्यतिक्रम:, क्रयविक्रयानुशय:, स्वामिपालविवाद:, सीमाविवाद:, वाक्पारुष्यम्, दण्डपारुष्यम्, स्तेयम्, साहसम्, स्त्रीसंग्रहणम्, स्त्रीपुंधर्म:, विभाग:, द्यूतसमाह्वय: च। एतेभ्यो व्यतिरिक्ता: विषया: प्रकीर्णकोटौ गणिता:।

सूचका: स्तोभकाश्चापराधिनां विवरणं दातुं प्रयुक्ता:। मनुप्रणीतो न्यायमार्ग: दर्शनीय एव। तद्यथा—

व्यवहारान्दिदृक्षुस्तु ब्राह्मणै: सह पार्थिव:।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीत: प्रविशेत् सभाम्॥
तत्रासीन: स्थितो वापि पाणिमुद्यम्य दक्षिणम्।
विनीतवेषाभरण: पश्येत्कार्याणि कार्यिणाम्॥
यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रय:।
राज्ञश्चाधिकृतो विद्वान् ब्रह्मणस्तां सभां विदु:॥
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासद:॥
पादोऽधर्मस्य कर्तारं पाद: साक्षिणमृच्छति।
पाद: सभासद: सर्वान्पादो राजानमृच्छति॥
धर्मासनमधिष्ठाय संवीताङ्ग: समाहित:।
प्रणम्य लोकपालेभ्य: कार्यदर्शनमारभेत॥
बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च॥
जातिजानपदान्धर्माञ्छ्रेणीधर्मांश्च धर्मवित्।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्॥
सत्यमर्थं च संपश्येदात्मानमथ साक्षिण:।
देशं रूपं च कालं च व्यवहारविधौ स्थित:॥
गृहिण: पुत्रिणो मौला: क्षत्रविट्शूद्रयोनय:।

अर्थ्युक्ताः साद्यमर्हन्ति न ये केचिदनापदि ॥
नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥
स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ॥
बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु तु गुणोत्कृष्टान्गुणिद्वैधे द्विजोत्तमान् ॥
सत्यं साक्ष्ये ब्रुवन्साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता ॥
जन्मप्रभृति यत्किञ्चित्पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥
यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च ।
न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ॥
कौटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णान्धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥
वाग्दण्डं प्रथमं कुर्यात् धिग्दण्डं तदनन्तरम् ।
तृतीयं धर्मदण्डं तु वधदण्डमतः परम् ॥

मनुस्मृतौ ८ अध्यायतः

## राजकीयः आयः

राजकीयः आयः प्रथमं कृषिपशुपालनादिभिः समभवत् । अर्थशास्त्रानुसारं बहवोऽध्यक्षाः कृषिकर्मणे, पशुसंवर्धनाय च नियुक्ताः ।

ऋग्वेदानुसारं राजा प्रजाभ्यो बलिमग्रहीत् । बलिग्रहणप्रथा परवर्तियुगेऽपि प्रायः सदैव प्रचलिताऽभवत् । समृद्धिशालिभ्यो राजा विशेषधनं प्राप्तवान् । भागधुगिति राजपुरुषः प्रजानामुत्पादितवस्तुभ्यो राजभागमगृह्णात् । प्रजानामश्वेषु गोषु च राजभागः समवर्त्तत । संग्रहीता राजकीयायस्य संग्रहाय नियुक्तः । शत्रूणां विजयेनापि राज्ञां महाधनप्राप्तिः रत्नपशुदासादिरूपेणाभूत् ।

महाभारतयुगे गणकाः राजकीयायस्य गणनां कुर्वन्ति स्म। शुल्कोपजीविनस्तदा प्रजाभ्यः शुल्कग्रहणं कृतवन्तः। आकरलवणशुल्कतरादिभ्य आयमार्गेभ्यः समागतस्यायस्य शोधनममात्यैः कृतम्। शिल्पिभ्यः व्यापारिभ्यश्च पर्याप्तं धनं कररूपेण प्राप्तम्। महाभारते करनिर्धारणसिद्धान्ताः प्रकल्पिताः—

संवेद्य तु तथा राज्ञा प्रणेयाः सततं कराः।
नोच्छिन्द्यादात्मनो मूलं परेषां चापि तृष्णया॥
ईहाद्वाराणि संरुध्य राजा संप्रीतदर्शनः।
प्रद्विषन्ति परिख्यातं राजानमतिखादिनम्॥

शान्ति० ८७.१८-१९

आयद्वाराणि तु—

बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम्।
शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम्॥ शान्ति० ७१.१०

राजकीयकोशे रत्नादिकं स्वर्णमुद्राश्च संगृहीतानि। कोष्ठागारेऽन्नवस्त्रकाष्ठादीनां संग्रहः कृतः।

राज्ञामत्यधिकायः दिग्विजयेन राजसूययज्ञोपहारैश्चाभूत्। युद्धार्थं यज्ञार्थं वा राजा स्वप्रजाभ्यो यथेच्छं धनं बलादपि गृहीतवान्।

मौर्ययुगे राजकीयायः ग्रामेभ्यो भागग्रहणेन, बलिसङ्ग्रहेणाभवत्। भूमेरुत्पादनस्य षष्ठांशः भागोऽभवत्। नागरिकेभ्यः जन्ममरणकालीनकरेण राजकीयः आयो बभूव। आपणेभ्यः विक्रयशुल्कः संगृहीतः। प्रजाभ्य उपहाररूपाः पशुपक्षिणः कौतुकागाराय प्राप्ताः।

गुप्तयुगे प्रमातारः क्षेत्राणां मापं कुर्वन्ति स्म, न्यायकरणिकाश्च भूमिकरविवादानां निर्णयं कृतवन्तः। ध्रुवाधिकरणः भूमिकरविभागस्याध्यक्षोऽभवत्। अक्षपटलिकाः, महाक्षपटलिकाः, करणिकाश्च भूमिसम्बन्धिलेखानां निर्माणं सङ्ग्रहं च कुर्वन्ति स्म। शौल्किकाः शुल्कस्य, गौल्मिकाः वनोत्पत्तेरायस्याध्यक्षाः बभूवुः। भाण्डागाराधिकृतः राजकीयायस्य सर्वोच्चपदाधिकारी बभूव। दण्डरूपेण सामन्तानामुपहारेण च बहुलो राजकीयायः

समभवत्। वाकाटकनृपाणामायः शाद्वलात्, चर्मणः, दग्धकाष्ठात् आकरात्, मद्यात्, गूढनिधेः, निक्षेपात्, दुग्धात्, पुष्पात्, पशोश्च बभूव।

भूमेः योग्यतामनुमाय भूमिकरस्य मात्रा क्वचिन्निर्णीता। तथा हि चोलवंशी नृपः कुलोत्तुङ्गः उत्तमभूमिमधिकृत्योत्पत्तेः तृतीयांशं मध्यमभूमिमधिकृत्य च पंचमांशं करं गृहीतवान्। कतिपये राजानः तीर्थयात्रिभ्यः करं गृहीतवन्तः। तद्यथा द्वादशशताब्दे सिद्धराजोऽणिहलवाडस्य राजा सोमनाथस्य तीर्थयात्रिभ्यः करं गृहीतवान्। कतिपये राजानः विवाहोपनयनादीनि करसाधनानि कृत्वा समृद्धिशालिनो भवितुमकामयन्त। निगूढं स्वामिरहितं च धनं प्रायः सदैव राज्ञ एवाभवत्।

सूत्रस्मृत्यनुसारं भूमिकरः भूम्युत्पत्तेः $\frac{१}{६}$, $\frac{१}{८}$, $\frac{१}{१२}$ वा, पशुकरः पशुधनस्य $\frac{१}{५०}$ बभूव। वृक्षमांसमधुघृतसुगन्धिरसौषधिपुष्पमूलफलपत्रशाकगोचरचर्मवंशादिभ्यः षष्ठांशो राजकररूपेण गृहीतः। विक्रेयवस्तूनां मूल्यस्य $\frac{१}{२०}$ भागो राजकीयशुल्करूपेण गृहीतः।

अर्थशास्त्रानुसारं सन्निधाता कोशगृहस्य, पण्यगृहस्य, कोष्ठागारस्य, कुप्यगृहस्य च निर्माणं कारितवान्। स रत्नादीनां परीक्षणं कारयित्वा तेषां सङ्ग्रहमकरोत्। समाहर्ता दुर्गराष्ट्राकरसेतुवनव्रजव्यापारमार्गादिभ्यः प्राप्तमायं संगृहीतवान्। राज्ये सर्वत्र राजकीयायस्य संग्राहकाः नियुक्ताः। यदि तेषां दोषेण क्वचिद्राजकीयस्यायस्य हानिः जाता तर्हि ते शीघ्रं दण्डिताः। आयवर्धकाः पुरस्कृताः। कौटिल्यः प्रजानामभ्युदयं राजकीयायस्य संवर्धनाय सर्वथाऽपेक्षितं मन्यते।[१]

## राजकीयो व्ययः

राजकीयो व्ययः प्रायः सदैव प्रधानरूपेण राजपदप्रतिष्ठायै बभूव। सैन्य रक्षणार्थं युद्धार्थं शासनकार्यार्थं च शाश्वतरूपेण राजकीयायस्याधिकांशः विनियोजितः।

---

१. प्रजासमृद्धिश्चरित्रानुग्रहश्चोरनिग्रहो युक्तप्रतिषेधः सस्यसम्पत् पण्यबाहुल्यमुपसर्गप्रमोक्षः परिहारक्षयो हिरण्योपायनमिति कोशवृद्धिः। अर्थशास्त्र २.८

राजकोशस्य पर्याप्तं धनं राजकुटुम्बस्य कृते वैदिकयुगे विसृष्टम्। तदा न्यायाधीशेभ्यः गुप्तचरेभ्यश्च व्ययः कृतः। राजान ऋषिभ्यो धनं दत्तवन्तः। प्रजायाः संरक्षणार्थं पोषणार्थं च राजधनमुपयोजितम्। राज्यस्य समृद्ध्यर्थं राजकीययज्ञायोजनेषु बहुधनं गतम्।

वैदिकयुगतः पश्चात् राजाश्रितानां स्पष्टोल्लेखाः प्राचीनसाहित्ये प्राप्यन्ते। तथा हि—विद्वांसः, ऋषयः, मुनयः, साधवः, दीनाः, अनाथाः, भिक्षुकाश्च राजभिः परिपालनीया मताः।[१] महाभारतानुसारं व्ययः आयस्यार्धादधिको मा भवतु। राजा कृषकेभ्य ऋणमदात्। सेनार्थं वेतनव्ययः तत्रासीदधिक एव। महाभारतानुसारमादर्शविधानं दर्शनीयमेव—

हरेत् तद् द्रविणं राजन् धार्मिकः पृथिवीपतिः।
ततः प्रीणयते लोकं न शोकं तद्‌विधं नृपः॥
असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति।
आत्मानं संक्रमं कृत्वा कृत्स्नधर्मविदेव सः॥ शान्ति० १३६-६-७

महाभारतयुगे राजभिः राजमार्गाणां प्रपाणां विपणानां च व्यवस्था कृता। प्रजानां निरामयत्वाय राजान ओषधीनां संग्रहं कारयन्ति स्म, कुशलवैद्यांश्च नियोजयन्ति स्म। प्रजानां मनोरञ्जनार्थं नटनर्तकमल्लादयो नियुक्ताः। व्यापारस्य संवर्धनाय योजनानि प्रकल्पयितुं राजकोशात्पर्याप्तं धनं प्रयुक्तम्।

अर्थशास्त्रानुसारं राजकार्यस्य वैविध्यं प्राक् प्रदर्शितम्। सर्वेषां महत्त्वपूर्णविभागानामध्यक्षाः तेषां बहवः कर्मचारिणश्च राजकोशात् वेतनं प्राप्नुवन्ति स्म। रिक्तस्थानेषु जनोपनिवेशनाय राजा पर्याप्तं व्ययमकरोत्।

अशोकयुगीनराजकीयव्ययैः ब्राह्मणश्रमणानां पोषणं क्षेत्राणां सेचनं महापथानां निर्माणं नगररक्षणं औषधालयानां सञ्चालनं संस्कृतिसंवधर्नञ्च व्यवस्थीयन्ते स्म। परवर्तियुगेऽपि बहवो राजानः तादृशेषूपक्रमेषु धनव्ययं चक्रुः। राष्ट्रियविकासाय राजभिः कर्मान्तिकाः नियुक्ताः। ते

---

१. गौतमे १०.४३; महाभारते सभापर्वणि ५.७४, १२७; विराटपर्वणि ७०.२३–२५; शान्तिपर्वणि ४३.११–१२; मनौ ६-२२

रचनात्मकैः निर्माणात्मकैश्चायोजनैः राष्ट्रं धन-धान्य-सम्पन्नं कृतवन्तः। ख्रीष्टाब्दतः पूर्वं प्रथमशताब्दे खारवेलमहाराजस्य राजकीयव्ययस्य वृत्तं शिलालेखे उत्कीर्णम्। तद्यथा—राजधान्या नवीकरणं युद्धं प्रणाली-निर्माणं प्रजारञ्जनार्थं समाजनृत्यसङ्गीतादीनामायोजनं साधुसतामाश्रयणं गुहानिर्माणं दानं देवालयनिर्माणं च।

गुप्तवंशीयानां सम्राजां धनं ब्राह्मणानां विद्यार्थिनां धार्मिकसंस्थानां पोषणार्थं सत्रदानादीनां प्रवर्तनार्थं तडागमन्दिरमूर्तीनां निर्माणार्थं च विनियोजितम्। बहवः कलाकाराः कवयश्च राजकीयाश्रयं प्राप्य स्व-प्रतिभायाः चरमविकासं कृतवन्तः। हर्षवर्धनस्य राजकीयव्ययस्य चत्वारो विभागा बभूवुः। प्रथमभागेन राजकीयपूजोपासनादयो राष्ट्रस्य संवधनार्थं बभूवुः, द्वितीयेन राजकर्मचारिणां वेतनं प्रदत्तम्, तृतीयेन विद्वद्भ्यो पुरस्काराः प्रदत्ताः, चतुर्थेन च धार्मिकसम्प्रदायेभ्यो दानं दत्तम्। अपरं च वैविध्यपूर्ण-मासीत् राष्ट्राभ्युदयायोजनम्। तथा हि—राजकोशैः महापथेषु औषधालयानां व्यवस्था, यात्रिभ्यः दीनहीनेभ्यश्च भोजनवस्त्रादिदानम्, विद्वत्परिषत्सु विजयिभ्यः पण्डितेभ्यः पुरस्कारप्रदानम्, षष्ठे वर्षे प्रयागमहोत्सवे सर्वस्वदानं च व्यवस्थापितानि। शिक्षाप्रसाराय हर्षेण प्रकामो व्ययः कृतः।

## वैदेशिकी नीतिः

अस्मिन्प्रकरणे भारतस्य विविधभागानां राज्ञां परस्परं सम्बन्धः तेषां च भारताद्बहिः राजभिः सह सम्बन्धश्चाध्येतव्यौ। प्रथमं तावद् व्यापारमधि-कृत्य प्राचीनकालतो राज्ञां वैदेशिकनीतिः व्यवस्थापिता दृश्यते। सर्वे राजानः स्वदेशाद्वस्तूनां निर्याताय परदेशेभ्यो वस्तूनामायाताय च सुव्यवस्थां चक्रुः। तत्सर्वं सिन्धुसभ्यतायुगात् समारब्धं दृश्यते।

वैदिकयुगात् दिग्विजयमाध्यमेन भारतस्य सर्वेषां राज्यानामेकसूत्रे ग्रथनं काले काले बभूव।

वैदेशिकनीतौ चरदूतप्रणिधीनां च महत्त्वं दृश्यते। दूतमाध्यमेन पर-राष्ट्रेषु सन्देशाः प्रेषिताः, तेभ्य उत्तरं प्रत्युत्तरं च प्राप्तम्। चराः प्रणिधयश्च

गुप्तरूपेण परराष्ट्रस्य वृत्तान्तान् प्राप्य स्वामिने निवेदयन्ति स्म। युद्धकालीनस्थितौ तेषां कार्याणि महत्त्वपूर्णानि बभूवुः। परराष्ट्राणां दुर्बलीकरणमपि तेषां गुप्तचराणां कार्यमासीत्।

वैदेशिकनीतिपथेन भारतीया राजानः स्वदेशस्य स्वतन्त्रतामक्षुण्णां कर्तुं काले काले समुद्यता बभूवुः। तथा हि पश्चिमोत्तरप्रदेशस्य राजा शशिगुप्तो वैक्ट्रियाप्रदेशस्य पारसीकस्य राज्ञोऽलक्षेन्द्रविरोधे सहायतां कृतवान्।[१]

ऐतिहासिकयुगे मौर्यस्य चन्द्रगुप्तस्य ग्रीकराजेन सिल्यूकसेन सह सन्धिः प्रसिद्धः। अस्य सन्धेः प्रवर्तनं वैवाहिकमभूत्। सिल्यूकसः स्वकन्यां राज्य-भागं च चन्द्रगुप्ताय दत्तवान्। चन्द्रगुप्तोऽपि ५०० हस्तिनः सिल्यूकसाय प्रदत्तवान्। विदेशिनां सुव्यवस्थायै सफलमायोजनं मौर्यराजैः कृतम्। सिल्यूकसस्य प्रतिनिधिदूतः मेगस्थनीजः चन्द्रगुप्तसभायां प्रतिष्ठितः। सीरिया-प्रदेशस्य राजा डीमाकस इति ख्यातं प्रतिनिधिदूतं बिन्दुसारसभायां नियोजितवान्। बिन्दुसारस्य ग्रीकदार्शनिकेभ्यो महती रुचिरासीत्। इदमेवोद्दिश्य एम्बोलस इति ख्यातः दार्शनिकः तस्य सभायां प्रतिष्ठितः।

अशोकः परराष्ट्रैः सह मैत्रीभावस्य प्रवर्तनार्थं परमोत्कृष्टं प्रयत्नं कृतवान्। भारतस्य चोलपाण्ड्यताम्रपर्णीप्रदेशानां राजभिः सह भारताद् बहिः सीरियाप्रदेशस्यान्तिओकसेन, मिसरस्य टालेमीद्वितीयेन, अफ्रीकमहा-द्वीपस्य काईरीनस्य मगजेन, मेसीडोनियाप्रदेशस्य अन्तिगोनसेन, इपिरस-प्रदेशस्यालक्षेन्द्रेण सह मैत्रीपूर्णसद्भावनाः सम्प्रतिष्ठापिताः। अशोकः सर्वेभ्यो राजभ्यः शान्तिमयप्रगतिपथस्य सन्देशं प्रेषितवान्। तेषां राज्येषु अशोकसाहाय्येनाभ्युदयायोजनानि समारब्धानि। अयं धर्मविजयः दिग्विजयस्य स्थानेऽशोकेन स्वीकृतः।

परवर्तियुगेऽपि बहवो राजानोऽशोकपथस्यानुसरणं कृतवन्तः। ग्रीक-राजानां दूता भारते समागताः। रोमकराजेभ्यः चीनकराजेभ्यश्च भारतीयाः राजानः बहुमूल्यमुपहारं प्रेषितवन्तः।

---

१. Cambridge History of India Vol I p. 350

भारतीयानां राज्ञां वैवाहिकसम्बन्धेन परस्परसम्प्रतिष्ठाधानस्य नीतिः प्रचलिता। तद्यथा—गुप्तराजानां शक्तिः लिच्छविराजवंशेन सह वैवाहिक-सम्बन्धेन संवर्धिता। समुद्रगुप्तः शककुशनादिभ्यः राजभ्यः कन्योपायनं प्राप्तवान्। गुप्तानां महासान्धिविग्रहिकः सचिवः परराष्ट्राणां गतिविधिः सन्तोलनाय बभूव। राजदूतानां परम्परा पूर्ववत् सन्तता बभूव।

ख्रीष्टाब्दस्य पश्चात् सप्तमे शतके हर्षवर्धनस्य चीनकदेशराजभिः सह दौत्यसम्बन्ध आसीत्। तस्मिन्युगे चालुक्यवंशस्य पुलकेशिनो राजसभायां पारसीकराजदूताः समागताः।

ख्रीष्टस्य पश्चात् द्वितीयशतकादारभ्य भारतीयविजेतॄणां प्रवृत्तिः बृहत्तरभारते संचरणाय दृश्यते। ततः प्रभृति आपञ्चमशतकं मलय-कम्बोडिया-अन्नम-सुमात्रा-जावा-बालि-बोर्नियोप्रदेशेषु भारतीयानां राज्यानि प्रतिष्ठापितानि। इण्डोचाइनाप्रदेशे चम्पा-कम्बुजोपनिवेशौ संस्थापितौ। ख्रीष्टतः पञ्चदशशतकपर्यन्तं बृहत्तरभारते भारतीयानां प्रवृत्तिरासीत्। तत्र शैलेन्द्राणां श्रीविजयानां च राज्यं प्रतिष्ठितम्।

भारतस्य कतिपये राजानः भारताद्बहिः एशियामहाद्वीपस्य पश्चिमे भागे विजयं चक्रुः। तद्यथा गजसिंहः विजयसातत्यं सम्प्रधारयन्नेव गजनी इति ख्यातां पुरीं संस्थापयामास।[१]

## गणतन्त्राणि राज्यानि

गणतन्त्रराज्यानां शासनं प्रजातन्त्रात्मकमभवत्। ख्रीष्टस्य प्राक् सप्त-शताब्दादारभ्य ख्रीष्टस्य पश्चात् चतुर्थशताब्दपर्यन्तं गणतन्त्राणां विशेषा-भ्युदयोऽभूत्। भारतस्योत्तरपूर्वे उत्तरपश्चिमे च भागे गणराज्यानां प्रायशः प्रतिष्ठा बभूव। पंचनदप्रदेशे सिन्धुदेशे च वृकदामणिपार्श्वकाम्बोजानां गणाः प्रतिष्ठिताः। ख्रीष्टतः प्राक् पंचमे शताब्दे त्रिगर्तषष्ठानां गणराज्यं पाणिनिनोल्लिखितम्। ततः पश्चात् जयपुरस्य समीपस्थमर्जुनायनं

---

१. Tod's Rajsthan Val II p. 222

गणराज्यं ख्रीष्टस्य पश्चात् चतुर्थशताब्दपर्यन्तमासीत्। यौधेयानां गणराज्यं पंचनदप्रदेशे उत्तरप्रदेशे च विस्तृतमासीत्। पंचनदप्रदेशस्य केन्द्रभागे मद्राणां गणराज्यमभवत्। मद्राः मालवाः क्षुद्रकाश्चेति गणराज्याधिष्ठिता अलक्षेन्द्रस्य विरोधं युद्धस्थले कृतवन्तः।

अलक्षेन्द्रस्याक्रमणकाले अगेसिनाइनां सिवीनां च गणराज्ये बभूवतुः। प्रायः समकालीनमेवाम्बष्ठानां गणराज्यं तत्रासीत्।

द्वारिकायां महाभारतानुसारमन्धकवृष्णीनां गणराज्यसंघोऽभवत्। कृष्णः प्राचीनयुगे तस्य गणराज्यस्य प्रधान आसीत्।

उत्तरप्रदेशस्य पूर्वभागेषु विहारस्योत्तरभागेषु च भग्ग—बुली-कोलिय-मोरियाणि लघुगणराज्यानि बभूवुः। तत्रैव शाक्यानां मल्लानां लिच्छवीनां विदेहानां च गणराज्यानि विस्तृतानि बभूवुः। एतानि गणराज्यानि गौतमबुद्धस्य समकालीनान्येवासन्।

गणतन्त्राणां शासनं सभासदां समित्या कृतम्। समितेः प्रधानकेन्द्रं राजधान्यामेवासीत्। सभासदः प्रजानां सुखशान्तिसमृद्ध्यर्थं कर्मचारिणां नियुक्तिं कुर्वन्ति स्म। नगराणां ग्रामाणां च शासनं स्थानीयपंचायतैः कृतम्। बृहद्गणराज्येषु राजधान्यां केन्द्रीयसमितिः प्रतिष्ठिता बभूव। तेषां विविधप्रदेशेषु शासनकर्म स्थानीयसमितिभिरायोजितम्। गणराज्यसमितिषु सदस्यानां सङ्ख्या क्वचित् ७००० पर्यन्ता बभूव। ताः समितयो युद्धार्थं सेनापतेः निर्वाचनं चक्रुः, सन्धिविग्रहनिर्णयमकुर्वन् च। राष्ट्रस्याभ्युदयायोजनस्य समस्याः ताभिरेव समाहिताः।

प्रत्येकस्य गणस्यैकोऽध्यक्षोऽभवत्। स स्वगणस्य मन्त्रिमण्डलस्य प्रधानोऽभवत्। मन्त्रिणां सङ्ख्याऽऽवश्यकतानुसारं विंशतिपर्यन्ता बभूव। मन्त्रिणां निर्वाचनं समित्या कृतम्। परराष्ट्र-कोष-न्याय-दण्ड-कर-व्यापारोद्योगादिषु प्रत्येकस्य विभागस्य मन्त्री बभूव। मन्त्रिणामध्यक्षत्वे तेषां विभागानां कर्मचारिणः कर्म कुर्वन्ति स्म।

भारतीयेतिहासे गणराज्यानां स्थानं महत्त्वपूर्णं दृश्यते। गणराज्येषु

विकसिता शासनपद्धतिः प्राचीनयुगे राष्ट्रस्य सर्वाङ्गीणोन्नतये प्रसिद्धा। अर्थशास्त्रानुसारं 'सङ्घा हि संहतत्वादधृष्याः परेषाम्'। तद्गणराज्यसंघ-विषयकं सत्यम्। गणराज्यसङ्घैः अलक्षेन्द्रस्याक्रमणावरोधः साफल्येन कृत इति गणानां देशप्रेम, जातिप्रेम, स्वातन्त्र्यं च निदर्शयति।

---

# दार्शनिकप्रवृत्तयः

इह जगति जीवनकाले सुखलाभाय कथं व्यवहर्तव्यमिति मानवाः स्वज्ञानानुरूपमेव निर्धारयन्ति। पंचभूतमये भौतिकजगति पशूनामप्यैन्द्रियकसुखलाभः सम्भवति। विज्ञानजनितेन प्राकृतिकेनैश्वर्येण सूक्ष्माण्यैन्द्रियकसुखानि मानवेभ्यः सुलभानि भवन्ति। रसवृत्त्या काव्यकलाशिल्पादीनामानन्दः प्राप्यते। एतेभ्यः परः परमानन्दो योगैरध्यात्मज्ञानैश्च लभ्यते। योगस्याध्यात्मज्ञानस्य च पृष्ठभूमिर्दर्शनेन प्रतिष्ठाप्यते। किं तद्दर्शनम्?

जगतो यदाध्यात्मिकं स्वरूपं तस्य ज्ञानमेव दर्शनम्। तस्य ज्ञानस्य प्राप्तेः प्रक्रियाऽपि दर्शनमेव। दर्शनस्य प्रकाशे मानवः स्वजीवनोद्देश्यं कर्तव्यपथं च विचिनुते।

दर्शनस्य प्रथमप्रतिष्ठा सिन्धुसभ्यताया योगिमूर्तौ दृश्यते। योगी समाधिस्थो वर्तते।

## वैदिकदर्शनम्

आत्मविषयकः प्रथमो मन्त्र ऋग्वेदे पठ्यते—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।<br>
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥

१.१६४.२०

मन्त्रेणानेन व्यज्यते यदात्मा भोगपरायणो वर्तते परमात्मा च द्रष्टा भवति। अपरं च—

सतः बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा॥

१०.१२९.४

प्रकृतौ ब्रह्मणः सम्बन्धो निश्चितो मनीषिभिरिति ज्ञायतेऽनेन।

वैदिकविचारणायां 'पुरुषः' 'एकदेवः', वा स्थूलप्रकृतेः परो मतः। तमधिकृत्य ऋषिणा प्रोक्तम्—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद् विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ॥

१.१६४.४६

एकस्मात् सतः बहुनामात्मिका वृत्तिः विकासपथे प्रवर्त्यमाना दृश्यते। तस्य पुरुषस्याध्यक्षरूपेण प्रतिष्ठा कृता। यथा—

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्ष परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥

१०.१२९.७

स एव हिरण्यगर्भः—आत्मदा, बलदा, सत्यधर्मेति प्रतीतः।[१]

परवर्तिवैदिकयुगे मुक्तेः कल्पना दृश्यते। तथा हि—विद्यया तदारोहन्ति यत्र कामाः परागताः।[२] अमृतान्मृत्युः निवर्तते।[३]

## उपनिषद्दर्शनम्

उपनिषद्युगे पराविद्यया ब्रह्मविद्यया वा ब्रह्मनिष्ठता स्पष्टं कल्पिता। तद्यथा—ऐन्द्रियकसुखानुरक्तो जन इन्द्रियग्राह्याणि वस्तूनि प्राप्नोति भुनक्ति च, तथैवेन्द्रियेभ्यः परेणात्मना परमात्मनो ब्रह्मणो वा ग्रहणं भोगश्च क्रियेते। तत् ब्रह्म ज्ञेयम्।

"सर्वं खल्विदं ब्रह्म। मनोमयः, प्राणशरीरः, भारूपः, सत्यसंकल्पः, आकाशात्मा, सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः, सर्वमिदमभ्यात्तोऽवाक्यनादरः एष म आत्मान्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः। एतद्ब्रह्म।"[४] ब्रह्मैव सम्भावयितव्यम्। तत्कथम्—इतः प्रेत्याभिसम्भवितास्मीति। अस्मै प्रयोजनाय साधनं विहितम्—

---

१. ऋग्वेदे १.१२१ २. शतपथब्राह्मणे १०.५.४.१६

३. श०ब्रा० १०.२.६.१६ ४. छा. उं. ३.१४.१-४

क्रतुमयः पुरुषः । यथा क्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ।[१]

ब्रह्मणो ज्ञानेन ध्यानेन च ब्रह्ममयत्वं सिध्यति। तस्मिन् सिद्धे केवलं ब्रह्मानन्द एवानुभूयते। तदा सर्वे सांसारिकव्यवहारा निष्प्रयोजनाः भवन्ति ।[२]

**मरणोत्तरविधानम्**

मरणानन्तरे काले यदि ब्रह्ममयत्वं न सिध्यति तर्हि नवशरीरं प्राप्यते। तद्यथा—तृणजलायुका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति' एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति। तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वान्येषां वा भूतानाम् ।[३]

अपरं च—निष्कामस्य पुरुषस्य पुनर्जन्म न विद्यते। स ब्रह्मैव सन् ब्रह्माप्येति। तथा हि—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥

पुनर्जन्मसिद्धान्तः प्रतिष्ठितः—

काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति। यत्क्रतुर्भवति तत्कर्म कुरुते। यत्कर्म कुरुते तदभिसम्पद्यते ।[४]

**सृष्टिसमारम्भः**

छान्दोग्योपनिषदि सृष्टिकथा विद्यते। तदनुसारं प्रथमं 'सत्' आसीदेकमेवाद्वितीयम्। सतः सृष्टिपरम्परारब्धा। सतः तेजः, तेजस आपः, अद्भ्यः अन्नमिति। अन्नमयं मनः आपोमयः प्राणः तेजोमयी वागिति ।[५]

१. छान्दोग्योपनिषदि ३.१४.१–४
२. बृहदारण्यके ४.३.२२.३२
३. बृहदारण्यके ४.४.३—४
४. बृहदारण्यके ४.४.६–७
५. छान्दोग्योपनिषदि ६.२–५

अन्यत्र—आत्मा एवेदमग्रे आसीत् एकाकी। स द्वितीयमैच्छत्। स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवताम्। ततो मनुष्या अजायन्त। पश्चादात्मन एव यदिदं किंच मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत।[1] आत्मन एव सर्वे देवाः सर्वे वर्णाः सृष्टाः।[2]

उपनिषद्युगस्य पश्चात् भारतीयदर्शनस्य द्वे शाखे प्रमुखतः दृश्येते—वैदिकी अवैदिकी च। अनयोः प्रथमा वेदान् प्रमाणरूपेण गृह्णाति, द्वितीया च वेदानामुपेक्षां क्वचित् कुरुते। वैदिकशाखायाः षडुपशाखाः—न्यायः वैशेषिकम्, सांख्यः, योगः, मीमांसा वेदान्तश्च। अवैदिकशाखाः चार्वाकबौद्धजैनाश्च।

चार्वाकान्परित्यज्य सर्वेऽपि भारतीयदार्शनिका मरणानन्तरं मोक्षस्वर्गपुनर्जन्मगतीः विश्वसन्ति। मोक्षस्य स्वर्गस्य च प्राप्तये उपायाः तैः प्रस्तुताः। जैनबौद्धदर्शनेषूपनिषदां प्रभावः परिलक्ष्यते। उपनिषद्वत् ज्ञानमेव सोपानं कृत्वा तपसा समाधिना चाभ्युदयकरणं सर्वोच्चकर्तव्यं जैनैः बौद्धैश्च निर्धारितम्।

## षड्दर्शनम्

**प्रमाणं ज्ञानं च**

उपरिदिष्टदर्शनपद्धतौ सत्यासत्ययोः स्वरूपं निर्णेतव्यम्। वस्तूनां सत्यस्वरूपस्य ज्ञानं प्रमा।[3] तत्करणं प्रमाणम्। प्रमाणानां न्यायदर्शनानुसारं चतुर्विभागाः भवन्ति—प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दश्च। प्रायः सर्वेषु भारतीयदर्शनेषु प्रमाणानां प्राधान्यं सकलपदार्थव्यवस्थापकत्वेन विद्यते, तथापि न्यायदर्शने प्रमाणेभ्यो विशेषाग्रहः। न्यायानुसारं प्रमाणस्वरूपं द्रष्टव्यमेव।

प्रत्यक्षं तावत्—इन्द्रियाणामर्थैः सन्निकर्षमपेक्षते। अनेन सन्निकर्षेण ज्ञानं भवति। तद् ज्ञानं नामविरहितं (निर्विकल्पकं) भ्रमभिन्नम्,

---

१. बृहदारण्यके १.४.१,३,४ २. बृहदारण्यके १.४.६,११

३. तद्वति तत्प्रकारकोऽनुभवः प्रमा। यथा रजते इदं रजतमिति ज्ञानम्।

व्यवसायात्मकं (सविकल्पकं) च भवति।[१] तत्र प्रत्यक्षज्ञानानां तालिका स्पष्टीकरणाय—




तेषु योगजं प्रत्यक्षं योगिनामेव गम्यम्। तदतीन्द्रियविषयाणामेव भवति।

अनुमानं प्रत्यक्षपूर्वकं भवति। तत् त्रिविधम्—पूर्ववत्, शेषवत्, सामान्यतो दृष्टं च। अनुमानाय परामर्शः—व्याप्तिः लिङ्गं (हेतुः) चापेक्षितः। तर्हि साधनमेवानुमानं तेनोत्पन्नं ज्ञानमनुमितिः। अनुमिति-गमनप्रक्रिया तु परामर्शः। अस्मिन् प्रसङ्गे न्यायस्य पंचावयवाः—प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनं च विद्यन्ते।[२]

---

१. इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्।

२. पंचावयवेभ्यः पक्षसपक्षविपक्षाणामपेक्षा वर्तते। पक्षे साध्यस्यास्तित्वविषयकः सन्देहः। सपक्षे साध्यास्तित्वं सिद्धमेव नित्यदर्शनत्वात्, विपक्षे साध्यं न विद्यते तर्हि हेतुः नास्ति। पक्षः पर्वतः, सपक्षः महानसम्, विपक्षः जलाशयः। पर्वते धूमो वर्तते किन्तु तत्राग्निरस्ति नास्ति वा सन्देहः। महानसे धूमो वर्तते ततोऽग्निरपि नित्यं दृश्यते धूमेन सह। अस्मिन्नन्वयव्याप्तिः ज्ञायते। जलाशयेऽग्निर्नास्ति ततः धूमो नास्ति। अस्मिन् व्यतिरेकव्याप्तिः।

 

प्रतिज्ञा—पर्वतो वह्निमान् ।

हेतुः—धूमात्

उदाहरणम्—यत्र यत्र धूमः तत्र तत्र वह्निः, अथवा यो यो धूमवान् स स वह्निमान् ।[१] यथा महानसः ।

उपनयः—वह्निव्याप्यधूमवानयं पर्वतः ।

निगमनम्—तस्माद्वह्निमान्पर्वतः ।

इदं सामान्यतो दृष्टमनुमानम् ।

पूर्ववदनुमाने पूर्वं (कारणं) दृष्ट्वा तत्कार्यं ज्ञायते । यथा मेघोन्नति-विशेषेण वृष्ट्यनुमानम् । शेषः कार्यम्, तल्लिङ्गकमनुमानं शेषवत् । यथा नदीवृद्ध्या वृष्ट्यनुमानम् ।

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ।[२] गोसदृशत्वेन गवयज्ञान-मुपमानेन भवति ।

आप्तोपदेशः शब्दः । यथा वेदवचनम् । आप्तस्तु यथार्थवक्ता ।

सांख्ये उपमानप्रमाणं न गृहीतम् । यथा गौः तथा गवय इत्यपि अनुमानमेव । न्यायदर्शने मनसा प्रस्तुतं ज्ञानमात्मनः एव भवति, किन्तु सांख्यदर्शने ज्ञानं बुद्धिव्यापारः एव । पुरुषे तु बुद्धिकृतज्ञानं केवलं प्रतिबिम्बितमेव भवति । सांख्यस्याप्तवचनपरिधौ वेदेतिहासस्मृत्यादिभिः सह कपिलवचनमपि गृहीतम् । योगदर्शने सांख्यप्रमाणानि सम्मतान्येव । किन्तु तत्र बुद्धिगृहीतज्ञानं सम्यङ् न मतम्, बुद्धेः प्रकृतित्वात् । सत्यस्य ज्ञानं योगदर्शने योगेनैव सम्भवं मतम् ।

पूर्वमीमांसायामादौ त्रीणि प्रमाणानि—प्रत्यक्षानुमानशब्दाः मताः । परवर्तियुगे कुमारिलस्तु उपमानार्थापत्त्यनुपलब्धीनां प्रामाण्यं साधितवान् ।[३] प्रभाकरेणानुपलब्धेः प्रमाणत्वं खण्डितम् । योगजज्ञानस्य मीमांसायां ग्रहणं

१. व्याप्तिनिदर्शनमिदम् । २. प्रसिद्धस्य पूर्वज्ञातस्य गवादेः साधर्म्यात् सादृश्यात् साध्यस्य गवादिपदवाच्यत्वस्य साधनं सिद्धिः । ३. अर्थादापद्यते—पीनो देवदत्तो दिवा न भुंक्ते अतएव रात्रौ भुंक्ते इति अर्थापत्तिः । यदि क्वचिद्घटो न विद्यते तर्हि घटाभावोऽनुपलब्धिप्रमाणेन प्रतीतो भवतीति मीमांसकाः ।

नास्ति। यन्नैयायिकाः योगप्रवणा वा योगेन जानन्ति तत् सर्वमाप्तवचनेन तत्र सिद्धम्।

वेदानुसारं श्रुतिः प्रत्यक्षमेव। पुराणेतिहासस्मृतयश्चानुमानम्। त्रीणि षड् वा प्रमाणानि वेदान्तिभिः स्वीकृतानि।[1] वेदान्तानुसारं प्रकृतिः तर्कैर्ज्ञेया भवतु, किन्तु ब्रह्मज्ञानं तु शास्त्रेणैव सिध्यति। तद्यथा शङ्करः तर्कमविद्यां गणयति। तर्केण ब्रह्म न ज्ञातव्यम्। अनुभवेन ब्रह्म ज्ञातं भवति। अविद्याग्रस्तः पुरुषः ब्रह्म जगदिव पश्यति।

**प्रमेयाणि**

न्यायदर्शने—आत्मा, शरीरम्, इन्द्रियम्, अर्थः, बुद्धिः, मनः, प्रवृत्तिः, दोषः, प्रेत्यभावः, फलं, दुःखम्, अपवर्गश्च प्रमेयम्।[2] वैशेषिकदर्शने—द्रव्यम्,[3] गुणाः, कर्म, सामान्यम्, विशेषः, समवायः, अभावश्च प्रमेयम्। सांख्ये पुरुषः प्रकृतिश्च ज्ञेयौ वर्तेते[4]। पूर्वमीमांसायां द्रव्यम्, गुणाः, कर्म, सामान्यम्, परतन्त्रता, शक्तिः, सादृश्यम्, संख्या च प्रमेयम्।

---

१. वैष्णववेदान्तिनः त्रीणि प्रमाणानि प्रत्यक्षानुमानशब्दाख्यानि मन्यन्ते शाङ्करास्तु व्यवहारे भाट्टनयेनापराणि त्रीण्यपि स्वीकुर्वन्ति।

२. पंचभूतानां गुणाः—गन्धादीनां संज्ञा अर्थ इति। मनस्तु इन्द्रियैः प्रस्तुतं ज्ञानमात्मने प्रयच्छति। वाचः, बुद्धेः, शरीरस्य च व्यापाराः प्रवृत्तयः। दोषास्तु प्रवृत्तीनामुत्पादकाः। मृत्वा जन्मग्रहणमेव प्रेत्यभावः।

३. द्रव्यं तु पंचभूतानि, कालः, दिक्, आत्मा, मनश्च। गुणानां संख्यादौ १७—रूपम्, रसः, गन्धः, स्पर्शः, संख्या, परिमाणः, पृथक्त्वम्, संयोगः, विभागः, परत्वापरत्वे, बुद्धिः, सुख-दुःखे, इच्छा, द्वेषः, प्रयत्नश्च। कर्माणि—उत्क्षेपणम्, अवक्षेपणम्, आकुंचनम्, प्रसारणम्, गमनं च। अनेकव्यक्तिषु सामान्यतः प्राप्यं लक्षणं सामान्यमेव। विशेषेण एकः परमाणुरपरस्मात् भिन्नः। अनेन विशेषेण विशिष्टमिदं वैशेषिकं दर्शनम्। अवयवावयविनां गुणगुणिनां सम्बन्धः समवायः।

४. प्रकृतेः क्रमशः विकाराः—महत्, अहंकारः, मनः, पंचज्ञानेन्द्रियपंचकर्मेन्द्रियपंचतन्मात्राः, महाभूतानि च सन्ति। पुरुषेण सह पंचविंशतितत्त्वानि।

रामानुजस्य विशिष्टाद्वैते द्रव्यमद्रव्यं च प्रमेयं मतम्। सर्वेषां दर्शनानां प्रमेयेषु— आत्मा, मनः, मोक्षश्च सविशेषं प्रतिभान्ति।

**आत्मपुरुषजीवादयः**

न्यायदर्शनेऽनुमानेनात्मनोऽस्तित्वं सिद्धम्, वेदवचनैस्तदनुमोदितं च। केषाञ्चिन्मते आत्मा मानसप्रत्यक्षगम्यो भवति। जिज्ञासा ज्ञानं चात्मन एव भवति[1], स एवात्माऽस्माकं जीवनविन्यासस्य संयोजकः।

ये तु स्वभाववादिनः शरीरमेव ज्ञानाधिष्ठानं मन्यन्ते तेषां समक्षमात्म-विरहिते मृते शरीरे ज्ञानस्याभावेन आत्मनो ज्ञानाधिष्ठानत्वं प्ररोचितम्। अपरं च—इन्द्रियाणि साधनानि। कार्यं कर्तुं न केवलं साधनानि समर्थानि, अपितु कर्ता साधनैः कार्याणि करोति। तत एव कथितम्—

आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्॥ भाषापरिच्छेदे ४७
शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः॥ तत्रैव ४८
मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।

आत्मा धर्मस्याधर्मस्य चाश्रयः। अतो देहान्तरप्राप्तौ पूर्वजन्मनां धर्माधर्माणां फलानि भोग्यानि दृश्यन्ते। 'अहं जाने', 'अहं करोमी'ति सम्बन्धेनात्मनः प्रत्यक्षं भवति। अयमात्माऽहंकारस्याश्रय इत्यनेन ज्ञायते। आत्माऽयं मानसप्रत्यक्षविषयः। अन्यैरिन्द्रियैरात्मा न द्रष्टव्यः।

आत्माऽयं विभुः—परममहत्परिमाणवान् बुद्धि-दुःख-सुखेच्छादय आत्मनश्चतुर्दश गुणाः।

आत्मनः समकक्ष एव सांख्ययोगयोः पुरुषः। सांख्ये पुरुषस्यास्तित्वं प्रमाणयता प्रोक्तम्—

संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥ १७॥

अयं शरीरसंघातः पुरुषाय भवति। अयं त्रिगुणरहितः विवेकी च। स पुरुषो यत्किंच जगत्यां तस्य भोक्ता। तस्य प्रवृत्तिः मोक्षाय भवति।

---

१. इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्। न्यायसूत्रे ३.१०।

त्रिगुणात्मप्रकृतेः पाशैर्बद्धः पुरुष एव जीवः। जीवस्य अहंकारेन्द्रियादयः साधनानि। मरणानन्तरं जीवो लिंगशरीरेण[1] सह प्रभवति पुनर्जन्मने। लिंगशरीरे सत्त्वगुणप्राधान्यात् मुक्तिः प्राप्यते।

मीमांसायामात्मनोऽस्तित्वस्य सिद्धिः शब्दप्रमाणेन भवति। वेदानुसारं मरणानन्तरं पुण्यकर्मफलं प्राप्यते। तत्फलमात्मनैव प्राप्यते। अध्यक्षः सन्नात्मा शरीरस्य संचालनं करोति। आत्मनः शक्त्यैव शरीरशक्तिर्भवति। प्रत्येकस्य शरीरस्यात्मा भिन्न एव। आत्मा ज्ञाता ज्ञेयश्चास्ति।

अद्वैतवेदान्तस्यात्मा चिद्रूपः। न्यायदर्शने आत्मा बुद्धेरधिष्ठानं किन्तु वेदान्ते ज्ञानमेवात्मा। ईदृश आत्मा चैतन्यम्, अपरं चात्माऽऽनन्दरूपः। अहं रूपेणाकर्ता भवति। आत्मा स्वयंसिद्धो न प्रमाणार्हः।

अज्ञानोपहित आत्मा जीवो भवति। जीवः कर्ता भोक्ता च भवति। स्थूलशरीरसमायुक्तो जीवो ज्ञानेन्द्रियैः कर्मेन्द्रियैः पंचप्राणैः मनसा बुद्ध्या च समन्वितो भवति। शरीरैः कृतैः कर्मभिरात्मा बद्धो भवति। अन्तः-करणोपहितो जीवः साक्षी कथ्यते।

रामानुजानुसारमीश्वरो जीवं तस्य कृतकर्मानुरूपं नवकर्मणि प्रवर्तयति। ईश्वरः कर्मफलं ददाति। भोगविलासैर्जीवस्य बन्धनं तपसा तत्त्वज्ञानेन च मोक्षो भवति।

**मनः**

न्यायानुसारं 'साक्षात्कारे सुखादीनां करणं मन उच्यते'। मनसोऽणुत्वं निर्विवादमेव, यतः एकस्मिन्काले मन एकमेव ज्ञानं साधयति।[2] सर्वे विषया मनसो ज्ञानपरिधौ समायान्ति। प्रत्येकस्यात्मन एकं मनो भवति।

**परमात्मा, ब्रह्म, ईश्वरश्च**

ईश्वरस्य स्थानं प्रारम्भिकन्यायदर्शने स्पष्टतः न दृश्यते। परवर्ति-युगीने न्याये ईश्वरः संसारस्य कर्ता मतः। ततः परं न्यायस्य आत्मनः

१. लिङ्गशरीरे बुद्ध्यहंकारमनइन्द्रियतन्मात्रादीनां बीजं भवति।

२. अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते। न्यायसिद्धान्तमुक्तावली ८५ तथापि स्वतीव्रगत्या ज्ञानपरम्परां साधयति।

द्वे रूपे—परमात्मा, जीवात्मेति चानुमते। परमात्माऽऽत्मनोऽतिशयो जीवात्मा न्यूनतरश्च सम्मतः। तद्यथा—जीवात्मनो ज्ञानं सीमितं परमात्मा सर्वज्ञश्च। परमात्मनि द्वेषो नास्ति, किन्तु तस्मिन्निच्छा वर्तते। इयमिच्छाऽशुभा न भवति। जीवात्मा तु द्वेषस्याशुभेच्छायाश्चाधिष्ठानं भवति। जीवात्मानोऽसंख्याः।

नैयायिका ईश्वरं जीवस्य पुण्यपापात्मकसंस्काराणां प्रवर्तयितारं मन्यन्ते। ईश्वरोऽदृष्टस्याध्यक्षः। स कर्मफलप्रदः चिन्मयश्च। ईश्वरस्य सच्चिदानन्दस्वरूपं प्रतिष्ठितम्। धर्मो ज्ञानं चेश्वरस्य विशेषगुणौ मन्येते। ईश्वरस्तु सृष्टिं प्रति पितृवत् सतर्कः सचेष्टश्च वर्तते। स प्रकृतिविकासं करोति। सोऽस्मै विकासाय प्रकृत्या सह सदैव सम्बद्धः। स सत्त्वगुणसम्पन्नः सदैव स्वकार्यपरायणः।

सांख्यदर्शनेऽपि प्रारम्भे ईश्वरस्य प्रतिष्ठा स्पष्टतो नासीत्, परवर्तियुगे ईश्वरोऽन्विष्टः। तदनुसारं प्रकृतिपाशेभ्यो मुक्तः पुरुषः ईश्वरस्य तादात्म्यमाप्नोति।

प्रारम्भिकमीमांसायामीश्वरस्य स्थानं नासीत्। परवर्तियुगे तत्रापि ईश्वरोऽन्विष्टः। ईश्वराय तदा यज्ञः समीहितः। सेश्वरसांख्यवत् सेश्वरमीमांसा विकसिता।

ब्रह्मणः प्रतिष्ठा प्रधानतो वेदान्ते कृता। हृदयस्थं ब्रह्म विज्ञानमयं सूर्यमण्डले स्थितं ब्रह्म हिरण्मयं भवति। आकाशो ब्रह्म, प्राणाः ब्रह्म, आत्मनो ज्योतिरपि ब्रह्म।

शंकरानुसारमद्वैतविशिष्टं ब्रह्मास्ति। ब्रह्मणो वर्णनं तस्य वर्णनस्यावबोधनं च ब्रह्मज्ञैरेव साध्यम्।

शङ्करानुसारमीश्वरस्तु सगुणं ब्रह्म। ईश्वरस्य सत्ता केवलं व्यावहारिकरूपेण भवति न तु पारमार्थिकदृष्ट्या। ईश्वरो ब्रह्मसूत्रानुसारं जगतः कर्त्ता भवति। ईश्वरो व्यक्तिगतात्मनां समाहारः। सशरीर आत्मा जीवो देही वा भवति। जीवानां समाहारः विराट् वैश्वानरो वा भवति। आत्मैव

लिङ्गशरीरेण समायुक्तो लिङ्गी तैजसो वा भवति। तैजसानां समाहारो हिरण्यगर्भः सूत्रात्मा वा भवति। कारणशरीरैः समन्वित आत्मा प्राज्ञः। प्राज्ञानां समाहारः ईश्वरः।

ईश्वरो माययोपहितः। तत्त्वतो जगद् ब्रह्मणो भिन्नं नास्ति। ब्रह्म तत्त्वमस्ति, जगत् तस्य प्रतिभासः। जगत् मायैव। विवर्तेन ब्रह्मैव जगद्रूपं दृश्यते, यथा रज्जौ सर्पभ्रमो वर्तते। जगतोऽधिष्ठानं तथैव ब्रह्मास्ति यथा मायात्मकसर्पस्याधिष्ठानं रज्जुरेव।

ईश्वरजीवयोरन्तरं स्वल्पमेव। ईश्वरः सर्वज्ञः सर्वव्यापी सर्वशक्तिमान् अस्ति। जीवोऽल्पज्ञोऽशक्तश्चास्ति। तदेव ब्रह्म मायोपहितमीश्वरः, अविद्ययोपहितञ्च जीवो भवति। ईश्वरस्य बन्धनं नास्ति। जीवा अनेके, ईश्वरस्तु एक एव।

रामानुजाचार्यानुसारमीश्वरो जगत उपादानकारणमस्ति। स सर्वविधैश्वर्यैः समापन्नः, पूर्णः, ज्ञानशक्तिकरुणाभिः समायुक्तो भवति। ईश्वरभक्त्या मुक्तिर्लभ्या। ईश्वरस्याभिव्यक्तिः जीवरूपेण भवति। अस्यां परिस्थितौ जीवा ईश्वरस्य शरीराणि भवन्ति। विकासावस्थायामीश्वरस्य पंच स्वरूपाणि अर्चा विभवो व्यूहः परोऽन्तर्यामी च। अर्चारूपं मूर्तिरेव। विभवव्यूहौ अवताराणामेव रूपं रामकृष्णादीनां बलदेवप्रद्युम्नादीनां च। पररूपे ईश्वरो भगवानेव, लक्ष्मीः तस्य पत्नी। अन्तर्यामी सर्वेषां हृद्देशे वर्तते।

**मोक्षः, मुक्तिः, निर्वाणञ्च**

न्यायानुसारं दुःखस्यात्यन्तविमोक्ष एवापवर्गः[१]। दुःखानां भोगाय शरीरमपेक्ष्यते। स्वकृतपापपुण्यादीनां कर्मणां फलभोगायात्मनः शरीरेण सम्बन्धो जायते। तादृशानां कर्मणामभावे पुनर्जन्म न विद्यते। इयमेवात्मनो मुक्तावस्था। तदात्माऽनुभवविहीनो भवति। मुक्तात्मनः शाश्वतानन्द आध्यात्मिक एव। शरीरवतामात्मनामानन्द आधिभौतिको भवति।

---

१. दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः।

मुक्तये ज्ञानमेवापेक्षितम् । ज्ञेयविषयास्तु—प्रमाणप्रमेयादयः ।[१] तत्त्वज्ञानानन्तरं मिथ्याज्ञानं विनश्यति । ततो रागद्वेषौ नश्यतः । ततो धर्माधर्मप्रवृत्तयो नश्यन्ति । परिणामस्वरूपं जन्मासम्भवं भवति । तदा न सन्ति दुःखानि । दुःखानामत्यन्ताभावो मोक्षः । वैशेषिकेऽपि द्रव्यगुणादीनां पदार्थानां तत्त्वज्ञानात् निःश्रेयससिद्धिर्मता ।

सांख्यानुसारं पुरुषस्य बन्धनं मोक्षो वा वस्तुतो न भवति । तथा हि—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥
रूपैः सप्तभिरेवं बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥
एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥
तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥
दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥
सम्यग्ज्ञानाधिगमात् धर्मादीनामकरणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवत् धृतशरीरः ॥

सांख्यकारिकायां ६२-६७

अनेन प्रकारेण जीवनकालेऽपि मुक्तिः प्राप्यते । मरणानन्तरं तु जीवन्मुक्तः कैवल्यं ( पूर्णमोक्षं ) अश्नुते ।[२]

योगानुसारं सम्यग्दर्शनेन प्रकृतिपाशेभ्यः पुरुषस्य मुक्तिः सम्भवति । प्रकृतेः चित्ततत्त्वं पुरुषं बध्नाति । चित्तवृत्तेर्निरोधायाष्टाङ्गिको योगमार्गः

१. प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ।

२. वैष्णववेदान्तिनो जीवन्मुक्तिं न मन्यन्ते ।

प्रतिष्ठितः। यावत्कालं चित्तं कार्यपरं भवति तावदेव पुरुषः संसारी भवति, अन्यथा पुरुषाय संसारस्यास्तित्वमपि न विद्यते।

समाधिसम्पन्नो योगी कर्मक्षयमारभते। त्रिविधानि कर्माणि— प्रारब्धानि, संचितानि, आगामीनि च भवन्ति। ईश्वरभक्त्या समाजसेवया चागामिकर्मभ्यो निवृत्तिर्भवति। मुक्तिमार्गे कर्माण्येव बन्धनानि।

मीमांसायां प्रारम्भिकयुगे मुक्तेः कल्पना स्पष्टा नासीत्। तदा यज्ञादिभिः स्वर्गगतिरेव सर्वोच्चा मता। परवर्तियुगे प्रभाकरो धर्माधर्मविरहितस्यात्मनो मोक्षगतिं निर्दिष्टवान्। तत्रापि मोक्षाय शमदमब्रह्मचर्यादिनाऽऽत्मज्ञान-प्राप्तिरेव साधनं मतम्। मीमांसानुसारं मोक्षावस्थायामात्मा शुद्धरूपे वर्त्त-मानो निर्द्वन्द्वो भवति।

वेदान्तानुसारं ब्रह्मनिष्ठः मोक्षं लभते। तद्यथा जीवन्मुक्ता विदेहमुक्ताश्च ब्रह्मनिष्ठा भवन्ति। यदा जीवनकाले व्यावहारिकदृष्टिः न वर्तते तर्हि जीवन्मुक्तस्य दृष्टिः पारमार्थिकी भवति। मोक्षावस्थायामात्मा पारमार्थिकः, कूटस्थो नित्यः, आकाशवत् सर्वव्यापी सर्वविक्रियारहितो नित्यतृप्तो निरवयवः स्वयंज्योतिस्वभावो भवति। जीवन्मुक्तः सर्वं ब्रह्मवत्पश्यति। मुक्तः सन्नात्मा ब्रह्मणा तादात्म्यं लभते।

रामानुजाचार्यस्य विशिष्टाद्वैते भक्तिः मुक्तये प्रधानसाधनं मता। ते एव भक्ता भवितुमर्हन्ति ये निष्कामकर्मयोगेन हृदयस्य परिशोधनं कृत्वा भगवतोऽन्तर्यामिस्वरूपं जानन्ति। भक्तेः सम्पूर्णतैव मुक्तिः। तद्यथा भक्तेः चरमसोपानं प्रपत्तिः। प्रपत्तिस्तु भगवति विलीनत्वमेव। आत्मनः स्वतन्त्रसत्ता मुक्तावस्थायामपि वर्तते। मुक्तात्मा सर्वज्ञः सन् सदैवेश्वरानुभूतिं करोति। मुक्तात्माऽणुरूपो भवति। ब्रह्म तु सर्वव्यापी विभुरेव। एतदेव तयोरन्तरम्। सृष्टिव्यापारे मुक्तात्मन उत्तरदायित्वं नास्ति।

ब्रह्मलोकेऽसंख्या मुक्तात्मानो विद्यन्ते। ते विशुद्धसत्त्वमयाः। सत्त्वैरेव ते निजविचारस्येच्छायाश्च स्वरूपं विदधति। भक्तिमार्गेण मुक्ता आत्मानो भक्तौ रताः भवन्ति। ध्यानोपासनादिभिर्मुक्ता आत्मान ऐका-न्तिकाः केवलिनो भवन्ति।

सृष्टेः रहस्यम्

न्यायानुसारमीश्वरः सृष्टिरचनां करोति। संसारे सर्वं दुःखमेव वर्तते। तर्हि किन्निमित्तं सृष्टेः रचना कृतेश्वरेण ? नैयायिकाः सृष्टिविधाने दयामेव पश्यन्ति भगवत ईश्वरस्य। मानवः संसारेऽदृष्टस्य क्षयं कर्तुमेवावसरं प्राप्नोति। अनेन प्रकारेण स कर्मबन्धनात् मुक्तो भूत्वा मोक्षं प्राप्नुयादिति सृष्टेरायोजनमभ्युदयायैव भवति।

वैशेषिकदर्शनानुसारं प्रलयकाले जगतः सर्वेषां वस्तूनां परमाणुरूपं विघटनं भवति। पश्चात् प्राणिनामात्मानोऽदृष्टेन (धर्माधर्माभ्यां) समन्विता निस्पन्दाः तिष्ठन्ति। प्रलयायोजनमादिदेवस्य कृपां निदर्शयति। यतः प्रलयानन्तरं जन्ममरणबन्धनविमुक्ताः काले काले प्राणिनो विश्रामं लभन्ते।

विश्रान्तियुगस्यान्तोऽपि समायाति यदा पुनः आदिदेवः प्राणिनामभ्युदयायैव तेषां शरीरधारणमिच्छति। तदा परमाणुषु गतिर्जायते। तेषां संघटनं समारभते। परमाणूनां समाहारक्रमेण पंचभूतानां साधारणरूपं प्रादुर्भवति। अग्नेः पृथिव्याश्च परमाणुभिर्हिरण्यगर्भ उत्पद्यते। आदिदेवः पश्चात् ब्रह्म विश्वं चोत्पादयति। ब्रह्मणा एव प्रजापतयः देवाः पितरः ऋषयश्चत्वारो वर्णा अदृष्टानुसारं जन्मानि गृह्णन्ति।

सांख्यानुसारं प्रकृतौ बौद्धिकानामाधिभौतिकानां च तत्त्वानां समन्वयो वर्तते। अत एव प्रकृतेः बुद्धेरहंकारस्य मनसो ज्ञानेन्द्रियाणां पंचभूतानां चोत्पत्तिर्भवति।

प्रकृतेः सृष्टिस्त्रिगुणात्मिका भवति। तत्र सत्त्वगुणेन चैतन्यस्यानन्दस्य प्रकाशस्य सत्यस्य चाभिव्यक्तिर्भवति। रजसा दुःखस्य कार्यपरताया भोगविलासस्य चाभिव्यक्तिर्भवति। तमसा कार्यपरताया निरोधो मोहस्यावरणस्य च सृष्टिर्भवति। तमोगुणेनाज्ञानमालस्यं च जायेते। त्रयाणां गुणानां कार्याणि क्रमशः प्रकाशः प्रवृत्तिः नियमनं च भवन्ति।

प्रकृतेरुत्पद्यमानेषु वस्तुषु परस्परं यदन्तरं वर्तते तत्तेषां साधनभूतगुणानां मात्राया अनुपातेनैव भवति ।

प्रकृतेः प्रथमविकासो महान् बुद्धिश्च भवति। बुद्धिः धर्मज्ञानवैराग्यैश्वर्यादिभावनानां कारिका भवति । बुद्धेरहंकारतत्त्वं जायते । अहंकारेणास्मिताया बोधो भवति । अहंकारेण पुरुषः प्रकृतेः क्रियमाणानि कार्याणि स्वीकरोति । तद्यथा—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ।। गीतायां ३.२७

अहंकारात् पंच ज्ञानेन्द्रियाणां पंचकर्मेन्द्रियाणां पंचतन्मात्राणां मनसश्च प्रादुर्भावो भवति । तन्मात्राभ्यः पंचभूतानां प्रवर्तनं जायते ।

प्रकृतेर्विकासो विलयश्च क्रमानुसारमनादिकालादेवानन्तकालपर्यन्तं भवतः । विकासक्रमेणैव विलयोऽपि तत्त्वानां भवति । योगदर्शनानुसारं सृष्टेः विकासविलयक्रमः प्रायः सांख्यवद् वर्तते ।

मीमांसानुसारं सृष्टिरनादिरनन्ता च वर्तते । अस्याः कोऽपि रचयिता नास्ति ।

वैष्णववेदान्तानुसारं ब्रह्मण एव जगतः सृष्टिर्भवति । ब्रह्म एव सृष्टेरुपादानकारणं निमित्तकारणं च भवति । जगदिदं ब्रह्मणो लीलायै वर्तते । प्रलयकालेऽपि जगतः स्थितिरव्यक्तरूपेण भवति ।

शाङ्करवेदान्तानुसारं जगतः प्रादुर्भाव ईश्वरादेव भवति । तद्यथा—ईश्वरादाकाशः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथ्वी सम्भवन्ति । प्रलयकाले सर्वाणि भूतानि स्वकारणे विलीनानि भवन्ति । अन्ततो गत्वाऽऽकाश ईश्वरे विलीयते ।

शङ्करः पशून्पादपान् देवांश्च सर्वान् सात्मकान् मन्यते । सर्वेषामात्मनां ब्रह्मण उत्पत्तिस्तथैव भवति यथाऽग्नेः स्फुलिङ्गा जायन्ते । मुक्तावस्थायामात्मानः पुनः ब्रह्मणि विलीयन्ते ।

रामानुजानुसारं प्रलयकाले ब्रह्मणः कारणावस्था, सृष्टेः समारम्भे च

कार्यावस्था भवति। रामानुजस्य दृष्टौ सृष्टेः समारम्भोऽध्यासः, माया, विवर्त एव वा नास्ति। सृष्टिः ब्रह्मणः परिणामनमेव। सृष्टिविन्यासे ब्रह्मणा सहेश्वरो जीवश्च जगदपि सद्रूपेण प्रतिष्ठितं रामानुजेन। अनेन प्रकारेण शंकरस्य मायावादो रामानुजेन निराकृतः।

**परमाणुवादः**

परमाणुवादस्य प्रतिष्ठा वैशेषिकदर्शने कृता। जैनबौद्धदर्शनयोरपि क्वचित् परमाणुवादः सम्मत एव वर्तते। तद्यथा—ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते। ततः परमाणुद्वयसंयोगे सति द्वयणुकमुत्पद्यते। त्रिभिः द्वयणुकैः त्र्यणुकम्। एवं चतुरणुकादिक्रमेण महती पृथ्वी, महत्य आपो महत्तेजो महान्वायुरुत्पद्यते। एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षा-वशात् परमाणुषु क्रिया। क्रियया परमाणुद्वयविभागे सति द्वयणुकनाशः। ततस्त्र्यणुकनाशः। ततः चतुरणुकस्येत्येवं महापृथिव्यादिनाशः।

**प्रवृत्तिविवेचनम्**

तत्त्वज्ञानेन यदा कश्चित् पुरुषः समष्टिमयीं भावनां करोति तदा तस्य सत्प्रवृत्तिर्जायते। मिथ्याज्ञानेनासत्प्रवृत्तयश्च सम्भवन्ति। तत्त्वज्ञानाय मननं निदिध्यासनं स्वाध्यायश्चापेक्षितानि। मिथ्याज्ञानेन रागद्वेषादिभि-र्बद्धः पुरुषः सुखप्राप्तये दुःखनिवारणाय च यत्कर्म कुरुते तत् तस्य पुनर्जन्म-बन्धनायैव भवति।

वैशेषिकदर्शनेऽहिंसा-श्रद्धा - भूतहितत्व - सत्यवचनास्तेय - ब्रह्मचर्यानु-पधाभावशुद्धि- क्रोधवर्जनाभिषेचन-शुचिद्रव्यसेवन–देवभक्त्युपवासाप्रमादानां कर्तव्यरूपेण परिगणनं कृतम्। आत्मसंयममधिकृत्य योगस्योपयोगिता मता। तत्त्वज्ञानेन मानवः स्वार्थबुद्धेः स्वार्थपरतायाश्च परिधेर्बहिर्भवति।

सांख्यानुसारं मानवस्य निजस्वरूपस्य तत्त्वज्ञानं—अहं पुरुषोऽस्मीति—कर्तव्यं मतम्। सत्त्वेन मानव ऋषित्वं प्रति याति। ज्ञानपथः सर्वेभ्योऽनावृतः मतः। शूद्रोऽपि ज्ञानेन मुक्तिं लब्धुं समर्थः।

मीमांसायां जीवनस्य सर्वासां प्रवृत्तीनां यज्ञरूपं प्रतिष्ठितम्।

अभ्युदयाय नित्यनैमित्तिककर्मणां तत्र विधानं कृतम्। अनेन प्रकारेण मोक्षोऽपि सुलभो मतः।

वेदान्तसूत्रे संन्यासकर्मयोगयोरावश्यकता प्रतिपादिता। शङ्करस्तु सरलविधिनाष्टाङ्गिकयोगमार्गेण ब्रह्मज्ञानं सर्वेभ्यो वर्णेभ्यः शक्यं मतवान्। ईश्वरोपासनया पापानां क्षयः, ऐश्वर्याणां प्राप्तिः, पश्चात् मुक्तिः सम्भाविता।

रामानुजः जीवस्य पतनं कर्मणाऽविद्यया चामन्यत। विद्ययाऽविद्याया नाशः कर्तव्यः। विद्या तु सर्वेषां मौलिकतत्त्वरूपेणेश्वरग्रहणमिति। ईश्वरोपासनया रामानुजः पापनिवृत्तिमुपादिशत्। निष्कामकर्म बन्धनाय न भवति, अपितु तेन सत्त्ववृद्धिर्जायत इति रामानुजस्य मतम्। स भक्तेर्महत्त्वमीश्वरस्य तत्त्वज्ञानाय प्रतिपादितवान्। भक्तौ पूर्णीभूतायाम् आत्मनः परमात्मना सह तादात्म्यमनुभूयते। आत्मन एवेश्वराय समर्पणं प्रपत्तिः। प्रपत्त्या मुक्तिः सुलभा भवति।

**सत्कार्यवादः**

सत्कार्यवादः सांख्यदर्शनस्य वैशिष्ट्यम्। तदनुसारं कारणे कार्यं प्रागेव वर्तते। तद्यथा मृत्तिकायां घटः प्रागेवासीत्। तदधिकृत्य प्रोक्तम्—

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥ सांख्य का० ९

तदेव व्याख्याद्वारेण—"इह लोकेऽसत्करणं नास्ति यथा—सिकताभ्यस्तैलोत्पत्तिः। इह लोके यो येनार्थी स तदुपादानग्रहणं करोति, दध्यर्थी क्षीरस्य न तु जलस्य ग्रहणं करोति। सर्वस्य सर्वत्र सम्भवो नास्ति। यथा—सुवर्णस्य रजतादौ। इह कुलालः शक्तो मृद्दण्डचीवररज्जुनीरादिकरणोपकरणं वा शक्यमेव घटं मृत्पिण्डादुत्पादयति। कारणं यल्लक्षणं तल्लक्षणमेव कार्यमपि, यथा—यवेभ्यो यवाः व्रीहिभ्यो व्रीहयः। यदाऽसत् कार्यं स्यात् ततः कोद्रवेभ्यः शालयः स्युः। न च सन्तीति। तस्मात् सत् कार्यम्।"

न्यायदर्शनेऽसत्कार्यवादः प्रतिष्ठितः। सत्कार्यवादस्य विरोधिमतं

न्यायसङ्गतमेव। तथा हि—यदि कारणे कार्यस्य प्रागेवास्तित्वं वर्तते तर्हि किन्निमित्तं कार्यं क्रियते। कारणस्यास्तित्वं प्राग्भवति पश्चात् कार्यमुत्पद्यते। तद्यथा प्रथमं बीजं पश्चात् वृक्षो जायते।

वेदान्ते सांख्यसम्मतः सत्कार्यवादो गृहीतः। तदनुसारम्, उत्पत्तेः प्रागेव घटादयः विद्यमानाः सन्ति, किन्तु ते आवृतत्वान्नोपलब्धाः। कार्यं तावन्मात्रमावरणैरज्ञेयं भवति यावन्मात्रं तस्य कर्ता न विद्यते। यद्यपि कारणे कार्यं विद्यते, तथापि सहकारिताशक्तिमपेक्षते कार्यस्याविर्भावः। तिले तैलं वर्तते। तत्तैलं तिलस्य पेषणेनाविर्भवति। पेषणमेवात्र सहकारिताशक्तिः।

## जैनदर्शनम्

जैनदर्शनानुसारं—सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः। एतेषु सम्यग्दर्शनं तु तत्त्वार्थश्रद्धानमेव। ततः तत्त्वार्थः ज्ञेयः। तत्त्वज्ञानाय जैनदर्शने प्रमाणं प्रतिष्ठितम्—प्रत्यक्षं परोक्षं च।

### प्रमाणानि

प्रत्यक्षं ज्ञानं त्रिविधं—अवधि मनःपर्ययं केवलं च। अवधिप्रत्यक्षं दिव्यदृष्ट्या सम्भवति। मनःपर्ययेणापरेषां मानसिकभावा ज्ञायन्ते। केवलप्रत्यक्षं तु सर्वज्ञत्वमेव। परोक्षप्रमाणं द्विविधं भवति—मतिः श्रुतं च। मतिप्रमाणमिन्द्रियाणां मनसश्च योगेन जायते। स्मृत्या पूर्वज्ञानस्य स्मरणं भवति। स्मृतिरेव संज्ञा भवति यदि तस्या उत्पत्तिः समानवस्तुनो दर्शनेन भवति। चिन्ताऽभिनिबोधश्च नैयायिकानामनुमानमेव। श्रुतज्ञानं द्विविधम्—अक्षरात्मकमनक्षरात्मकं च। पुस्तकेभ्यः प्राप्तं ज्ञानमक्षरात्मकं भवति। अनक्षरात्मकं ज्ञानमनुमानेन प्रतिष्ठितं भवति।

### स्याद्वादः

उपर्युक्तप्रमाणैः कस्यापि वस्तुनो यः स्वभावः परिचीयते, तस्य निरूपणाय स्याद्वादो विकसितः। ततो वस्तुस्वभावज्ञानाय सप्तविधानि वाक्यानि निर्दिष्टानि—(१) स्यादस्ति,(२) स्यान्नास्ति,(३)स्यादस्ति नास्ति,

(४) स्यादवक्तव्यः, (५) स्यादस्ति अवक्तव्यः, (६) स्यान्नास्ति अवक्तव्यः (७) स्यादस्ति नास्ति अवक्तव्यः।

प्रमाणैः तत्त्वानामधिगमो भवति। तत्त्वानि सप्त सन्ति—जीवः, अजीवः, आस्रवः, बन्धः, संवरः, निर्जरा, मोक्षश्च। जीवस्तु वैदिक-दर्शनस्यात्मनः समकक्षो वर्तते। जीवा द्विविधाः—संसारिणो मुक्ताश्च। तत्र व्यवहारदृष्ट्या संसारिणः निश्चयनयेन मुक्ताश्च ज्ञेयाः।

जीवः

जीव उपयोगमयो[1]ऽमूर्तिः कर्ता स्वदेहपरिमाणः।
भोक्ता संसारस्थः सिद्धः स विस्रसोर्ध्वगतिः॥

जीवस्येयं परिभाषाऽभिनवैव प्रवर्तते। सर्वाणि वैदिकान्यवैदिकानि वा दर्शनानि जीवविषयकमतमेतदूभिन्नमेव धारयन्ति।[2]

जीवस्य वैशिष्ट्यानि परिगणितानि। तद्यथा—जीवस्येन्द्रियाणि बलमायुः श्वासोच्छ्वासौ च व्यावहारिकदृष्ट्या भवन्ति। निश्चयनयतः जीवस्य चेतना भवति। कर्मबन्धनेन जीवो मूर्तरूपं प्राप्नोति। कर्मानुसारं जीवः सुखदुःखं भुनक्ति। पंचभूतरूपेण जीव एकेन्द्रियो भवति। चरजीवाः द्वीन्द्रियाः, त्रीन्द्रियाः, चतुरिन्द्रियाश्च भवन्ति। पंचेन्द्रिया एव जीवाः समनस्का भवन्ति।

निश्चयात्मकदृष्ट्या चेतनायुक्तो जीवः शुद्धज्ञानदर्शनविशिष्टः। तस्मिन् वर्णरसगन्धादयो न वर्तन्ते। सुखदुःखान्यपि जीवस्य न भवन्ति।

मुक्तजीवो निष्कर्मा भवति। तस्याष्टगुणा विद्यन्ते—सम्यक्त्वं ज्ञानं

---

१. उपयोगस्तु ज्ञानदर्शने।

२. जीवसिद्धिः चार्वाकं, ज्ञानदर्शनोपयोगलक्षणं नैयायिकं प्रति, कर्मकर्तृत्वस्थापनं सांख्यं प्रति, स्वदेहप्रमितिस्थापनं नैयायिकमीमांसकसांख्यत्रयं प्रति, कर्मभोक्तृत्वव्याख्यानं बौद्धंप्रति, संसारस्थव्याख्यानं सदाशिवं प्रति, सिद्धत्वव्याख्यानं भट्टचार्वाकद्वयं प्रति, ऊर्ध्वगतिस्वभावकथनं माण्डलिकग्रन्थकारकथनं प्रति ब्रह्मदेवस्य द्रव्यसंग्रहटीकायाम्।

दर्शनं वीर्यं सूक्ष्मता अवगाहनम्, अगुरुलघुत्वम् अव्याबाधत्वं च। मुक्त-जीवानां विशिष्टो लोक एव भवति। तत्र ते नित्या निर्जराः तिष्ठन्ति।

**अजीवः**

अजीवः षड्विधो भवति—तद्यथा—

अजीवः पुनः ज्ञेयः पुद्गलो धर्मोऽधर्म आकाशः।
कालः पुद्गलो मूर्तो रूपादिगुणोऽमूर्तयः शेषास्तु॥

पुद्गलस्तु भौतिकतत्त्वसमः दृश्यते। पुद्गलस्य पर्यायाः—शब्दो बन्धः सूक्ष्मः स्थूलः संस्थानं[1] भेदः तमः छाया उद्योतः आतपश्च भवन्ति। पुद्गलो रूपरसादिविशिष्टो भवति। पुद्गलानां जीवानां च गमनसहकारी धर्मो भवति, यथा जलं मत्स्यानां तरणाय भवति। अधर्मो जीवानां पुद्गलानां च स्थानसहकारी भवति, यथा पथिकेभ्यः स्थानाय छाया भवति। आकाशे जीवादयोऽवकाशं लभन्ते।

कालस्तु द्रव्यपरिवर्तरूपः परिणामादिलक्ष्यः।

जीवानामजीवानां च सप्त विशेषाः—आस्रवो बन्धनं संवरः निर्जरा मोक्षः पुण्यं पापं च भवन्ति। जीवा अजीवाः सप्तविशेषाश्च जैन-दर्शनस्य नव तत्त्वानि प्रतिष्ठितानि। आस्रवेण कर्मणां भावानां च जीवेन सह समागमो भवति। आस्रव इत्थं जीवस्य संस्काराय भवति। बन्धेन जीवः कर्मणा बध्यते। आस्रवस्याभावः संवरः। संवरस्य संसिद्धये— व्रत-समितिगुप्तिधर्मानुप्रेक्षापरीषहजयचारित्राणां पालनं निर्दिष्टम्। निर्जरया जीवः कर्मबन्धनान्मुच्यते। ततो मोक्षः। स्वकीयैः शुभैरशुभैर्वा भावैः जीवः पापस्वभावः पुण्यस्वभावो वा भवति।

**मोक्षः**

यदा जीव उपर्युक्तनवतत्त्वानि प्रति श्रद्धां लभते तदा तस्य सम्यग्ज्ञान-

---

१. आकारप्रकारः

प्रक्रियाऽऽरभते। सम्यग्ज्ञानेन जीवस्य संशयविमोहविभ्रमाणां क्षयो भवति।[१] तदा चारित्रेणाशुभाद्विनिवृत्तिः शुभे प्रवृत्तिर्जायते। व्रतसमितिगुप्तय एव चारित्राणि। सम्यक्चारित्रेण कर्मबन्धनं प्रहीयते, कर्मणोऽवरोधश्च भवति। अयमेव मोक्षः। तथा हि—

सम्यग्दर्शनं ज्ञानं चरणं मोक्षस्य कारणं जानीहि।
व्यवहारात् निश्चयतः तत्त्रितयमयो निज आत्मा॥
मा मुह्यत मा रज्यत मा द्विष्यतेष्टानिष्टार्थेषु।
स्थिरमिच्छथ यदि चित्तं विचित्रध्यानप्रसिद्ध्यै॥
आत्माऽऽत्मनि रत इदमेव परं भवति ध्यानम्।

जैनदर्शनानुसारं मुक्तात्मा 'ईश्वरः' इति कथ्यते।

## बौद्धदर्शनम्

निर्वाणपथगामिनो बौद्धास्तु प्रज्ञप्तिमात्र एवात्मेति मन्यन्ते। अतस्तेऽनात्मवादिनोऽनीश्वरवादिनश्च वैदिकदृष्ट्या प्रतीयन्ते। तद्यथा—रथस्तु न कोऽपि स्वतन्त्रः पदार्थः। स तु केवलं शब्दमात्र एव चक्राश्वादीनां सम्भारः। तथैव रूपवेदनाविज्ञानसंज्ञासंस्काराणां पंचस्कन्धानां समाहार एवात्मा प्रतीतः।[२] तस्य पंचस्कन्धसंघस्य पुनर्जन्म भवति। एतेषां प्रत्येकस्य स्वीयमौलिकतत्त्वे विलयनमेव महानिर्वाणम्।

उपर्युक्तसिद्धान्तस्य ग्रहणाय बौद्धानां प्रतीत्यसमुत्पादः प्रतिष्ठितः।

अत्र प्रतीत्य (कारणानामेकत्रत्वेन) समुत्पादः (कस्यापि वस्तुन उत्पत्तिः) इति हेतु-फल-परम्परा ग्रहणीया। अनेन सिद्धान्तेन ज्ञायते—न किमपि शाश्वतम्, सर्वे धर्माः क्षणिका हेतुप्रत्ययजनिताश्च। तदनुसारं

१. संशयविमोहविभ्रमास्तु समाहारेण समारोपाः। तेषु भ्रान्तिरेव विमोहः। सन्देह एव संशयः। ज्ञानस्यास्पष्टत्वं विभ्रमः।

२. इन्द्रियाणि तेषां विषयाश्च रूपम्। वेदना सुखदुःखादीनां भावना। विज्ञानमहंभावः, इन्द्रियैः प्राप्तं ज्ञानं च भवति। संज्ञा नामैव। संस्कारा मानसिकप्रवृत्तयः।

भवचक्रं प्रचलति। भवचक्रस्य द्वादशाङ्गानि—अविद्या, संस्कारः, विज्ञानम्, नामरूपम्, षडायतनम्, स्पर्शः, वेदना, तृष्णा, उपादानम्, भवः, जातिः, जरामरणं च।[१] एतेषां प्रथमौ द्वौ पूर्वजन्मनः, अन्तिमे द्वे भाविजन्मनः. शेषाण्यष्टौ वर्तमानजन्मनः शरीरस्यैव विद्यन्ते। एतानि द्वादशाङ्गानि त्रिविधाः—क्लेशः कर्म, वस्तु च। अविद्यातृष्णोपादानानि क्लेशस्वभावानि। संस्कारभवौ कर्मस्वभावौ। शेषाणि तु वस्तुस्वभावानि, क्लेशकर्मणोरधिष्ठानत्वात्।

## निर्वाणम्

बौद्धदर्शने निर्वाणं वैदिकदर्शनस्य मोक्षस्थानीयं वर्तते। निर्वाणं तु परमः क्षेमः, तृष्णाक्षयः दुःखस्यान्तकरः, मृत्योर्जय एव वर्तते। यथाऽग्नि-र्निर्वापितः सन्नदृश्यो भवति तथैव निर्वाणं प्राप्य पुरुषस्य किंचिदपि कुत्रापि न वर्ततेऽस्तित्वम्।

रागस्य प्रहाणेन निर्वाणं प्राप्यते। तदा कामसुखानि न विद्यन्ते। निर्वाणपथगामिनां कृते चत्वारि 'आर्यसत्यानि' प्रतिष्ठितानि। तद्यथा—दुःखम्, दुःखस्य समुदयः, दुःखस्य निरोधः, निरोधायाष्टाङ्गिकमार्गश्च। अष्टाङ्गिकमार्गो दृष्टिसंकल्पवाक्कर्मान्ताजीविकाव्यायामस्मृतिसमाधीनां सम्यक् प्रतिष्ठैव भवति। समाधिर्योगपरो भवति।

निर्वाणं द्विविधं मतम्—सोपधिशेषं निरुपधिशेषं च। तयोः प्रथमं जीवन्मुक्तस्यावस्था भवति, अपरं च मरणानन्तरमेव जायते। परवर्तियुगेऽ-

---

१. अविद्या पूर्वजन्मनः क्लेशदशा। संस्कारः पूर्वजन्मनः कर्मावस्था-पापपुण्यादयः। विज्ञानं प्रतिसन्धिस्कन्धः, जन्मग्रहणकाले कुक्षिगतं नामरूपादीनां पंचस्कन्धानां विज्ञानमेव। नामरूपं विज्ञानक्षणात् षडायतनोत्पत्तिपर्यन्तावस्था। षडायतनं स्पर्शात् पूर्वं पंचस्कन्धाः। स्पर्शः सुखदुःखादिविवेचनपर्यन्तावस्था। वेदना मैथुनरागसमुदाचारपर्यन्तावस्था। तृष्णा भोगमैथुनकामिनां पुद्गलाना-मवस्था। उपादानं चतुर्विधक्लेशसमुदाचारावस्था पुद्गलस्य कर्मावस्था भवः। जातिः पुनःप्रतिसन्धिः। जरामरणं जातेः प्रभृति वेदनापर्यन्तावस्था।

प्रतिष्ठितं निर्वाणं सम्मतम्। तदनुसारं बोधिसत्त्वाः महाकरुणाया प्रेरिताः सन्तः शून्यतां न प्रतिपद्यन्ते यद्यपि ते सर्वथा योग्या भवन्ति।

## चत्वारि प्रस्थानानि

परवर्तियुगे बौद्धदर्शनस्य चत्वारि प्रस्थानानि वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकानि जातानि। एतेषु प्रथमे द्वे हीनयानस्य, शेषे द्वे महायानस्य शाखाः सन्ति।[१] एतेषां परस्परभेदः जगतः सत्तामधिकृत्य मतवैशिष्ट्येन समुदभवत्। तथाहि वैभाषिका बाह्यजगतः सत्तां प्रत्यक्षेणैव मन्यन्ते। सौत्रान्तिकाः जगतः सत्तामनुमानेन मन्यन्ते। जगतः सत्तां मन्यन्ते अतएव वैभाषिकाः सौत्रान्तिकाश्च सर्वास्तिवादिन इति कथ्यन्ते। योगाचारास्तु बाह्यजगतः सत्तां न मन्यन्ते। ते चित्तं (विज्ञानं) एव सत् मन्यन्ते। अतएव ते विज्ञानवादिनः। शून्यवादिनां दृष्टौ जगत् विज्ञानं च असतये। शून्यमेव केवलं सत्। ते शून्यवादिनो माध्यमिका सर्ववैनाशिका इति कथ्यन्ते। गौतमबुद्धात् क्रमशः ३००, ४००, ५०० वर्षाणि पश्चात् वैभाषिकस्य, सौत्रान्तिकस्य माध्यमिकस्य च प्रस्थानस्य प्रादुर्भावोऽदृश्यत। योगाचारस्य प्रतिष्ठा खीष्टाब्दतः पश्चात् तृतीयशतकेऽभूत्।

**प्रमाण-व्यवस्था**

बौद्धदर्शने प्रमाणं द्विविधम्—प्रत्यक्षमनुमानं च। तदनुसारमर्थाकारस्य विशदाभत्वमेव प्रत्यक्षम्। लिंगेनार्थस्यास्फुटज्ञानमनुमानम्। अग्नौ सन्निहिते सति तस्य ज्ञानं प्रत्यक्षं दूरे सति धूमलिंगेन तस्य ज्ञानमनुमानम्। तद्विकल्पबलेन सिध्यति। प्रथममिन्द्रियाश्रितं ज्ञानं प्रत्यक्षं भवति पश्चात् द्वितीये क्षणे मानसप्रत्यक्षं जायते। तद्यथा चक्षुर्व्यापार उपरते मनोविज्ञानमेव प्रत्यक्षम्।

---

१. हीनयानं बौद्धधर्मदर्शनयोः प्रथमः रश्मिः प्रायशः व्यक्तिगताभ्युदयाय गौतमबुद्धस्य मूलशिक्षानुरूपं विकसितम्। परवर्तियुगे महायानं तत्कालीनविविधदर्शनैः प्रभावितं बहुजनसुखाय बहुजनहिताय भिक्षूणां व्यक्तित्वं विकासयितुं प्रादुरभवत्।

योगिप्रत्यक्षं योगिनामेव भवति। योगिनो भूतमनागतं च वर्त्तमानवत् पश्यन्ति। योगिप्रत्यक्षमलौकिकयोगजसन्निकर्षेण जायते। तन्निर्विकल्पकं शुद्धमेव भवति।

## स्वभाववादः

वस्तुतः स्वभाववादस्य दार्शनिकत्वं नास्ति। स्वभाववादे गहनचिन्तनस्य सर्वथाऽभावो दृश्यते। स्वभाववादः केवलं वर्त्तमानमपेक्षते। भूतभविष्ययोर्विचारणा नास्ति। अस्यां परिस्थितौ वादेऽस्मिन् आत्मा, परलोकः, कर्मफलम्, मुक्तिः, पापपुण्ये, ईश्वरः, देवाः—सर्वाण्येव मिथ्या मतानि। प्रत्यक्षमेव केवलं प्रमाणं प्रतिष्ठितम्। अस्य लोकस्यैव सत्ताग्रहणात् स्वभाववादो लोकायतः कथितः। स्वभाववादस्य प्रमुखाचार्यश्चार्वाकोऽभवत्। तस्य नाम्ना स्वभाववादश्चार्वाकदर्शनमिति ख्यातम्।

स्वभाववादिनः प्रत्यक्षेण चत्वारि भूतानि—पृथ्वीं जलमग्निं वायुं च मन्यन्ते। तेभ्यः सर्वं जगत् प्रस्फुटितम्। बुद्धिरेभिः भूतैः निर्मिता। शरीरे बुद्धेः प्राधान्यम्। आत्मा तु नास्त्येव।

## दार्शनिकानां व्यक्तित्वम्

ऋषिभिः प्रवर्तितमेव भारतीयदर्शनं वेदेषु दृश्यते। देवानुप्राणितमेव तेषामृषीणां व्यक्तित्वमभवत्। परवर्तिवैदिकयुगे द्विविधा दार्शनिका बभूवुः—गृहस्थाः संन्यासिनश्च। कतिपयदार्शनिका गृहस्थाः—अजातशत्रुजनकादयः राजानः, आरुणियाज्ञवल्क्योषस्तिचाक्रायणादयो ब्राह्मणा बभूवुः।

उपनिषत्कालतः प्रभृति दर्शनस्य प्रवृत्तिः प्रायशः वानप्रस्थेषु संन्यासिषु च दृश्यते। गृहस्थाश्रमस्य बन्धनानि दर्शनोद्दिष्टस्य मोक्षस्य मार्गे बाधा इति मतानि। अतएव दार्शनिकानां वसतय ऋषीणामाश्रमेषु भिक्षूणां विहारेषु च बभूवुः। ऋषिजीवनं तु ब्रह्मचर्यमेव।

परवर्तियुगे शङ्कराचार्येण दर्शनाय प्रवृत्तिकामानां चत्वारि लक्षणानि निर्दिष्टानि। तद्यथा—जिज्ञासा, निष्कामता, यमनियमपरायणता,

मोक्षप्राप्तयेऽभिलाषश्च: । शङ्करस्य व्यक्तित्वमेवोच्चादर्शं प्रतिष्ठापयति । तस्य प्रतिभाया अलौकिकत्वं सुविदितमेव । अष्टवर्षदेशीय एव स वेदेषु निष्णातो बभूव । बाल्ये स प्रव्रजित: कर्मयोगी बभूव । समग्रभारतमेव स्वकार्यक्षेत्रं विधाय सर्वत्र वेदान्तस्याद्वैतचिन्तनस्य धारां प्रवाहितवान् । तस्य दिग्विजयोऽद्वैतस्य सर्वत्र प्रतिष्ठायै बभूव ।

शङ्करोऽद्वैतसिद्धान्तानां प्रतिपादनाय बहूनां ग्रन्थानां रचनां कृतवान्, समग्रं भारतमद्वैतं कर्त्तुमेवास्य चतुर्दिग्भागेषु विश्वविद्यालयानां स्थापनां कृतवांश्च । पूजाविधिषु पशुबलिं नरबलिं च निषेधितवान् । शङ्करस्य प्रायशः द्विशताब्दं पश्चात् रामानुजो विशिष्टाद्वैतस्योन्नायकोऽभवत् । स तु यतिराज एवाभवत् । स दक्षिणभारते वैष्णवदर्शनस्य प्रचारमकरोत् ।

एतेषां दार्शनिकानां व्यक्तित्वनिदर्शनेन स्पष्टमेव प्रतिभाति यत् भारतीय-दर्शनं विदुषामेव बुद्धेर्जिह्वाया वा केवलं विषयो नाभूत् । तेषां जीवनमेव दर्शनावगाहनेन विशुद्धं परिपूर्तं चाभवत् । तेषां कर्मण्यता समग्रराष्ट्रे प्रोज्ज्वलतां विधातुमेवासीत् ।

जैनदर्शनस्य सर्वोच्चोन्नायको महावीर: प्रथमं राजकुमारोऽभवत् । स प्रव्रजित एव द्वादशवर्षाणि तपोऽतप्यत केवली च बभूव । केवली तु सर्वज्ञ एव । त्रिंशद्वर्षपर्यन्तं स तत्कालीनस्य समाजस्य समक्षमुच्चदर्शनतत्त्वं प्रतिष्ठापयितुमनिशं प्रयत्नं कृतवान् । स्वानुयायिनां संघं विधाय महावीरः तस्य संचालनाय सुव्यवस्थां प्रस्तुतवान् ।

महावीरस्य व्यक्तित्वेऽपूर्वोत्साहोऽद्भुतशक्तिश्च दृश्येते । आजीवनं स पर्यटन्नेवाहिंसासत्यापरिग्रहादीनां शाश्वतं सन्देशं नगरेषु ग्रामेषु वनवसतिषु च प्रचारितवान् । परवर्तियुगीनानां दर्शनप्रचारकाणां समक्षं सदैव महावीरस्यादर्श: प्रतिष्ठित एव दृश्यते ।

बौद्धदर्शनस्य प्रथमप्रवर्तको गौतमबुद्धो महान् विचारकोऽभवत् । सत्यस्यानुसन्धानाय लौकिकविभूतीनां परित्यागः कर्तव्य एवेति तस्य मतं जीवनविन्यासे सुप्रतिष्ठितम् । स स्वयमेव तपसा योगेन मननेन निदिध्यासनेन च निर्वाणपथं प्राप्तवान् ।

गौतमस्य व्यक्तित्वे ऋजुतायाः परा काष्ठा दृश्यते। नासीत् किंचिदपि रहस्यं तस्य व्यक्तित्वे। तस्योदारता सच्चरित्रं सहानुभूतिश्च सर्वेषां मनसि तं प्रति श्रद्धां जनयामासुः। तस्य व्यक्तित्वेन या क्षान्तिः शान्तिरभिजातीयता च प्रकटिताः तासामेवाकर्षणगुणैः तत्कालीनसमाजः प्रभावितः।

लोकसेवा एव गौतमस्य परमो धर्मः। तस्य दयानिर्झरिणी दुःखार्तानां परितर्पणाय प्रस्रविता बभूव। दार्शनिकतया सहाचार्यत्वस्य संगतिः साधारणजनसमाजस्य नेतृत्वं च गौतमस्य वैशिष्ट्यं प्रदर्शयतः।

## दर्शनसाहित्यम्

दर्शनस्यादिग्रन्था वेदा एवोपलभ्यन्ते। वेदस्तु पारम्पर्येण समागतानां ऋग्यजुःसामाथर्वसंहितानाम्, ऐतरेयशतपथादीनां ब्राह्मणानाम्, आरण्यकानाम्, उपनिषदां च संज्ञा।

परवर्तियुगीने महाभारते बहुविधानां वैदिकावैदिकानां दर्शनसम्प्रदायानां विवरणं प्राप्यते। महाभारतस्य भीष्मपर्वणः भगवद्गीता संगृहीता। भारतीयसंस्कृतौ लोकजीवन-दर्शनस्य यो विशेषप्रभावः परिलक्ष्यते तस्य चमत्कारः प्रायशो गीतामधिकृत्य वर्तते।

षड्दर्शनेषु न्याय एव प्रथमः। तत्र न्यायसूत्रं गौतमप्रणीतमादिग्रन्थः। वात्स्यायनो न्यायभाष्यमिति ख्यातां न्यायसूत्रस्य टीकां रचितवान्। परवर्तियुगे वाचस्पतेः न्यायतात्पर्यटीकायां न्यायस्य सनातनपरम्पराया विशदीकरणं दृश्यते। बहवस्तत्र न्यायग्रन्थकाराः पूर्वग्रन्थानां टीकाकारिणो बभूवुः। अन्ये तु न्यायस्याभिनवप्रवृत्तीनां व्याख्यातारोऽभवन्। ख्रीष्टतः पश्चात् द्वादशे शतके मिथिलायां नव्यन्यायस्य समारम्भोऽभवत्। नव्यन्यायस्य प्रथमो ग्रन्थः तत्त्वचिन्तामणिः प्राप्यते। परवर्तियुगे बहव आचार्याः चिन्तामणिमधिकृत्य टीकाग्रन्थानलिखन्। ख्रीष्टतः पश्चात् सप्तदशशतकेऽन्नंभट्टः प्राच्यन्यायस्य नव्यन्यायस्य चैकमुखीं प्रवृत्तिं विधातुं तर्कसङ्ग्रहं दीपिकां च रचितवान्।

वैशेषिकसूत्राणां रचयिता कणादः कश्यपो वास्ति। पश्चात् प्रशस्त-

पादेन पदार्थधर्मसंग्रहे वैशेषिकदर्शनं प्रतिष्ठापितम्। परवर्तियुगे चन्द्रेण दश-पदार्थशास्त्रं भास्करेण तर्ककौमुदी विश्वनाथेन भाषापरिच्छेदः रचितानि।

सांख्यस्य प्रथमो ग्रन्थ ईश्वरकृष्णस्य सांख्यकारिका लभ्यते। गौडपादेन वाचस्पतिना च कारिकाणां टीकाः रचिताः। परवर्तियुगे ख्रीष्टतः पश्चात् चतुर्दशशतके सांख्यप्रवचनसूत्रं लिखितम्। प्रवचनसूत्रस्य बहवः टीकाकाराः बभूवुः।

योगदर्शनस्यादिग्रन्थः पतञ्जलेर्योगसूत्रमेव। व्यासेन योगसूत्राणां भाष्यं कृतम्। ख्रीष्टतः पश्चात् नवमशतके व्यासभाष्यमधिकृत्य तत्त्ववैशारदीं टीकां रचितवान् वाचस्पतिमिश्रः, भोजस्तु राजमार्तण्डमेकादशशतकेऽरचयत्।

पूर्वमीमांसाया आदिग्रन्थो जैमिनेः मीमांसासूत्रमेव लभ्यते। शबरो मीमांसासूत्रस्य टीकां लिखितवान्। ख्रीष्टतः पश्चात् सप्तमे शतके कुमारिलः पूर्वग्रन्थानधिकृत्य श्लोकवार्तिकं तन्त्रवार्तिकं टुप्टीकां च रचितवान्। परिवर्तियुगे तेषां ग्रन्थानां बह्वयः टीकाः रचिताः।

उपनिषद एव वेदान्तस्य प्रथमग्रन्थाः। ख्रीष्टाब्दतः प्रागेव बादरायणेन व्यासेन वा वेदान्तसूत्रमुपनिषदां ब्रह्मविद्यामधिकृत्य लिखितम्। परवर्ति-युगेऽद्वैतवेदान्तस्य प्रतिष्ठां कुर्वन् शङ्कराचार्यः उपनिषदां गीतायाः वेदान्त-सूत्रस्य च भाष्यं प्रणीतवान्।[१] शङ्करस्यान्यौ ग्रन्थौ विवेकचूडामणिः, उपदेशसाहस्री च वेदान्तपरौ। तत्कालीनोऽन्यः आचार्यः सुरेश्वरः वार्तिकं नैष्कर्म्यसिद्धिं चारचयत्। आनन्दगिरेर्न्यायनिर्णयः समयुगीन एव।

शङ्करस्य वेदान्तसूत्रभाष्यमधिकृत्य पद्मपादेन पंचपादिकायाः वाचस्पतिमिश्रेण भामत्याः प्रणयनं कृतम्। पारम्पर्येणोपर्युक्तग्रन्थानां टीका विविधाचार्यैः लिखिताः। ख्रीष्टतः पश्चात् चतुर्दशशतके माधवाचार्येण पंचदशी जीवन्मुक्तिविवेकश्च रचितौ।

---

१. इमे त्रयो ग्रन्थाः समासतः प्रस्थानत्रयीति ख्याताः। शङ्करात् प्रागेव गौडपादः माण्डूक्यकारिकायाः भर्तृहरिश्च वाक्यपदीयस्य रचनां कृतवन्तौ। इमौ ग्रन्थौ बौद्धदर्शनैः प्रभावितौ दृश्येते।

ख्रीष्टतः पश्चात् द्वादशशतकस्यान्तिमे भागे श्रीहर्षेण खण्डनखण्ड-खाद्यमद्वैतसिद्धान्तानां तार्किकप्रतिष्ठां विधातुं प्रणीतम्। ग्रन्थोऽयं योगाचारबौद्धदर्शनेन प्रभावितो दृश्यते। खण्डनखण्डखाद्यस्य चित्सुखीया टीका चित्सुखेन प्रणीता। तन्मतमेव प्रतिपादयता तेन तत्त्वदीपिका रचिता। परवर्तियुगेऽद्वैतवेदान्तस्य बहवो ग्रन्था: प्रणीता:।[1] योगवासिष्ठस्य अध्यात्मरामायणस्य चाद्वैतसिद्धान्तानां लोकप्रचारार्थं प्रणयनं कृतम्।

विशिष्टाद्वैतस्य प्राथमिकसुप्रतिष्ठा रामानुजेन ब्रह्मसूत्रस्य श्रीभाष्ये कृता। रामानुजस्यापरे वेदान्तपरा ग्रन्था: गीताभाष्यं वेदार्थसंग्रहः वेदान्तसारः वेदान्तदीपश्च सन्ति।

बौद्धदर्शनस्य प्राचीनतमो ग्रन्थोऽभिधर्म इति ख्यात:।[2] अभिधर्मे मूलरूपेण गौतमबुद्धस्य दार्शनिकविचारा: सङ्गृहीता:। परवर्तियुगस्य दार्शनिकविचाराणां प्रथम: संग्रहो मिलिन्दप्रश्न इति ख्यातो नागसेनेन कृत:। ख्रीष्टत: पश्चात् चतुर्थे शतके बुद्धघोषेण विसुद्धिमग्गो रचित:।

परवर्तियुगीनं बौद्धदर्शनस्य साहित्यं प्राय: सम्प्रदायानुसारं विभक्तं दृश्यते। तत्र सर्वास्तिवादिनां सप्त ग्रन्थाः प्रधाना:— कात्यायनीपुत्रस्य ज्ञानप्रस्थानम्, शारिपुत्रस्य संगीतिपर्याय:, वसुमित्रस्य प्रकरणवाद:, देवशर्मण: विज्ञानकाय:, वसुमित्रस्य धातुकायः, यशोमित्रस्य धर्मस्कन्ध:, मौद्गल्यायनस्य प्रज्ञप्तिशास्त्रम्। ज्ञानप्रस्थानस्य टीका महाविभाषेति ख्याता। वसुबन्धो: अभिधर्मकोशो सर्वास्तिवादिनां प्रमुखः ग्रन्थ:।

सौत्रान्तिकसम्प्रदायस्य प्रवर्तक: कुमारलात: कल्पनामण्डितिकायां सौत्रान्तिकसिद्धान्तानां प्रतिष्ठां कृतवान्। तस्य शिष्य: श्रीलाभ:

---

१. तद्यथा रामाचार्यस्य तरङ्गिणी, ब्रह्मानन्दस्य गौडब्रह्मानन्दीयं गुरुचन्द्रिका वा, धर्मराजस्य वेदान्तपरिभाषा, अद्वैतानन्दस्य ब्रह्मविद्याभरणम्, गोविन्दानन्दस्यरत्नप्रभा, सदानन्द वेदान्तसार:, प्रकाशानन्दस्य सिद्धान्त-मुक्तावली, सदानन्दस्याद्वैतब्रह्मसिद्धिः लक्ष्मीधरस्याद्वैतमकरन्दश्च।

२. अभिधर्म इति धम्मसंगणि-विभङ्ग–कथावत्थु–पुग्गलपञ्ञत्ति-धातुकथा-यमक-पट्ठान इति सप्तग्रन्थानां समासत: नाम।

सौत्रान्तिकविभाषां रचितवान्। यशोमित्रोऽभिधर्मस्य स्फुटार्थेति टीकां लिखितवान्।

योगाचारसम्प्रदायस्य बहवो ग्रन्थाः प्राप्ताः। तत्र मैत्रेयनाथस्य महायान-सूत्रालङ्कारः, धर्मधर्मताविभङ्गः, महायानोत्तरतन्त्रम्, मध्यान्तविभङ्गः, अभिसमयालङ्कारकारिकाश्च प्रथमं सन्ति। परवर्तियुगे दिङ्नागरचिताः प्रमाणसमुच्चयवृत्ति-न्यायप्रवेश - हेतुचक्रनिर्णय-प्रमाणशास्त्र-न्यायप्रवेशादयः प्रमुखा ग्रन्थाः।

शून्यवादस्य प्रतिष्ठां नागार्जुनः माध्यमिककारिका-युक्तिषष्टिका-प्रमाण-विध्वंसनोपायकौशल्य-विग्रहव्यावर्तिनी-सुहल्लेख-चतुःस्तवैर्ग्रन्थैः कृतवान्। परवर्तियुगे आर्यदेवचन्द्रकीर्तिशान्तिदेवशान्तरक्षितादयः शून्यवाद विषयकान् बहून् ग्रन्थान् रचितवन्तः।

जैनदर्शनस्यादिग्रन्थाः द्वादशाङ्गानि चतुर्दशपूर्वाश्च बभूवुः। आचार्य-परम्परया तेषां ज्ञानमन्तिमयुगे भद्रबाहुना प्राप्तम्। भद्रबाहोः पश्चात् भागशः एव तेषां ज्ञानमवशिष्टम्। खीष्टाब्दस्य प्रारम्भिकयुगे आचार्य-धरसेनोऽभिनवसाहित्यिकपरम्परायाः प्रतिष्ठां प्राच्यदर्शनानुरूपामेवा-कारयत्। तस्य शिष्यौ भूतबलिः पुष्पदन्तश्च षट्खण्डागम इति ख्यातं सूत्रग्रन्थं रचितवन्तौ। तयोः समकालीनः गुणधरः कसायपाहुडं गाथाबद्धं चकार। कसायपाहुडस्य टीका ६००० श्लोकबद्धा यतिवृषभेण रचिता। उपर्युक्तग्रन्थानां बह्व्यः टीकाः परवर्तियुगे रचिताः।

जैनदर्शनस्य स्वतन्त्रग्रन्थकारः कुन्दकुन्दाचार्यः खीष्टस्य पश्चात् प्रथमशतके समयसार-प्रवचनसार-पंचास्तिकायानां रचनां कृतवान्। तृतीय-शतके उमास्वामिना तत्त्वार्थसूत्रे जैनदर्शनस्य सूक्ष्मविवेचनं कृतम्। तत्त्वार्थसूत्रस्य बह्व्यः टीका वर्तन्ते।

स्वामी समन्तभद्र आप्तमीमांसायां स्याद्वादस्य विवेचनं कृतवान्। अकलङ्कदेवेन जैनन्यायस्य चत्वारो ग्रन्थाः—सिद्धिविनिश्चयः, न्याय-विनिश्चयः, लघीयस्त्रयम्, प्रमाणसंग्रहश्च प्रणीताः। परवर्तियुगे माणिक्य-नन्दी न्यायस्य परीक्षामुखमिति सूत्रग्रन्थं रचितवान्। तस्य टीका

प्रभाचन्द्रेण प्रमेयकमलमार्तण्ड इति नाम्नी रचिता। इमे ग्रन्थाः प्रायशः दिगम्बरसम्प्रदायदर्शनस्य विवेचनं कुर्वन्ति।[१]

श्वेताम्बरसम्प्रदायस्य मूलग्रन्थानां संख्या चतुरशीतिः। तेषु प्रथमं द्वादशाङ्गानि बभूवुः। द्वादशाङ्गेष्वधुना केवलमेकादश एव लभ्यन्ते। अङ्गग्रन्थैः सम्बद्धान्युपाङ्गानि बभूवुः। एषु ग्रन्थेषु जैनदर्शनसिद्धान्ताः विकीर्णा एव दृश्यन्ते। परवर्तियुगे सिद्धसेनस्य न्यायावतारः, हरिभद्रस्य षड्दर्शनसमुच्चयः तथा मेरुतुङ्गस्य षड्दर्शनविचारः सन्ति।

---

१. अपरे च जैनदर्शनग्रन्थाः—गुणभद्रस्यात्मानुशासनम्, अमितचन्द्रस्य तत्त्वार्थसारःपुरुषार्थसिद्धयुपायः, नेमिचन्द्रस्य द्रव्यसंग्रहः, त्रिलोकसारः, देवसूरेः प्रमाणनयतत्त्वालोकालङ्कारः, मल्लिषेणस्य स्याद्वादमंजरी, सकलकीर्तेश्च तत्त्वार्थदीपिकाः दिगम्बरसम्प्रदायपराः सन्ति।

# धार्मिकप्रवृत्तयः

अस्मिन् जगति यत्किञ्चिदपि विद्यते तस्य सर्वोत्तमोपयोगः केन प्रकारेण कर्तव्य इति धर्मशास्त्रस्य प्रथमं शिक्षणम्। धर्मशास्त्रानुसारं मानवजीवनमेकान्तं नास्ति। पूर्वमपि जीवनमासीत्, प्रायशः पश्चादपि जीवनं भविष्यति। अस्यां परिस्थितौ वर्त्तमानजीवने तथा व्यवहर्तव्यं येन भाविजीवनेऽपि सुखं भवेत्। ततो मुक्तिर्नाम मरणानन्तरं सर्वोच्चाभ्युदयः। यदि स्वप्रयत्नैः सा कदाचिन्न लब्धा भवेत्तर्हि येन केन प्रकारेण स्वर्गसुखाय यत्नः करणीयः। अथवा संसारे पुनर्जन्मनि पुनरपि स्वाभ्युदयात्मकपरिस्थितीनां संग्रहणाय वर्त्तमानजीवने उपायः करणीय इति विपश्चितां मतम्। तदधिकृत्य धर्मस्य परिभाषा कृता—यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।

## धर्मस्य परिधिः

भारतीयधर्मानुसारं सृष्टेः रचयिता विद्यते। तत्र सृष्टिविधाने देवासुरमानवपशुपक्षिवृक्षलतानदीसमुद्रसूर्यनक्षत्रादीनि वर्तन्ते। सर्वेषां रक्षा प्रतिष्ठा वा येन प्राकृतिकविधानेन भवति तद् ऋतम्। ऋतमेवाधिदैविको धर्मः। प्रकृतेरङ्गभूतो मानवोऽपि ऋतेन रक्षितः। तद्यथा ऋतेन पारस्परिकपोषणं सम्भवति, तथैव मानवधर्मेण सर्वेषां कल्याणमायोजितम्। तथाहि—

धारणाद्धर्ममित्याहुः धर्मो धारयते प्रजाः॥

महाभारते कर्णपर्वणि ६९ ५९

एष धर्मो महायोगो दानं भूतदया तथा॥
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा।
सनातनस्य धर्मस्य मूलमेतत्सनातनम्॥

महाभारते आश्वमेधिकपर्वणि ९१.३३–३४

अशोकेन धर्मस्य सर्वजनहिताय स्वरूपं प्रतिष्ठापितम्। तदनुसारम्—

'धर्मः साधुः। कियान् तु धर्म इति। अपास्त्रवो बहुकल्याणं दया दानं सत्यं शौचम्'।[१] मनुः धर्मस्वरूपं निर्णीतवान्—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥ २.१२

भारतीयधर्मस्य परिधौ मानवजीवनस्य सर्वासु अवस्थासु कर्तव्याकर्तव्यस्य विवेचनं प्राप्यते। मरणानन्तरमपि सुगतिः केन प्रकारेण भविष्यतीति तत्र द्रष्टव्यम्। जीवनविन्यासस्य विविधपक्षेषु—संस्काराश्रमवर्णव्यवस्थाभोजनपानकलाशिल्पोद्योगादिषु कीदृशी प्रवृत्तिः समीचीनेति धर्मप्रकरणम्। राजनीतिकजीवनमधिकृत्य सुष्ठु भणितं यत् धर्मो राजराजः। लौकिकजीवने त्रिवर्गे धर्मः सर्वोच्चः प्रतिष्ठितः। धर्मानुकूलमेवार्थकामौ भवेतामिति मनुमतम्—

'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ।' ४.१७६

धर्मस्योपर्युक्तपरिधेः निःसीमत्वं परिलक्ष्य महाभारते प्रोक्तम्—

महानयं धर्मपथो बहुशाखश्च भारत। शान्तिपर्वणि १०८.१
न धर्मः परिपाठेन शक्यो भारत वेदितुम्॥ तत्रैव २६०.३

## धर्मस्यापरिहार्यत्वम्

मरणानन्तरं केवलं धर्माधर्मौ पुरुषेण सह गच्छत इति भारतीया धारणा धर्मस्यापरिहार्यत्वं प्रतिष्ठापयति। पुरा भारता इहलोकात् परलोकमधिकतरं महत्त्वपूर्णं मन्यन्ते स्म। ततः समीचीनत्वं व्यासोपदेशस्य—

तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति।
तस्माद्धर्मः सहायश्च सेवितव्यः सदा नृभिः॥
प्राणी धर्मसमायुक्तो गच्छेत्स्वर्गगतिं पराम्॥

अनुशासनपर्वणि १११.१४-१५

धर्मपद्धतौ गच्छन्तो नरा इहलोके ऐश्वर्यं प्राप्नुवन्तु न वा, किन्तु परलोके तेभ्यः स्वर्गीयमैश्वर्यं सुनिश्चितमेव।

---

१. अशोकस्य द्वितीयस्तम्भलेखात्।

## धर्मस्य परिवृत्तिः वैचित्र्यं च

धर्मानुसारं मानवताया अभ्युदयाय बहवः सिद्धान्ताः शाश्वतरूपेण प्रतिष्ठिताः। ते एव धर्मस्य सनातनत्वं द्योतयन्ति, किन्तु धार्मिकविधीनां कर्मकाण्डादीनां च युगे युगे नवताऽपि दृश्यते। तद्यथा—

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते।
द्वापरे यज्ञमेवाहुः दानमेकं कलौ युगे॥ मनुस्मृतौ १.८५-८६

न सर्वे धर्मग्रन्था एकमता दृश्यन्ते। तथाहि—

वेदा विभिन्नाः स्मृतयो विभिन्नाः
नासौ मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः॥

### धर्मसङ्गमः

भारतीयः धर्मः महानद इव बहूनां धर्मधाराणां संगमनेन वैपुल्यमवाप। प्राचीनतमस्यार्यधर्मस्य स्पष्टस्वरूपमृग्वेदे दृश्यते। ततः परमार्येतरधर्माणां संगमात् पौराणिको धर्मः समुत्पन्नः।

**आर्येतरधर्माः**

आर्येतराणां धर्मस्य प्रथमस्वरूपं सिंधुसभ्यताया अवशेषैः परिचीयते। तत्र शिवोपासकाः मूर्तिपूजामकुर्वन्। नागवृक्षपशुजलादीनां पूजा प्रावर्तत। पूजानिमित्तं सम्भवतः बलिविधानमपि प्रचलितमासीत्। शरीरस्य स्वच्छतायै स्नानविधेः लोकप्रियत्वं सातिशयं दृश्यते। पूजाकर्मकाण्डादीनां संगतिः नृत्यवाद्यादिसमारोहैः कृता।

सिन्धुसभ्यतायां मातृरूपेण कस्याश्चन देव्याः पूजा कृता। सा तु प्रकृतिरेवादिशक्तेः प्रतीकं प्रतिभाति। तत्र मातृदेव्या असंख्यमूर्तयो लभ्यन्ते।

वैदिकधर्मे मातृदेव्याः समकक्षाऽदितिः पृथिवी च दृश्येते। पौराणिकधर्मे चण्डी, दुर्गा, भवानी वा मातृदेव्यः पूजनीयाः प्रतिष्ठिताः।

सिन्धुसभ्यतायां सस्योद्भवकारिणीं देवीं जनाः पूजयन्ति स्म। एकस्यां मुद्रायां नारीगर्भात् वृक्षकस्योत्पत्तिरङ्किता दृश्यते। तत् पृथिवीदेव्या अङ्कनं प्रतिभाति। अधुनाऽपि ग्रामदेव्याः पूजा ग्रामेषु सर्वत्र प्रचलिता दृश्यते।

शिवोपासनाय शिवः त्रिमुखोऽपि कल्पितः। शिवो योगी सम्भावितः। स मुद्रासु हिंस्रपशुभिः चित्रकगण्डकमहिषमृगादिभिः परिवृतो दृश्यते। मुद्रासु योगीश्वरः, ऊर्ध्वलिङ्गः (लकुलीशः) विरूपाक्षश्च शिवोऽङ्कितः। शिवलिङ्गान्यपि तत्र प्राप्यन्ते।

सिन्धुसभ्यतायां किन्नराणां कल्पनाऽऽसीदिति विविधपशुमानवानां रुण्डमुण्डयोः वैचित्र्यपूर्णसंयोगेन स्पष्टं दृश्यते।

सिन्धुसभ्यतायामन्त्येष्टिक्रिया प्रचलिताऽऽसीत्। भूगर्भे शवा निधापिताः। तत्र शवैः सह पात्राणि, वस्त्राभूषणानि, प्रसाधनसामग्र्यश्च स्थापितानि। कतिपयशवाः काष्ठपेटिकासु निवेश्य भूगर्भे निगूहिताः। एभिः विधानैः तत्रत्यनिवासिनां पूर्वजान् प्रति श्रद्धा प्रकाशिता भवति।

अन्येऽपि बहव आर्येतरधर्मा बभूवुः। ऋग्वेदानुसारं वृत्र आर्येतराणां जातीनां देवोऽभवत्। तस्मिन्युगे कृष्णो धर्मसंरक्षक एवार्येतरधर्मस्योन्नायकोऽभवत्। असुरेषु दानश्रद्धादीनां विधानं नासीत्। वैदिकयज्ञानां प्रचलनमपि तत्र नाभवत्। ते प्रेतानां परलोकविजयार्थं तेषां शवं सुगन्धितद्रव्यैः, अलङ्कारैः, वस्त्रैश्च प्रसाधयन्ति स्म।[१] महाभारतानुसारं देवासुरराक्षसब्राह्मणादीनां धर्माः विभिन्ना एवाभवन्।[२]

आर्येतरधर्मे पूजायाः प्राधान्यमासीत्। पूजार्थं पशुबलिः पुष्पोपहारश्च प्रचलितौ। शक्तेरावाहनं कृत्वा तस्याः प्रतिष्ठा मूर्तिगृहवृक्षचित्रादिषु प्रतीकमाध्यमेन कृता। पश्चादतिथिरूपेण तस्याः स्वागतं कृतम्। प्रतीकस्य स्नानं तस्योपरि पत्रपुष्पाक्षतानां विकिरणं तस्मै सुस्वादुभोजन-

---

१. छान्दोग्योपनिषदि ८.८.५ २. आदिपर्वणि १५७.७; सभाप० ६८.७२

समर्पणं वस्त्राभूषणादिभिरलंकरणं चन्दनलेपनं सिन्दूरलेपनं च कृतानि। पश्चात् प्रार्थनाध्यानादिभिः भक्तस्य तल्लीनताऽभूत्। द्राविडेषु हनुमतः पूजाविधानं प्रचलितमासीत्। क्वचित् नरबलिरपि देव्याः परितुष्टये कृता।[1]

पौराणिकयुगे यक्षराक्षसभूतपिशाचसर्पवेतालादीनां पूजायाः प्रचलनं दृश्यते।[2] विष्णुपुराणे गोपानां गिरियज्ञः गोयज्ञश्च वैदिकेन्द्रयज्ञस्थानीयौ दृश्येते। तत्र दधिपायसमांसादिभिः पर्वताय बलिरदीयत।[3]

## वैदिकधर्मः

वैदिकधर्मस्य वैशिष्ट्यं यज्ञविधानमेव। तत्र यज्ञैः देवानां परितोषः कृतः। साधारणतः देवाः प्रकृतेः ऐश्वर्यशालिन्यः शक्तयोऽथवा पुराणपुरुषा नेतार इव दृश्यन्ते। सर्वेषामेव तेषां न केवलं व्यावहारिकस्वरूपं समादृतम्, अपि तु तेषामाध्यात्मिकस्वरूपस्य शाश्वतरूपेण प्रतिष्ठा कृता। आध्यात्मिकस्वरूपदर्शनं श्रद्धामपेक्षते। व्यञ्जनयाऽपि क्वचिदाध्यात्मिकस्वरूपस्य ज्ञानं भवति। तद्यथा सूर्यो लौकिकस्वरूपेण जगत् प्रकाशयति, आध्यात्मिकस्वरूपेण च मानवानां बुद्धिं स्फोरयति। आध्यात्मिकं स्वरूपं दिव्यत्वं प्रतिष्ठापयति। भारताः काले काले असंख्यवस्तुषु दिव्यत्वस्य दर्शनं चक्रुः। परिणामतः सर्वेषामेव तेषां देवत्वं प्रतिपादितम्।

देवानामाचारव्यवहारादयः मानवैः ग्रहणीया इति मनीषिणां मतम्। इत्थं धर्मसंस्थाने देवानामादर्शचरितस्य कल्पना महत्त्वपूर्णा वर्तते।

### देवप्रतिष्ठा

देवाः शक्तिशालिनः। ते प्रकृतिशक्तीनां नियन्त्रणं कुर्वन्ति। ते सर्वेषां प्राणिनामधिपतयः। साधारणतः सर्वे देवा लोकोपकारिणः, सत्यपरायणाः, ऋजवश्च सन्ति। ते सच्चरित्राणां जनानां मित्राणि सन्ति,

---

१. घोनसाखजातके ३५३

२. पद्मपुराणे उत्तरखण्डे २८० अध्यायतः

३. विष्णुपुराणे ५.१०.३८–४६

पापान् दण्डयन्ति च। वैदिककल्पनानुसारं देवानां मानवैः सहातिशय-सामीप्यमासीत्। तद्यथाऽग्निं प्रति कविर्निवेदयति—

स नः पितेव सूनवेऽग्ने सूपायनो भव।
सचस्वा नः स्वस्तये॥ ऋग्वेदे १.१.६

अग्निं मन्ये पितरमग्निमापिमग्निं भ्रातरं सदमित्सखायम्।
अग्नेरनीकं बृहतः सपर्यं दिवि शुक्रं यजतं सूर्यस्य॥
तत्रैव १०.७.३

इन्द्रो युद्धस्य देवोऽभवत्। तस्य साहाय्येन युद्धे मानवा विजयमिच्छन्ति स्म। तथा हि—

यस्मान्नृते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते।
यो विश्वस्य प्रतिमानं बभूव योऽच्युतच्युत्स जनास इन्द्रः॥
ऋ० २.१२.६

इन्द्रोऽसुराणां हन्ता प्रसिद्ध एव।

वरुणः सर्वेषां देवानां पोषकोऽभवत्। स ऋतस्य प्रवर्तको बभूव। वरुणो मानवतायाः कल्याणकरः। तथा हि—

उत यो मानुषेष्वा यशश्चक्रे असाम्या। ऋग्वेदे १.२५.१५
इमं मे वरुण श्रुधी हवमद्या च मृलय।
त्वामवस्युरा चके॥ तत्रैव १.२५.१६
त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि।
स यामनि प्रति श्रुधि॥ तत्रैव १.२५.२०
यूयं पात स्वस्तिभिः सदा नः॥ तत्रैव ७.८६.८

अश्विनोः लोकोपकारिता विश्रुता वर्तते। मानवलोके, देवलोके वा यत्र कुत्रचित् साहाय्यस्यावश्यकता भवति तत्राश्विनौ समागतौ दृष्टौ। एतदेव परिलक्ष्य कविनाऽऽख्यातम्—

युवं च्यवानं जरसोऽमुमुक्तं
नि पेदव ऊहथुराशुमश्वम्।

नि रंहसस्तमसः स्पर्तमत्रि
नि जाहुषं शिथिरे धातमन्तः। ऋग्वेदे ७.७१.६

विष्णोर्लोकः सुप्रसिद्ध एव मरणानन्तरमाश्रयः। तत्र देवोपासकानां मानवानां रमणीयजीवनस्य सम्भावना कृता। लोकोपकाराय विष्णोः उरुक्रमत्वं कविभिः प्रशंसितम्। तथाहि—

तदस्य प्रियमभि पाथो अश्यां
नरो यत्र देवयवो मदन्ति।
उरुक्रमस्य स हि बन्धुरित्था
विष्णोः पदे परमे मध्व उत्सः॥ १.१५४.५

अपरं च—एको विममे त्रिभिरित्पदेभिः॥ १.१५४.३

ऐतरेयब्राह्मणानुसारम्—विष्णुः देवानां परमः।[1] देवानां विषये मानवानामीदृशी धारणा मानवताया अभ्युत्थानाय बभूव।

वैदिकयुगेऽधोलिखिताः प्रमुखा देवाः प्रतिष्ठिताः—

स्वर्लोकस्य देवाः—द्यौः, वरुणः, मित्रः, सूर्यः, सविता, विष्णुः, पूषा, अश्विनौ, उषाः, चन्द्रः, रात्रिः।

भुवो लोकस्य देवाः—इन्द्रः, अपां नपात्, वायुः, पर्जन्यः, आपः, रुद्रः, मरुतः।

भूलोकस्य देवाः—अग्निः, सोमः, नद्यः, पृथ्वी, समुद्रः।

लघुदेवाः—ऋभवः,गन्धर्वाः, अप्सरसः, वृक्षः, वास्तोष्पतिः, क्षेत्रपतिः, सीता, युद्धोपकरणानि, पशवः, वनपर्वतादीनामधिष्ठातारः।

कर्तृदेवाः—धाता, विधाता, त्राता, नेता, त्वष्टा।

परवर्तियुगे प्रजापतिः स्रष्टा बभूव। हिरण्यगर्भः सर्वेषां प्राणिनामधिपतिः। अदितिरादित्यानां द्वादशानां माता बन्धनविमुक्तकारिणी देवी वर्तते। अदितेः व्यापकस्वरूपं प्रकल्पितम्। तथा हि—

---

१. ऐ. ब्रा. १.१.१—तदनुसारं वैष्णवधर्मस्य मूलं वैदिकयुगे निदर्शनीयम्।

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥
ऋग्वेदे १.८९.१०

देवाः प्रायशो मानवरूपाः कल्पिताः। तेषां हस्तपादादीनां कल्पना व्यञ्जनया प्रसिद्धा। तथाहि सूर्यस्य रश्मयः तस्य कराः। अग्नेः ज्वाला तस्य जिह्वा। कतिपयदेवानां विशेषगुणा वर्तन्ते। तद्यथा—इन्द्रस्य युद्धकौशलमग्नेः बृहस्पतेश्च पौरोहित्यं सवितुराचार्यत्वं च।

**यज्ञः**

देवानां प्रीत्यर्थं यज्ञमाध्यमेन तेभ्य उपहारप्रदानस्य विधिः प्रचलित आसीत्। यत्किञ्चिदपि मानवो भुनक्ति तदेव देवेभ्योऽपि भोज्यमिति कल्पनाऽऽसीत्। देवेभ्यो दधिघृतान्नादीनि समर्पितानि। सोमो देवानां प्रियपेयं मतम्।

यज्ञाः साधारणतः द्विविधा मताः—नित्याः, नैमित्तिकाश्च। नित्ययज्ञाः गृहस्थानां पंच महायज्ञाः प्राक्कलिताः। नैमित्तिकयज्ञाः पुरोहितानां साहाय्येन बहुविधोद्देश्यानां पूर्त्यर्थं सम्पादिताः। तेषामुद्देश्यानां परिधौ लौकिकाः पारलौकिकाश्च प्रायः सर्वे लाभाः सिद्धयः समागताः। इदमेव यज्ञस्य लोकप्रियत्वस्य प्रधानकारणम्।

**मरणोत्तरविधानम्**

वैदिकयुगे मानवानां मरणानन्तरं पितृरूपेण यमलोकेऽवस्थानं मतम्। यमलोक एव स्वर्गः। तत्र सर्वं सुखकरम्। तथाहि—

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥
ऋग्वेदे ९.१०६.११

स्वर्गे मानवा मर्त्यलोके सम्पादितानां यज्ञानामिष्टापूर्तानां दानादीनां फलं प्राप्नुवन्ति। तत्र पितृकृते पुत्रपौत्रादिभिः प्रदत्तानि वस्तूनि भोग्यानि शाश्वतरूपेण भवन्ति[१]।

१. ऋग्वेदे१०.१४.८

पापानां कृते नरकदुःखमेव प्रकल्पितम्। तथाहि—

इन्द्रासोमा दुष्कृतो वव्रे अन्तरनारम्भणे तमसि प्रविध्यतम्।
यथा नातः पुनरेकश्चनोदयत्तद्वामस्तु सहसे मन्युमच्छवः॥

ऋग्वेदे ७.१०४.२

मरणानन्तरं मानवः स्वकर्मानुरूपं लोकं प्राप्नोति।

वैदिकयुगे शवः प्रायशः दग्धः। क्वचित् शवस्य निखननमपि प्रचलितं दृश्यते।

## उपनिषद्धर्मः

उपनिषद्युगे यज्ञस्य महत्त्वं स्वल्पीकृतं दृश्यते। यज्ञेन स्वर्गप्राप्तिः तदापि सम्मता, किन्तु स्वर्गाच्च्युतिभयं दर्शयित्वाऽमृतपदं मोक्षपदमेव तपसा श्रद्धया च समीहितम्। तद्यथा—

इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति॥

मुण्डकोपनिषदि १.२.१०

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा॥

तत्रैव १.२.११

ब्रह्मचर्येण ब्रह्मनिष्ठता प्राप्येति धर्म उपनिषदाम्। ब्रह्मचर्यस्य परिपालनाय वानप्रस्थसंन्यासयोर्योजनं कृतम्। तत् सोपानस्वरूपं ब्रह्मलोके गमनाय। अस्मै प्रयोजनाय जीवनमेव यज्ञ इति मतम्। तथा हि—पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनं। अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम्। अथ यान्यष्टाचत्वारिंशद्वर्षाणि तृतीयसवनम्।[१]

अतएव ब्रह्म एव ज्ञेयम्। विद्वान् ब्रह्म ज्ञात्वाऽमरो भवति। ब्रह्मज्ञानेन सर्वेभ्यो दुःखेभ्यो मुक्तिर्भवति।[२]

---

१. छान्दोग्ये ३.१६ २. बृहदारण्यके ४.३.१४

ज्ञानमात्रेण ज्ञानिषु कतिपयवैशिष्ट्यानि जायन्ते। तद्यथा—प्राणव्यान-समानादीनां वायूनां दार्शनिकस्वरूपज्ञानेन पुरुषः तेजस्वी, अन्नादः, श्रीमान्, यशस्वी, ब्रह्मवर्चस्वी, कीर्तिमान्, ओजस्वी, सुन्दरः, प्रख्यातश्च भवति।[१] अनेन विधानेन मानवेषूदात्तप्रवृत्तीनां सम्भावनाऽवश्यं दृश्यते।

छान्दोग्यानुसारं हृदयमेव स्वर्गः। तथा हि—स वा एष आत्मा हृदि। तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति। तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा.।[२]

सर्वसाधारणेभ्यो धर्मस्तदासीत्—ऋतं, सत्यं, तपः, दमः शमः, अग्नि-होत्रं, स्वाध्यायप्रवचनादीनि। तदा हि मनीषिणः कामनाऽऽसीत्—यशो-जनेऽसानि। श्रेयावस्यसोऽसानि। तं त्वा भग प्रविशानि। स मा भग प्रविश। धातः प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व।[३]

उपनिषत्सु जीवनविन्यासस्य शुद्धिः निदर्शिता। तद्यथा भोजनपाना-दीनां शुद्धये प्रकल्पितं यत् मनःप्राणवाचां स्वरूपं क्रमशः अन्नजलतेजोभिः निष्पन्नम्।[४] अपरं च—आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः[५]। मानवस्य भावनायाः संस्कारः वस्तूनां दिव्यत्वं प्रतिपाद्य समीचीनविधिना कृतः। तद्यथा—

यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश।
य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमः॥ श्वेताश्वतरे २.१७

मनोभावोऽयं विश्वं प्रति सौहार्दं जनयति।

## महाभारतीयो धर्मः

महाभारतयुगे धर्मस्य किञ्चिदभिनवस्वरूपं परिलक्ष्यते। महाभारते वैदिकयज्ञस्य समर्थनं प्राप्यते, किन्तु यज्ञादधिकं महत्त्वं तेषां विधानानां मतं

---

१. छान्दोग्ये ३.१३  २. छान्दोग्ये ८.३  ३. तैत्तिरीयशिक्षावल्ल्याम् ६.१
४. तैत्तिरीयशिक्षावल्ल्याम् ४.३  ५. छान्दोग्ये ६.५.१-४  ६. छान्दोग्ये ७.२६.२

यैः समाजस्याभ्युदयः सम्भावितः। शान्तिपर्वणि स्पष्टं प्रचारितम्—धर्मेण विधृताः प्रजाः।[१]

**अभिनवप्रवृत्तयः**

महाभारते पापस्यापाकरणाय पुण्यं समर्थितम्। पुण्यं तु तपसा यज्ञेन च सम्भावितम्। यज्ञस्तु मनसः वाचः कर्मणश्च कल्पितः।[२] तीर्थयात्रायाः महत्त्वमपि यज्ञादधिकं मतम्। साधारणतः यज्ञसम्पादनाय विपुलसामग्री-सङ्ग्रहोऽपेक्षितः। दरिद्रेभ्यो यज्ञस्य कल्पनाऽपि नासीत्। तीर्थयात्रा दरिद्रेभ्योऽपि सुलभाऽऽसीत्। सर्वेभ्यो वर्णेभ्यः आश्रमेभ्यश्च तीर्थयात्रा समीचीना विहिता। भारतस्य सर्वेषु भागेषु तीर्थानि प्रकल्पितानि।

भावस्य नैर्मल्यं धार्मिकदृष्ट्या सविशेषं मतम्। तपस्तु मनसा वाचा बुद्ध्या वा पापस्याकरणम्; न तु शरीरशोषणं तपः।[३]

**देवप्रतिष्ठा**

देवा महाभारतेऽपि मानवतायाः सान्निध्ये प्रतिभान्ति। तपसा सदेहं स्वर्गगमनं साधारणमभवत्। अर्जुनो देवेभ्योऽस्त्रशस्त्रादिभिः सह नृत्य-कलामपि शिक्षितवान्। दमयन्त्याः स्वयंवरे देवाः समागताः। बृहस्पतिः देवानां मानवानां च सर्वेषां पुरोहितोऽभवत्।[४] नारदः स्वर्गे मर्त्यलोके च निर्बाधरूपेण पर्यटनं चकार। महादेवोऽपि स्वयमेवार्जुनेन सह युद्धं कुर्वन् दृश्यते। स्वर्गो हिमालयेऽवस्थितो मतः।[५]

देवानां व्यक्तित्वेन भारतस्य विविधवर्गीया निवासिनः सामाजिक-संस्थाने सूत्रिता दृश्यन्ते। तद्यथा शिवोपासका एकत्र देवासुरनागपिशाच-

---

१. शान्तिपर्वणि १०६.११

२. उद्योगपर्वणि ४३ अध्यायतः। हिंसात्मकयज्ञस्य विरोधः कृतः। बीजयज्ञः, चिन्तायज्ञः, स्पर्शयज्ञः, ध्यानयज्ञः—सर्वे पशुहिंसात्मकयज्ञादुच्चतराः मताः। आश्वमेधिकपर्वणि ९१,९२ अध्यायतः।

३. वनपर्वणि १९९.९४–९७

४. आश्वमेधिकपर्वणि ५ अध्याये।

५. आदिपर्वणि ११६.८; वनपर्वणि १५६.२२; ११५.१६ शान्तिपर्वणि ३२८.६

यातुधानादयः दृश्यन्ते।[१] तथैव विष्णोरुपासका मनुष्यकिन्नरयक्षगन्धर्व-राक्षसदेवदानवादयः सन्ति। विष्णुः सर्वेषामधीश्वरः।[२]

देवानां मानवरूपेणावतारः विशेषतो महाभारतयुगस्य कल्पना प्रतिभाति। रामकृष्णौ मानवतायाः रक्षायै सर्वेषामभ्युदयाय च कार्यपरायणौ दृश्येते। तावीश्वरस्य प्रतिनिधी मतौ सर्वत्र पूजितौ च।

महाभारतयुगे काली, दुर्गा, त्रिभुवनेश्वरी वा नारायणस्यातिशयप्रिया देवी प्रतिष्ठापिता। सा विषमपरिस्थितौ दुर्गे वा ग्रस्तान् जनान् सर्वत्र रक्षतीति धारणाऽऽसीत्। स्तोत्रैः तस्याः स्मरणं कृतम्।

## देवेतराणां प्रतिष्ठा

महाभारतयुगे देवेतराणां गन्धर्वनागयक्षराक्षसभूतादीनां सार्वजनिक-पूजाविधानं प्रचलितं दृश्यते।[३] अनेन प्रकारेणार्येतराणां जातीनामार्य-जातिभिः सह सङ्गमो योजितः। भूतयज्ञेऽपि यक्षराक्षसादीनां परितोषः कल्पितः।

## सामाजिकसंश्लिष्टता

महाभारतेऽन्नदानस्य जलदानस्य च महिमा प्रतिष्ठापितः। इष्टापूर्तस्य वैशिष्ट्यं शाश्वतरूपेण प्रतिष्ठितं बभूव।[४] अपरं च सर्वेषां वर्णाश्रमधर्मा-नुकूलं कर्तव्यपालनमावश्यकं मतम्। स्वकर्म घृणितमपि न त्याज्यमिति विधानं सामाजिकसुव्यवस्थायै बभूव।

मानवताया अभ्युदयार्थं समीचीनानि विधानानि कृतानि। तद्यथा—भीतस्य शरणार्थिनश्च रक्षामकुर्वतः पुरुषस्य देशे वर्षा यथाकालं न भवति। रक्ष्यस्य पुरुषस्य रक्षामकुर्वतः सन्ततिः जन्मकाले म्रियते, तस्य पितरः पितृलोके प्रतिष्ठिता न भवन्ति च। स स्वयं स्वर्गाद् भ्रश्यति।[५] मित्र-द्रोहिणः कृतघ्नाश्च घोरनरकदुःखमुपयान्ति।[६]

---

१. आश्वमेधिकपर्वणि ८.३–६ २. तत्रैव ४३.१४

३. अनुशासनपर्वणि ९७ अध्यायतः ४ अनुशासनपर्वणि ६५.३–४६

५. वनपर्वणि १९६.२०–२२ ६. शान्तिपर्वणि १७३.२१

**कौटुम्बिकसुश्लिष्टता**

कौटुम्बिकसुश्लिष्टतायाः सर्वोच्चादर्शो महाभारते स्थाने स्थाने प्रस्तुतः। तथा हि—

मातापित्रोर्गुरूणां च पूजा बहुमता मम।
इह युक्तो नरो लोकान्यशश्च महदश्नुते॥ शान्तिपर्वणि १०८.३
येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः।
प्रीणाति मातरं येन पृथिवी तेन पूजिता॥ अनुशासनपर्वणि ७.२५

**पापनिवृत्तिः**

पापान्निवृत्तिः तपसा, कर्मणा, दानेन च मता। पापादीदृशी निवृत्तिः तेषां सम्भाविता ये भविष्ये पापं न कुर्वन्ति स्म। आत्मशोधनाय यज्ञादृते व्रतोपवासदानादीनां विधानं प्रचलितम्। पशुपक्षिणां हत्यायाः वृक्षच्छेदनस्य च पापान्निवृत्तये त्रिदिवसान् वायुभक्षणं स्वकुकर्मप्रकाशनं च विहिते।[१] राजा चेद्दण्डनीयान् पुरुषान् न दण्डयति तर्हि तस्य शुद्धये अहर्निशमुपवासः प्रकल्पितः।

**मरणोत्तरविधानम्**

महाभारतानुसारं पुण्येन स्वर्गो लभ्यः। मरणानन्तरं स्वकर्मानुसारं त्रिविधा गतिः सम्भाविता—मनुष्यजन्म, स्वर्गवासः, तिर्यग्योनिश्च। पशुयोनिः कामक्रोधादिभिः सम्भाविता। ज्ञानेन ब्रह्मलोकप्राप्तिः मता। तत्र ब्रह्मणि लय एव गतिः। तपसा स्वर्गगमनं दानेन भोगप्राप्तिः ज्ञानेन मोक्षः तीर्थस्नानेन पापक्षयश्च सम्भवन्ति। शुभकर्मणा देवत्वमशुभैश्च नारकीय-जीवनं शुभाशुभैः पशुपक्षियोनिगमनं सर्वसम्मतं दृश्यते।

**कर्मफलम्**

पूर्वजीवनस्य कर्मफलानि परजन्मनि यथाकालं लभ्यानि। कर्म तु बीज-मिव वर्त्तमानजीवनेऽङ्कुरितं वृक्षञ्च भूत्वा फलदं जायते, अन्यथा चिरात् परजन्मनि फलदं भवति। महाभारते स्वर्गनरकदायिनां कर्मणां गणना स्पष्टं

---

१. शान्तिपर्वणि ३५ अध्यायतः

कृता ।[1] अतिशयपुण्यकारिणः सदेहा एव देवैः स्वर्गं नीयन्ते। युधिष्ठिर इन्द्रेण सह स्वर्गमगच्छत् ।

धर्मानुसन्धानम्

प्रथमं तावद् यज्ञस्वरूपस्य निरूपणमासीत् । तथा हि—

यज्ञवित् तु सुदुर्लभः ॥ ४
नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा ॥
पूजा स्याद्देवतानां हि यथाशास्त्रनिदर्शनम् । ८—९
स्वमेव चार्थं कुर्वाणा यज्ञं चक्रुः पुनर्द्विजाः ।
परिनिष्ठितकर्माणः प्रजानुग्रहकाम्यया ॥ २७-२८
आज्येन पयसा दध्ना पूर्णाहुत्या विशेषतः ।
वालैः शृङ्गेण पादेन सम्भरत्येव गौर्मखम् ॥ ४०
जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव ।
एतानीदृशकान् धर्मानाचरन्निह जाजले ॥
कारणैर्धर्ममन्विच्छन् स लोकानाप्नुते शुभान् ॥[2] ४३-४४
विष्णुमेवाभिजानन्ति सर्वयज्ञेषु ब्राह्मणाः ॥
पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम् ।

शान्तिपर्वणि २६५.१०-११

गोब्राह्मणानां पूजा तु महाभारतयुगेऽतिशयफलप्रदा मता ।[3] शरीरस्य सौभगाय ज्ञानप्राप्तये च चान्द्रव्रतविधानमक्रियत ।[4]

इन्द्रस्य महाभारतयुगे माहात्म्यं क्षीणं दृश्यते । स तु परदारगामीति निरूपितः । महर्षिणा विपुलेन तस्य भर्त्सना कृता—देवा मनुष्याश्च तव पूजां न चिरं करिष्यन्ति ।[5] विपुलस्य वाक्यमिदं सत्यमभवत् ।

---

१. स्वर्गारोहणपर्वणि ३.१३.१४
२ तत्रैव २६३ अध्यायतः
३. वनपर्वणि २००.६७
४. अनुशासनपर्वणि ४१.२०
५. आश्वमेधिकपर्वणि ८.३— ६

**वरशापौ**

महाभारतयुगे वरशापयोः प्रचलनं सातिशयं दृश्यते। देवगन्धर्वाप्सरो-महर्षिब्राह्मणतपस्विजनाः पतिव्रताः स्त्रियश्च वरशापयोः प्रदाने समर्थाः मताः। तपसा भक्त्या च वरोऽनादरेण च प्रतिष्ठितानां शापो लब्धः। इहलोकेऽपि देवानां वराः सद्यः फलदायिनो दृष्टाः।

## मानवधर्मः

मनुना प्रणीतो मानवधर्मो वर्णाश्रमव्यवस्थानुबद्धो दृश्यते। अपरं च— मनुना देशधर्मः, कुलधर्मः, पाषण्डधर्मः, गणधर्मश्च निर्दिष्टाः।[१] धर्मस्य सनातनस्वरूपं मानवधर्मेणायोजितं दृश्यते।

**सामाजिकसुश्लिष्टता**

उपर्युक्तधर्मविधानैः मनुः सामाजिकसुश्लिष्टतां प्रत्यपादयत्। तथा हि— वृद्धानां सेवया विद्या, आयुः, यशः, बलं च वर्धन्ते। तत्राभिवादन-प्रत्यभिवादन-कुशलक्षेमप्रश्न-परस्परसम्बोधन-मार्गदान-ज्यैष्ठ्यादिसम्बन्धिनो नियमा निदर्शिताः।[२] परोपकारस्तु सद्यःफलप्रदो निरूपितः। तथा हि—

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्॥ ४.२२९

**कौटुम्बिकसुश्लिष्टता**

कुटुम्बे न कस्याऽपि निरादरः कर्तव्य इति मनुना प्रतिपादितम्। तत्र केनापि सह विवादोऽपि वर्जितः। एवं कुर्वन् जनः पापात्प्रमुच्यते।[३] माता-पित्रोराचार्यस्य च प्रियं सेवां च कर्तुं विधानमुक्त्वा मनुः प्रोक्तवान्—

आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः।
माता पृथिव्या मूर्तिस्तु भ्राता स्वो मूर्तिरात्मनः॥ २.२२६
तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते॥ २.२२८

---

१. मनुस्मृतौ १.११८ २. तत्रैव २.१२२—१३८
३. तत्रैव ४.१८०.१८१

त एव हि त्रयो लोकास्त एव त्रय आश्रमाः।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः॥ २.२३०
सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः।
अनादृतास्तु यस्यैते सर्वास्तस्याऽफलाः क्रियाः॥ २.२३४

मनुना स्पष्टं निर्दिष्टम्—यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। स कुटुम्बे वधूनां कन्यकानां च सुशोभनं स्थानं प्रतिष्ठापितवान्।[1]

### यज्ञविधानम्

देवयज्ञप्रकरणे मनुना अग्नि-सोम-विश्वेदेव-धन्वन्तरि-कुहू-द्यावा-पृथिव्यनुमति-देवताभ्यो गृह्याग्नौ हवनं विहितम्। इन्द्रवरुणादिभ्यो बलिविधानमक्रियत। लक्ष्मीभद्रकालीवनस्पतिवास्तुपतिभ्यो बलिसमर्पणं समीहितम्। सर्वेषां चराचराणां दृश्यादृश्यानां च कृते भरण-पोषणयोजनं मनुना बलिवैश्वदेवविधानेन कृतम्।[2]

### स्वर्गनरकौ

एकविंशतिनरकाः राज्ञो दानस्य ग्रहीतुरेव निर्दिष्टाः। तेषु तामिस्रान्धतामिस्रमहारौरवमहावीचिसम्प्रतापनलोहशंक्वसिपत्रवनादयः प्रमुखाः।[3] विविधैः दानैः रमणीयानां स्वर्गलोकानां प्राप्तिः सम्भाविता।[4]

### व्यावहारिकसौष्ठवम्

मनुः मानवसमाजमभ्युत्थानशीलं कर्त्तुमियेष। इदमुद्दिश्य मनुकृतानि विधानानि द्रष्टव्यानि। तथा हि—ब्राह्मे मुहूर्ते उत्तिष्ठेत्। आमरणं धनाय यतितव्यम्। धनं दुर्लभं नास्ति। अपरिचितेन सह यात्रां न कुर्यात्। पवित्रस्थानसमीपं कचरं न कुर्यात्। शुष्कवैरविवादौ न कुर्यात्। दोषान् प्रति कदाप्याक्षेपं न कुर्यात्। द्वेषदम्भमानक्रोधकौर्याणि परित्याज्यानि।

---

१. मनुस्मृतौ ३.५१—६२ २. तत्रैव ३.८४—६२
३. तत्रव ४.८७-६० ४. तत्रैव ४.२२६—२३३

शरीराङ्गानि चपलानि न विधेयानि। कुलपद्धतिं न त्यजेत्। लघुजनानां तिरस्कारमुपेक्षेत। सज्जनानां मध्ये शुद्धः परिचयो दातव्यः।[1]

**स्वातन्त्र्यप्रेम**

मनुर्धार्मिकदृष्ट्या स्वातन्त्र्यप्रेमादिशति। तद्यथा—

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः॥
यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत्॥ ४.१६०–१६१

# पौराणिको धर्मः

पौराणिकधर्मस्य प्रवृत्तिः द्विविधा दृश्यते – सार्वजनीना साम्प्रदायिका च। प्रथमं सार्वजनीनाः प्रवृत्तयो ग्राह्याः।

## अनुष्ठानानि मान्यताश्च

**भक्तिः**

पौराणिकधर्मे भक्तेः प्राधान्यमासीत्। भक्तिस्तु त्रिविधा मता—मानसी, वाचिकी कायिकी च। वेदार्थविमर्शो ध्यानधारणापूर्वकं मानसभक्तिः। मन्त्रजपवेदपाठादयो वाचिकभक्तिः। व्रतोपवासादयः कायिकभक्तिः।[2] भक्तेरन्यान्यपि त्रीणि स्वरूपाणि—लौकिकी, वैदिकी, आध्यात्मिकी च। घृतदुग्धरत्नदीपचंदनमालाधूपसुवर्णाहारनृत्यसंगीतवाद्यभोज्यादिभिः पूजा लौकिकभक्तिः। वैदिकमन्त्रैः जपो यज्ञो वेदादीनां स्वाध्यायश्च वैदिकभक्तिः। आध्यात्मिकभक्तिर्द्विविधा—साङ्ख्यजा, योगजा च। प्रकृति-पुरुषयोर्विवेचनं साङ्ख्यजभक्तिः। योगाभ्यासपरं ध्यानं योगजभक्तिः।[3] उद्देश्यमधिकृत्य भक्तिः त्रिविधा—सात्त्विकी, राजसी तामसी च। सात्त्विकी

---

१. मनुस्मृतौ ४.६२–१५२, १७४, १८६–१६१, २१८, २५५

२—३. पद्मपुराणे सृष्टिखण्डे १५ अध्यायतः

भक्तिर्मोक्षेच्छया भवति। राजसी भक्तिर्विषयाणां प्राप्तये भवति। अहङ्कारार्थमाडम्बराय वेर्ष्यया समुत्थिता तामसी भक्तिः।[१]

भगवतः परितोषाय वैरमपि साधनं मतम्। तथा हि भागवतानुसारम्—

यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात्।
न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥७.१.२६

**व्रतानि**

पौराणिकयुगे व्रतविधेर्विस्तारः सातिशयो दृश्यते। तद्यथा भीमद्वादशीव्रते—उपवासः, विष्णुपूजनं, कृष्णमहादेवगणेशादीनां गंधपुष्पधूपादिभिः पूजनं, मस्तके कलशोत्पतज्जलधाराधारणं हवनं रुद्राध्यायपाठः, विष्णुसामगायनं च समन्वितानि। कतिपयव्रतेषु विशिष्टजीवनविन्यासविधिः सम्भावितः। तद्यथा—अहिंसाव्रते मांसभोजनं परित्यक्तम्। प्रीतिव्रते आषाढमासादारभ्य चतुर्मासं तैलाभ्यंजनं न कृतम्।[२]

व्रतानां बहुविधोपयोगिता सम्भाविता। तथा हि—आदित्यशयनव्रतेन पापानि प्रनष्टानि। तस्य कीर्तनमात्रेण माहात्म्यश्रवणेन चेन्द्रस्य प्रियो भवति। चन्द्रव्रतेन सौन्दर्यमारोग्यं च लभ्येते। चन्द्रमसो नामकीर्तनेनोत्तमा बुद्धिर्जायते, विष्णुलोके स्थानं च प्राप्यते।[३]

व्रतानामुपर्युक्तवर्णनेन स्पष्टं प्रतिभाति यत् पौराणिकयुगे यज्ञानां स्थानं व्रतैरंशतोऽवश्यमेव गृहीतम्। यतस्तेषामनुष्ठानेन बहुविधा ऐहलौकिकाः पारलौकिकाश्चाभ्युदयाः सम्भाविताः। तेषां विधानं प्रायशः सर्वेभ्यो वर्णेभ्यो वर्गेभ्यश्चाक्रियत।

**जपः**

पौराणिकयुगे जपस्य महिमा संवर्धितः। तद्यथा—गायत्रीजपे आपादमस्तकं शरीरस्य चतुर्विंशतिस्थाने गायत्रीमन्त्रस्य प्रत्येकाक्षरस्य न्यासेन

---

१. पद्मपु० उत्तरखण्डे १२६ अध्यायतः। २. पद्मपुराणे सृष्टिखण्डे २० अध्यायतः। तत्रैवान्यव्रतानि—रुद्रनीलगौरीशिवसौम्यसौभाग्यसारस्वतसामवीरसूर्यविष्णुशीलदीप्तिदृढब्रह्मकल्पवृक्षधनप्रदसुगतभानुवैनायकसौरत्र्यम्बकादीनि वर्णितानि। ३. तत्रैव २४ अध्यायतः।

ब्रह्मलोकस्य प्राप्तेः सम्भावना मता। गायत्रीजपेन ब्रह्मपदप्राप्तिरमन्यत। बह्वो मन्त्रा जपाय निर्दिष्टाः। तद्यथा—यजुर्मन्त्रः, विष्णुमन्त्रः, माहेश्वरमहामन्त्रः, देवीमन्त्रः, सूर्यमन्त्रः, गणेशमन्त्रः।[1] जपेन पापविनाशनं प्रकल्पितम्। सूर्यमन्त्रजपेन सन्तानविद्याधनादीनां कामना पूरिता।[2] अन्ये जपमन्त्राः गङ्गागीतारामादिविषयकाः। तथा हि राममन्त्रः—

रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः॥[3]

## दिव्यसत्तानां पूजा

प्रथमं तावद् वृक्षपूजा। स्नानस्य पश्चात् पिप्पलवृक्षस्पर्शेन सर्वेभ्यः पापेभ्यो मुक्तिः सम्भाविता। अश्वत्थवृक्षदर्शनेन पापनाशः, स्पर्शेन लक्ष्मी-प्राप्तिः, परिक्रमयाऽऽयुर्वर्धनम्, हविष्यदुग्धनैवेद्यपुष्पधूपदीपादीनामर्पणेन स्वर्गे प्रतिष्ठा च नियतानि। आमलकं परितः पंचाशदधिकत्रिशतहस्तायाम-भूमिः कुरुक्षेत्रवत् समादृता। तुलसी स्वयं विष्णुनाऽऽरोपितेति मतम्। तस्याः सेवया गुरुब्राह्मणदेवतीर्थादीनां सेवनमनायासेन भवतीति धारणाऽऽसीत्।[4]

देवालयेषु दीपदानेन देवमूर्तिभ्यो वस्त्रदानेन धार्मिकभवनानां निर्माणा-लङ्करणनवीकरणस्वच्छीकरणैश्च बहुविधानां लौकिकपारलौकिकाना-मभ्युदयानां समुत्पत्तिः सम्भाविता। देवमूर्तीनां प्रतिष्ठाया अतिशय-महत्त्वं मतम्।[5]

## गोब्राह्मणपूजा

पुराणानुसारं वेदाग्निगोब्राह्मणेभ्यो जगतः प्रादुर्भावोऽभवत्। गौः सर्वेषां देवानां प्रतीकरूपेण सम्मानिता। तस्या विविधाङ्गेषु विविधदेवानां वासः प्रकल्पितः। तद्यथा मुखे वेदः, शृङ्गयोः शङ्करविष्णू च। गवां प्रणामपूर्वकं

---

१–२. पद्मपुराणे सृष्टिखण्डस्य ४३ अध्यायतः।

३. विस्तृतविवरणाय पद्मपुराणस्योत्तरखण्डे २८१ अध्यायो द्रष्टव्यः।

४–५. पद्मपुराणे सृष्टिखण्डे ५१—५६ अध्यायतः

प्रदक्षिणा, प्रातःकाले स्पर्शः, गोमन्त्रजपः, गोधूलिस्नानं गोदानं च स्वर्ग-मुक्तिपापनिवृत्त्यर्थं च मतानि।[१]

ब्राह्मणस्तु देवानामपि देवोऽभिमतः। स धर्ममूर्तिः, मोक्षप्रदाता च। ब्राह्मणस्य परितोषेण विष्णोः परितुष्टिः मता। शरीरे तस्य विष्णुवासो मतः। ब्राह्मणपूजनेन आयुर्यशोविद्याधनादीनां वृद्धिः सम्भाविता। इयं प्रतिष्ठा केवलमाचारपरायणेभ्यः सीमिता।[२]

**नदीसेवनम्**

नदीनां पुण्यप्रभावः प्रतिष्ठितः। तासु गङ्गा सर्वोत्तमा मता। गङ्गायाः स्नानं तस्यास्तटे पितृभ्यः पिण्डदानं तर्पणं च गङ्गाजलदर्शनं गङ्गातटे वासः गङ्गाया नामकीर्तनं जले प्राणविसर्जनं वायुसेवनं तस्यामस्थिविसर्जनम् सर्वाण्येव स्वर्गाय, मुक्तये, पापनिवृत्तये वा बभूवुः। गंगासेवनेन मानवेषू-दात्तप्रवृत्तीनामुदयः सम्भावितः।[३] अपरा नद्यः—गण्डकी, वेत्रवती, साभ्रमती च धार्मिकदृष्ट्या प्रतिष्ठिता दृश्यन्ते।

**तीर्थानि**

तीर्थानां सङ्ख्या पौराणिकयुगे वर्धिता। सर्वा नद्यः सर्वे पर्वताः जला-शयाश्च तीर्थमेव। सर्वेषां तीर्थानां देवो विष्णुः। यज्ञभूमिः, श्राद्धभूमिः, यज्ञः, अग्निहोत्रम्, स्वाध्यायमन्दिरम्, गोशाला, सोमयाजिनो ब्राह्मणस्यावासः, पवित्रोपवनं, पिप्पलपर्कटीवटवृक्षाः, मातापित्रोः स्थानम्, पुराणपाठस्थानम्, आचार्यकुलम्, सतीनां गृहाणि, सुयोग्यपुत्रस्य स्थानम्—सर्वाण्येव तीर्थानि सम्मतानि। तीर्थेषु वासः, स्नानं दानं च पुण्यप्रदानि मतानि।[४] भागवते विद्वांसोऽपि तीर्थानि मतानि। तथा हि—

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः॥

---

१. पद्मपुराणे सृष्टिखण्डे ४५ अध्यायतः २. तत्रैव ४३ अध्यायतः।
३. पद्मपुराणे सृष्टिखण्डे ६० अध्यायतः।
४. तत्रैव भूमिखण्डे ३९ अध्यायतः।

नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ।
उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ।।

१०.८४.११-१२

## दानम्

सत्पात्रेभ्यो दानेन विष्णुरपि प्रसन्नो भवति। प्रसन्नो भूत्वा स दातुः कामनां पूरयतीति धारणाऽऽसीत्। दानप्रभावेण बुद्धिशक्तिधनगुणादीनामभ्युदयो मतः। अदाता रोगी भवति। सुखस्य स्वर्गमोक्षयोश्च प्राप्तिः दानेन सम्भाविता। तीर्थेषु यज्ञेषु च दानस्य महाफलं मतम्।[1] अन्नदानं सर्वश्रेष्ठं मतम्। अन्नमेवामृतमिति धारणातोऽन्नदानं प्राणदानम्।[2] पद्मपुराणानुसारं दानभावं विष्णुः सत्यं करोति—

'यादृशेनापि भावेन मामुद्दिश्य ददाति यः।
तादृशं तस्य वै भावं सत्यमेव करोम्यहम्।। इति विष्णुवचनम्।

## मालाधारणम्

धार्मिकविधिषु रुद्राक्षमालाधारणमावश्यकं मतम्। रुद्राक्षमालास्पर्शेन स्वर्गसुखं तस्य धारणेन मोक्षश्च सम्भाविते।[3] तुलसीमालाया वैष्णवधर्मे विशेषमहत्त्वं प्रकल्पितम्।[4]

## पुराणकथाः

पुराणकथानां श्रवणं वैदिककालतः प्रचलितमासीत्। पौराणिकयुगे तेषां श्रवणेन पापेभ्यो निवृत्तिः, वैभवानां प्राप्तिः, गतिः, आरोग्यम्, प्रतिदिनं स्वातन्त्र्यं च सम्भावितानि।[5] गीताकथा तु विष्णुमयी मता। तस्याः श्लोकपादाभ्यासेनापि मुक्तिः प्राप्ता भवतीति धारणाऽऽसीत्।[6]

---

१. पद्म० सृष्टिख० ३९-४० अध्यायतः। २. तत्रैव ९४ अध्यायतः।
३. पद्मपुराणे सृष्टिखण्डे ५८ अध्यायतः।
४. तत्रैव पातालखण्डे ७९ अध्यायतः।
५. पद्मपुराणे पातालखण्डे रामकथोपसंहारप्रसङ्गात्।
६. तत्रैवोत्तरखण्डे १७१ अध्यायतः।

श्रीमद्भागवतं विष्णोः साक्षाद्वाङ्मयी मूर्तिरेवाभिमतम्। तस्य सप्ताह-श्रवणेन सर्वाणि पापानि प्रनष्टानि सम्भावितानि। भागवतस्य श्लोकार्ध-स्यापि नित्यपाठेन राजसूयाश्वमेधयोः फलं प्रकल्पितम्। अन्येषामपि पुराणानां प्रायस्तादृशं महत्त्वं निदर्शितम्।[1] तथा हि भागवते ध्रुवचरित-मधिकृत्य प्रोक्तम्—

धन्यं यशस्यमायुष्यं पुण्यं स्वस्त्ययनं महत्।
स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्यमघमर्षणम्॥ ४.१२.४५
श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः।
नेच्छंस्तत्रात्मनाऽऽत्मानं सन्तुष्ट इति सिध्यति॥ ४.१२ ५०

ईदृशी मान्यता कथासाहित्यस्याद्यावधिलोकप्रियतायाः प्रधानकारणम्।

## देवप्रतिष्ठा

### त्रिदेवाः

पौराणिकयुगे ब्रह्मा, विष्णुः, महादेवश्च सर्वश्रेष्ठा त्रिदेवा मताः। ते सृष्टेरुद्भवस्य पालनस्य प्रलयस्य चादिकारणभूता एव तथा प्रतिष्ठिताः। त्रिष्वपि मोक्षप्रदानस्य शक्तिर्विद्यते। इदं तेषां वैशिष्ट्यम्।

त्रिदेवानामेकत्वं मतम्। तथा हि विष्णुपुराणानुसारं भगवान् ब्रह्मरूपेण विश्वं रचयति, विष्णुरूपेण पालयति, शिवरूपेण संहारयति च। वायुपुराणे शिवः विष्णुं प्रति प्रोक्तवान्—सुकृतिनः तव जपं कृत्वा मयि लीना भवन्ति। त्वं प्रकृतिः, अहं पुरुषः। त्वं मेऽर्धशरीरं तथैवाहं तवार्धशरीरम्। अहं तव हृदये त्वं च मम हृदये स्थितौ।[2] भागवतेऽपि तेषामेकत्वं प्रतिपादितम्। तथा हि—

तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि।
ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति॥ ४.७.५२
त्रयाणामेकभावानां यो न पश्यति वै भिदाम्।
सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति॥ ४.७.५४

---

१. पद्म० उत्तरख० १६० अध्यायतः। २. वायुपुराणे २५.११-३०

पुराणेषु त्रयाणां देवानां परस्परं सौहार्दमेकत्वं च प्रतिपादिते। सुष्ठु मतं पद्मपुराणस्येदृशम्—

एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः।

त्रयाणामन्तरं नास्ति गुणभेदाः प्रकीर्तिताः॥ भूमिखण्डे ७१.२०

**अन्ये देवाः**

पौराणिकयुगे शिवपरिवारः प्रतिष्ठितः। गणेशस्कन्दौ शिवस्य पुत्रौ सम्मानितौ। गणेशस्याग्रपूजा विहिता। सर्वे देवा अपि गणेशस्याग्रपूजां कुर्वन्तीति निर्दिष्टम्। पुष्पफलमूलमोदकदधिघृतधूपदीपादिभिः वाद्यसङ्गत्या च गणेशपूजा कृता।[१]

सूर्यो ब्रह्मणः स्वरूपमेवाभिमतः। तस्याराधनया मोक्षोऽपि सम्भावितः। सूर्यपूजया शरीरसौख्यं प्रकल्पितम्। तस्य पूजायै मन्त्रपाठः नैवेद्यं फलमर्घ्यं कदलीपत्रं रक्तचन्दनं च प्रयुक्तानि।[२]

**लक्ष्मीः**

विष्णोः पत्नीति लक्ष्मीः प्रतिष्ठिता। विष्णुलोके लक्ष्मीसहितो नारायणो वसतीति मान्यताऽऽसीत्। लक्ष्मीरादिभूता त्रिगुणमयी परमेश्वरी सर्वेषां कृते बभूव। तद्यथा नारीषु सौन्दर्यशीलसदाचार-सौभाग्यरूपेण लक्ष्मीः प्रतिष्ठिता। वेदाः तेषां सर्वाणि ज्ञेयतत्त्वानि च लक्ष्मीरूपाणि सन्ति। सर्वे देवाः लक्ष्म्याः कृपया स्वशक्तिं लभन्ते।[३]

**दुर्गा**

दुर्गा तु विष्णोर्योगनिद्रा महामाया वा प्रकल्पिता। दुर्गाया अपराणि नामानि—आर्या, वेदगर्भा, अम्बिका, भद्रा, भद्रकाली, क्षेमदा, भाग्यदा च तस्या वैशिष्ट्यानि प्रदर्शयन्ति। तस्याः पूजायै सुरामांसादीनां विधानमासीत्।[४]

---

१. पद्मपुराणे सृष्टिखण्डे ६१ अध्यायतः। २. तत्रैव ७५–७६ अध्यायतः।
३. तत्रैवोत्तरखण्डे २५५–२५६ अध्यायतः।
४. विष्णुपुराणे ५.१.७०–८६।

भूतिकान्तिसन्नतिक्षान्तिरूपेणापि दुर्गा प्रतिष्ठिता। तस्याः प्रत्यक्ष-रूपाणि—आकाशपृथिवीधृतिलज्जापुष्ट्युषस एव। जगतः सर्वाः शक्तयो दुर्गायाः प्रतिनिधित्वं कुर्वन्ति।[१]

**अधिष्ठातारो देवाः**

अधिष्ठातॄणां देवानां सङ्ख्या पुराणेषु सातिशया दृश्यते। तथाहि वेद-वेदान्तमन्त्रतन्त्रपुराणशास्त्रादयः, गङ्गादयो नद्यः, पुष्करादयो जलाशयाः, सर्वाणि क्षेत्राणि, सर्वाणि वनानि, भक्तिज्ञानवैराग्यादयो देवरूपेण सम्भावितानि।[२]

**मानवानां सांनिध्यम्**

मानवलोकोऽभीक्ष्णं देवानां कार्यक्षेत्रं दृश्यते। पुष्करतीर्थस्य प्रतिष्ठा स्वयं ब्रह्मणा कृता। स देवसिद्धब्रह्मर्षिभिः सह यदा कदा भूतले विराजमानो दृश्यते। देवानां पुत्रा अपि कतिपयमानवा बभूवुः। अत्रिर्ब्रह्मणः पुत्रोऽस्ति।[३] अपरं च—भगवान् स्वयं मानवानां पथप्रदर्शनं करोति, धर्ममुपदिशति, उपासकस्य चाण्डालस्य गृहे वसति, जनानां धर्मपरीक्षां करोति च।[४] मानवैः सह देवानां वार्तालापो भवति। भवतामुपकारार्थं स्वयम् उपस्थिता वयमिति देवाः कथयन्ति। चाण्डालरूपे समागत्य स्वयं विष्णुः भक्तस्य कृशरं चौर्यवृत्त्या खादति। अन्ततः तस्य समक्षं साक्षादाविर्भूय तं भक्तं स्वविमानेन विष्णुलोकं नयति।[५]

देवानां लौकिकव्यवहारो मानवोचितः प्रतिभाति। तेषां कुटुम्बानि दृश्यन्ते। तद्यथा शिवस्य स्त्रीपुत्रादयः सन्ति। ब्रह्मणः पुत्रो नारदः।

**विष्णोरवताराः**

विष्णुः स्वयमवताररूपेण मानवलोके आत्मानं सृजति। तत्र दश प्रमुखावताराः—वराह-मत्स्य-कूर्म-नृसिंह-वामन-परशुराम-रामकृष्ण-बुद्ध-

---

१. विष्णुपुराणे ५.१.७०–८६। २. पद्मपुराणे उत्तरखण्डे १८६, १६० अध्यायतः।
३. पद्मपुराणे सृष्टिखण्डे २७, ३५ अध्यायतः।
४. तत्रैव ४७, ५० अध्यायतः। ५. तत्रैव ८२ अध्यायतः।

कल्कयः। पञ्चदशान्येऽवताराः—सनक-सनन्दन-सनातन-सनत्कुमार-नारद-नरनारायण-कपिल-दत्तात्रेय - यज्ञ-ऋषभ-पृथु-धन्वन्तरि-मोहिनी—व्यास-बलरामाः। भागवतानुसारं भगवतोऽसङ्ख्या अवतारा बभूवुः। सर्वेऽवतारा मानवतायाः कल्याणाय धर्मसंस्थापनार्थाय च प्रादुर्भूताः।

## लोककल्याणम्

### कौटुम्बिकसामाजिकसुश्लिष्टता

आत्मनः सद्व्यवहारेण सर्वेषां परितोषोऽपि लोकविजयस्य साधनं मतम्। यदि कोऽप्यपमानं कुर्यात्तर्हि तूष्णींभावेन तत्सहेतेति धर्मशिक्षा।[1] प्राणिनः प्रति दया, शत्रुमित्रयोः समत्वं च प्रेतयोनेः आत्मनः परित्राणाय निर्दिष्टे।[2] मानवान् परितः सौहार्दपूर्णवातावरणस्य सृष्टये विधानमिदं समर्थमभवत्।

धार्मिकदृष्ट्या दरिद्र कलहप्रिया इति सत्यमेव। दारिद्र्यकारणानि परुषभाषणमसत्यं सन्ध्याशयनमन्तःकरणस्य मलिनत्वं च निरूपितानि।[3] एतेषां दुर्वृत्तीनां परित्यागो लोककल्याणाय समभवत्। तद्यथा समर्थितमपि—

यथात्मनि च पुत्रे च सर्वभूतेषु यस्तथा।
हितकामो हरिस्तेन सर्वथा तोष्यते सुखम्॥ विष्णुपुराणे ३.८.१७
परदारपरद्रव्यपरहिंसासु यो रतिम्।
न करोति पुमान् भूप तोष्यते तेन केशवः॥ तत्रैव ३.८.१४

लोककल्याणाय पूर्तानामतिशयं माहात्म्यं विद्यते। पूर्तविधानेन जलाशयकूपोपवनमन्दिरादीनां निर्मातारो लोके परलोके च परमाभ्युदयस्याधिकारिणोऽभिमताः।[4] लोकोपकारायान्यान्यपि कार्याणि स्वर्गप्रदानि मतानि। तद्यथा—वृक्षारोपणं सेतुरचनं प्रपाव्यवस्थापनं गोचरप्रदानं च।

---

१. पद्मपुराणे सृष्टिखण्डे १५ अध्यायतः। २. तत्रैव २६ अध्यायतः।
३. पद्मपुराणे उत्तरखण्डे २६० अध्यायतः।
४. पद्मपुराणे सृष्टिखण्डे २४ अध्यायतः।

## धर्मस्य सुग्राह्यत्वम्

पौराणिको धर्मः सर्वजनग्राह्यो दृश्यते। धनिका निर्धनाः, उच्चवर्णा नीचवर्णा वा सर्वेऽपि धर्मपथेन स्वकल्याणं कर्त्तुं समर्थाः प्रबोधिताः। महाभारतस्य नकुलोपाख्यानानुसारं युधिष्ठिरस्याश्वमेधादपि कुरुक्षेत्रनिवासिन उञ्छवृत्तिधारिणो ब्राह्मणस्य सक्तुदानं विशेषतरमासीत्। पद्मपुराणानुसारं कामनापरित्यागेनापि सर्वेषां व्रतानां पालनं भवति। क्रोधत्यागेन तीर्थसेवनं जायते। दया तु जपसमा। उपवास एवोत्तमं तपः। परदाराणां त्यागो महायज्ञः।[1] चाण्डालाः शूद्राश्च पवित्रेण धार्मिकेण च जीवनविन्यासेन मुनिपदमारोढुं समर्थाः[2]। तदेव ब्रह्मपुराणेऽपि समर्थितम्।[3]

पूर्तविधाने दरिद्राणां कूपनिर्माणं धनिकानां जलाशयनिर्माणमिव पुण्यप्रदं मतम्।

## धर्मेण स्वास्थ्यसंवर्धनम्

पद्मपुराणे प्रतिदिनं दुग्धदधिघृतादीनां भोजनस्य महत्त्वं वर्णितम्। अगव्यं भोजनं खादतः पुरुषस्य शरीरमपावनं विचारितम्[4]। स्वास्थ्य-संवर्धनायैवापराण्यपि विधानानि वर्तन्ते। तथा हि - आर्द्रपादो न शयीत, आर्द्रपादो भुञ्जीत, तमसि भोजनं शयनं वा न कुर्वीत।[5] आमलकसेवनेन पापान्मुक्तिः आयुर्वर्धनं धर्मसंचयः दारिद्र्यहरणं च सम्भावितानि।[6] आमलकस्य सेवनमाधुनिकयुगे विज्ञानानुसारं लाभप्रदमभिमतम्। तुलसीपत्रस्य धार्मिकमहत्त्वं तदेवानुसरति।

## अलौकिकविधानानि

धर्मस्यालौकिकविधानानि प्रत्यक्षाणि न भवन्ति, किन्तु तेषां मान्यता समाजे वर्तते। तेषु प्रथमं तावत् कर्मफलमेव।

---

१–२. पद्मपुराणे सृष्टिखण्डे ५० अध्यायतः।

३. श्वपाकोऽपि च मद्भक्तः सम्यक् श्रद्धासमन्वितः।
प्राप्नोत्यभिमतां सिद्धिमन्येषां तत्र का कथा॥ १७८.१८६

४. पद्मपुराणे सृष्टिखण्डे ५६ अध्यायतः। ५. तत्रैव ४६.५३।

६. तत्रैव ५८ अध्यायतः।

## कर्मफलम्

कर्मणा इह जन्मनि फलं साक्षात् वर्त्तते, किन्तु मरणानन्तरमपि कतिपयकर्माणि कर्तारमनुबध्नन्तीति धर्मकल्पना। अपरजन्मनि तेषां कर्मणां फलं भुज्यते। कर्मानुरूपमेव पुनर्जन्म भवति। तद्यथा—

पुमान्न देवो न नरो न पशुर्न च पादपः।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः॥

विष्णुपुराणे २.१३.६८

कर्मणा जायते जन्तुः कर्मणैव विलीयते।
सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते॥
किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम्।
अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम्॥

भागवते १०.२४.१३,१५

भागवतानुसारं सर्वे कर्मपरा भवन्तु। तथा हि—

केचित् कुर्वन्ति कर्माणि कामैरहतचेतसः।
त्यजन्तः प्रकृतीर्दैवीर्यथाहं लोकसङ्ग्रहम्॥

भागवते १०.८०.३०

## मरणोत्तरविधानम्

पुराणानुसारं मुक्तिः सुलभा बभूव। तथा हि—गङ्गायां यदि प्राणविसर्जनं जायते तर्हि न पुनः स्तन्यपानमपेक्षितं भवति।[1] मरणोत्तर-गतिर्मरणकालिकबुद्ध्यनुरूपेति निर्धारितम्। सा सुबुद्धिः पुण्योदयेन सम्भवति।[2]

पापिनस्तु नरकभोगानन्तरं क्रमशः स्थावरकृमिजलचरपक्षिपशुमनुष्य-देवादीनां योनिषु जन्म गृहीत्वा अन्ततो मुमुक्षवो भवन्ति।[3] समाजं पापाद्विरतं कर्तुं धार्मिकं विधातुं च नरकस्य भयकल्पना स्वर्गस्य मनोहारिता च सोत्कर्षपरा।

---

१–२ पद्मपुराणे सृष्टिखण्डे ४७ अध्यायतः।

३. विष्णुपुराणे द्वितीयांशे ६.३२

## वैष्णवधर्मः

विष्णुस्तु वैदिककालीनो लोकहितपरायणः देवः परवर्तियुगेऽवतार-माध्यमेन मानवतायाः विशेषं सांनिध्यं प्राप्तवान्। तद्यथा गीतानुसारम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥

गीतायां वेदवादस्य, संन्यासस्य, यज्ञविधानस्य च हेयत्वं प्रतिपादितम्। निष्कामबुद्ध्या भगवदर्पणाय कर्तव्यपालनं तु कर्मयोगः। गीतानुसारं कर्मयोगः सर्वश्रेष्ठो धर्मः।

## विष्णोर्व्यक्तित्वम्

पौराणिकयुगे विष्णुः सर्वोच्चोदात्तानां गुणानामधिष्ठानं सम्मतः। स तु सर्वशक्तिमान्, सर्वव्यापी, सर्वज्ञः, उपकारपरायणः, परमपावनः, पुण्य-स्वरूपः, महाकान्तः, यज्ञवल्लभः, शिवः, सर्वाश्रयः, शान्तः, पुरुषार्थस्वरूपो वर्तते।[१] भागवते विष्णुना स्वयं प्रोक्तम्—

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः॥ ६.४.६३

इन्द्रस्य स्तवने विष्णोर्माहात्म्यं भागवते निवेदितम्[२]—

नमस्तुभ्यं भगवते पुरुषाय महात्मने।
स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये।
सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः॥ १०,२७.६,१०

## वैष्णवस्य व्यक्तित्वम्

विष्णोर्व्यक्तित्वस्यानुरूपं वैष्णवानां व्यक्तित्वं विकसितं दृश्यते। तथा हि—सर्वेषां प्राणिनामात्मरूपेण भगवान् तिष्ठति। अत एव सर्वे प्राणिनः

---

१. पद्मपुराणे भूमिखण्डे ६८ अध्यायतः।
२. अस्मिन् प्रसङ्गे कृष्ण एव विष्णुः।

समादरणीयाः। कस्यचिदप्यनादरेण विष्णोरनादरो जायते। तद्यथा भागवते प्रोक्तम्—

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम्।
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा॥ ३.२९.२७

आदर्शोऽयं मानवो भागवते प्रकल्पितः—श्रद्धासम्पन्नः, भक्तः, विनीतः, अनसूयः, भूतेषु कृतमैत्रः, शुश्रूषाभिरतश्च।[1] भागवतानुसारं वैष्णवस्तु काममर्थं च वर्गं परित्यजेत्। कामानामुदयः पतनाय भवति। तद्यथा—

इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः।
ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यन्ति जन्मना॥
विमुञ्चति यदा कामान् मानवो मनसि स्थितान्।
तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते॥ ७.१०.८–९

गृहस्थोऽपि वैष्णवो गृहदारादिषु कदापि संसक्तो मा भवतु। तस्य लोकोपकारत्वं हि सर्वोच्चाराधनम्। तद्यथा—

तप्यन्ते लोकतापेन साधवः प्रायशो जनाः।
परमाराधनं तद्धि पुरुषस्याखिलात्मनः॥ ८.७.४४

वैष्णवस्य समग्रो जीवनविन्यासो भगवते समर्पितो भवति। तस्य समदृष्टिः सर्वत्र वर्तते। सर्वं प्रति तस्य भगवद्भावना वर्तते।

## वैष्णवी भावना

विष्णुरेव देवासुरयक्षराक्षसमनुष्याग्निजलरूपरसकालादीनां पारमार्थिक-रूपेण तिष्ठतीति वैष्णवी भावना। विष्णुः सर्वेषां कर्मणां भोक्ता तेषां सामग्री फलं च भवति। विष्णोर्भक्तो मनसि करोति—भगवान् मम स्वरूपेणैव जगद्रूपेण तिष्ठति। अहमेव सर्वस्मिन् वर्ते। सर्वं मयि वर्तते। अहमेव परमपुरुषः।[2]

---

१. भागवते ३.३२.४१–४२

२. विष्णुपुराणे १.१९.६७–७३, ८१, ८५, ८६

# आराधनम्

आराधने ध्यानस्य स्थानं प्रथमं विद्यते। तद् द्विविधं—निराकारं साकारं च। निराकारं ध्यानं ज्ञानेन सम्भवति। योगिन एव तत्कर्तुं क्षमाः। निराकारस्यापि विष्णोः कार्याणि कर्माणि च मतानि। तद्यथा—वेदाः तस्य वाणी। निराकारस्वरूपस्य ध्यानेन परमपदप्राप्तिर्भवति। साकारध्यानाय सर्वं विश्वं विष्णोर्वासनया वासितं मन्यते। विश्वमिदं विष्णौ वर्तते। विष्णो रूपं मानवमूर्तिवदभिमतम्। साकारध्यानेन विष्णुलोके प्रतिष्ठा प्राप्यते।

पूजायाः कृते विष्णोर्मूर्त्तिः सिंहासने प्रतिष्ठाप्यते। तदा षोडशोपचार-विधिना क्रमशः पूजा क्रियते।[1] षोडशोपचारः पुरुषसूक्तस्य ऋग्भिः प्रारभ्यते। षोडशोपचारस्य पश्चात् गरुडाङ्के मूर्तिं शाययित्वा विष्णुनामकीर्तनं हवनं च क्रियेते। विष्णोः परितोषाय स्तोत्राणां गीतवाद्यादीनां चायोजनं भवति। भगवतो मूर्तेरभ्यङ्गस्य, उन्मर्दनस्य, दर्पणदर्शनस्य, दन्तधावनस्यापि विधानं भवति। पूजाकाले भक्तः कश्चिन्नर्तनशीलो भवति।

भगवतः पूजायाः पंचाङ्गानि—अभिगमनमुपादानं योगः स्वाध्यायः इज्या च निर्णीतानि। देवस्थानस्य स्वच्छीकरणं निर्माल्यस्य दूरीकरणं चाभिगमनम्, पूजार्थं चन्दनपुष्पादीनां संग्रहणमुपादानम्, आत्मन्येव भगवतो दर्शनं योगः, वैष्णवमन्त्राणां जपः स्वाध्यायः, यथार्थविधिनाऽर्चन-मिज्या च भवन्ति। आभिः पञ्चपूजाभिः क्रमशः सार्ष्टिसामीप्यसालोक्यसा-युज्यसारूप्या मुक्तयः प्राप्यन्ते।[2] पूजान्तेऽधोलिखितमन्त्रपुरस्सरं दण्डवद्-विधिना भगवन्तं प्रति प्रणामाभिव्यक्तिः क्रियते—

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।<br>
दासोऽहमिति मां मत्वा क्षमस्व मधुसूदन॥

---

१. षोडशोपचाराः—आवाहनम्, आसनम्, अर्घ्यम्, पाद्यम्, आचमनीयम्, स्नानीयम्, वस्त्रम्, यज्ञोपवीतम्, गन्धः, पुष्पम्, अक्षतः, धूपः, दीपः, नैवेद्यम्, ताम्बूलम्, नमस्कारश्च।

२. पद्मपुराणे पातालखण्डे ७९ अध्यायतः।

विष्णोः चरणोदकं पीयते ।

विष्णुसम्बन्धिमन्त्राणां जपेनापि पूजाप्रकल्पनाऽऽसीत् । तद्यथा षोडशाक्षरमन्त्रः—गोपीजनवल्लभचरणान् शरणं प्रपद्ये । दशाक्षरमन्त्रः—नमो गोपीजनवल्लभाभ्याम् । अष्टाक्षरमन्त्रः—ओ३म् , नमो नारायणाय । द्वादशाक्षरमन्त्रः—ओ३म, नमो भगवते वासुदेवाय । विष्णुगायत्री—ओ३म् नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् । एषां मन्त्राणां जपेन लौकिकपारलौकिकानां लाभानां सम्भावना कृता ।[१] विष्णोर्विविधावताराणां नामकीर्तनेन सर्वपापेभ्यो मुक्तिः सम्भाविता । संकीर्तनाय विष्णोः सहस्रनामानि स्तोत्रे सङ्कलितानि । ततः परं महासूत्रम्—'रामरामेति रामेति रमे रामे मनोरमे' प्रकल्पितम् ।

वैष्णवधर्मे प्रतिष्ठितानां विविधदेवानां पूजायै बहूनि स्तोत्राणि प्रकल्पितानि । स्तोत्राणां महिमा भागवतवचने निगदितः । तद्यथा—

विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरम् ।
मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥
इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयान्वितः ।
शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ४.२४.७७-७८

भागवतस्याजामिलप्रकरणेन ज्ञायते यत्—

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद् व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ६.२.७

वैष्णवधर्मेऽदेवानां पूजा परित्यक्ता । किन्तु विशेषप्रयोजनान्युद्दिश्य तेषां पूजापि समीहिता । तद्यथा—सौन्दर्याय गन्धर्वाणाम् , बाधानिवारणाय यक्षाणाम् , अभिचाराय निर्ऋतीनां पूजा कार्या ।[२]

दक्षिणभारते 'आलवाराः' इति ख्याता ऋषयः, नाथमुनिः, यामुनाचार्यः, रामानुजाचार्यः वैष्णवधर्मस्य प्रचारका बभूवुः । उत्तरभारते

---

१. पद्मपुराणे पातालखण्डे ८१ अध्यायतः; नारदपुराणे पूर्वभागे ७० अध्यायतः ।

२. भागवते ३.१०.१४-२८

रामानन्दः, तस्य रैदासपद्मावतीप्रभृतयः शिष्याः, तुलसीमलूकदासादयोऽनुयायिनश्च वैष्णवधर्मस्य सर्वत्र शाश्वतप्रतिष्ठां कृतवन्तः। अन्येऽपि बहवः कवयः पुराणकाराश्च वैष्णवधर्मप्रचारका बभूवुः।

## शैवधर्मः

प्राचीनतमोऽयं शैवधर्मः प्रथमं सिन्धुसभ्यतायुगे परिलक्ष्यते। सिन्धुसभ्यतायुगीनः शिवः ऋग्वेदे वर्णितस्य रुद्रस्य किञ्चित्समकक्ष एव दृश्यते। रुद्रस्तु पशुप इति वैदिकधारणा।[1] संहारकोऽयं रुद्रः स्वभावतः सर्वेषां कल्याणार्थिनामार्याणां स्तुत्यः दृश्यते। यजुर्वेदस्य शतरुद्रिये वर्णितः रुद्रः आर्येतराणां शिवस्य प्रायशः सारूप्यं प्राप्नोति। अथर्ववेदे महादेवो व्रात्यानामधिष्ठातेति दृश्यते।[2] श्वेताश्वतरोपनिषदि रुद्रः शिवः गीताया विष्णुवत्, उपनिषदां ब्रह्मवद्वाऽनन्यतमो देवो वर्णितः। स देवानामादिप्रभवः। तस्मादेव हिरण्यगर्भस्योत्पत्तिः मन्यते। तथा हि—

ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम्।
विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति॥ ३.७

महाभारतानुसारं शिवः—सर्वभूतमहेश्वरः, सर्वेश्वरः, कल्याणकारी, परमकारणः, सर्वव्यापकश्चास्ति। हिमालये कृष्णोऽर्जुनश्च तस्य स्तुतिं कुरुतः। एभिः प्रकरणैः स्पष्टं प्रतिभाति यत् तस्मिन्युगे शिवः परमपूज्योऽभवत्।[3]

पौराणिकयुगे शिवस्य महिमा सातिशयः दृश्यते। स परमो योगी ऐश्वर्येण देवान्, बलेनासुरान्, ज्ञानेन ऋषीनतिशेते।[4] तस्याष्टरूपाणि—पंचतत्त्वानि, सूर्यः, चन्द्रः, दीक्षितो ब्राह्मणश्च विश्वात्मकान्येव वर्तन्ते।

शिवस्य लोकरक्षकरूपं विषपानेन प्रसिद्धम्। आत्मारामोऽपि शिवो लोकरक्षायै शिवया सह विचरति।[5]

---

१. ऋग्वेदे १.११४.६
२. अथर्ववेदे १५.५.१—७
३. अनुशासनपर्वणि १४ अध्यायतः।
४. वायुपुराणे २७ अध्यायतः।
५. भागवते ४.२४.१८

## माहेश्वरयोगः

शिवस्य योगपथः माहेश्वर इति विदितः। माहेश्वरयोगे—प्राणायाम-ध्यानप्रत्याहारधारणास्मरणानां पञ्चतत्त्वानां प्रतिष्ठाऽऽसीत्। अनेन योगेन नैर्मल्यस्य सम्भावना मता। प्राणायामेन दोषाणां प्रत्याहारेण विषयाणां ध्यानेनानीश्वरगुणानां प्रवृत्तयः दूरीभवन्ति।[१] लिङ्गपुराणे शिवलिङ्गपूजाया माहात्म्यं वर्णितम्।[२]

### शैवतन्त्रम्

शैवतन्त्रे पशुः पशुपतिः पाशश्चेति त्रयः पदार्थाः सन्ति। तेषु पशुः जीवः एव, पशुपतिः शिवः, पाशस्तु जीवस्य मोहात्मकं बन्धनम्। बन्ध-नाद्विमुक्तये चत्वारः पादाः—विद्या, योगः, क्रिया, चर्या च कल्पिता। विद्यया ज्ञानावबोधः जायते। योगेन मोक्षो भवति। चर्यया शुद्धाचारस्य ग्रहणं निषिद्धाचारस्य त्यागश्च भवतः। दीक्षाविधिः क्रियेति कथ्यते। क्रियापादेन दीक्षितस्याभ्युदयाय मन्त्रसन्ध्यापूजाजपहोमादीनां विधानं कृतम्।

## पाशुपतसम्प्रदायः

पाशुपतसम्प्रदायस्यादिप्रवर्तकः शिवस्यावतारः 'लकुली' इति मन्यते। तस्य प्रमुखग्रन्थः पञ्चाध्यायी पञ्चार्थविद्या वा वर्तते। पञ्चार्थाः—कार्यं कारणं योगः विधिः दुःखान्तश्च सन्ति। कार्यं त्रिविधम्—विद्या कला पशुश्च भवति। कारणेन सृष्टेः पोषणं प्रलयश्च भवतः। आदिकारणं शिव एव। योगेन पशुः पशुपतिना सम्बद्धो भवति। धर्मार्थसाधको व्यापारो विधिः द्विविधः—व्रतं द्वारं च। भस्मस्नानं भस्मशय्या उपहारः[३] जपः प्रदक्षिणा च व्रतम्। क्राथनं स्पन्दनं मण्डनं शृङ्गारणमवितत्करण-मवितद्भाषणं दुःखान्तश्च द्वारम्। योगेनालौकिकसिद्धीनां प्राप्तिरपि दुःखान्त एव।

---

१. वायुपुराणे १०.७१—८४  २. लिङ्गपुराणे ३० अध्यायतः।

३. उपहारः—हसितं गीतं नृत्यं हुडुक्कारः नमस्कारः जपश्च।

## कापालः कालामुखश्च सम्प्रदायौ

कापाले कालामुखे च शिवस्य भैरवरूपं प्रतिष्ठितम्। भैरवस्य पत्नी चण्डिकाऽपि परितोषणीया भवति। सा मुण्डमालां धारयति। तस्याः पूजायां मद्येन सह नरबलिरपेक्षितो भवति।

कापालिकाः हस्ते कपालं लौहदण्डं च धारयन्ति। कपाले नररक्तं मद्यं वा इष्यते। कापालिकानां केन्द्रं श्रीशैलमासीत्।

कालामुखास्तु प्रायशः कापालिका इव सिद्धान्तदृष्ट्या भवन्ति। ऐहलौकिकानां पारलौकिकानां च सिद्धये तेषां षट् साधनानि—कपाले भोजनं चिताभस्मस्नानं भस्मभक्षणं गदाधारणं मद्यपात्ररक्षणं मद्यपात्रे स्थितस्य देवस्य पूजनं च। कालामुखेषु महाव्रतिकास्तु घोरा एव।

## काश्मीरः शैवसम्प्रदायः

काश्मीरशैवसम्प्रदायानुसारं सृष्टिरीश्वरस्य विश्वात्मकं रूपं भवति। शिवः सृष्टेरुद्भावयिताऽस्ति। शिव उपादानं विनाऽपि सृष्टेः रचनां करोति।

अस्मिन्सम्प्रदाये मानवस्याज्ञानं मलमायाकर्मभिः कृतमेव वर्तते। नादमाध्यमेन मलमायाकर्मणां प्रभावो जायते। नादस्तु शिवस्य शक्तिरेव। तस्याः सहचारिण्योऽम्बा, ज्येष्ठा, रौद्री, वामा च भवन्ति।

मोक्षाय मलमायाकर्मणां प्रभावेभ्यो निवृत्तिरपेक्षिता भवति। शिवेन साक्षात्कारः तादात्म्यं च मुक्तिः।

## वीरशैवसम्प्रदायः

वीरशैवसम्प्रदाये शिवः चराचराणां धारणाय केवलं स्थलं भवति। शिवस्य शक्त्या क्षोभः संजायते। अनेन क्षोभेण स्थलस्य द्वौ भागौ—लिङ्गस्थलमङ्गस्थलं च भवतः। लिङ्गस्थलं शिवो भवति। अङ्गस्थलं तु जीवात्मा। शिवः स्वशक्त्या आराध्यो भवति। जीवस्तु स्वभक्त्याऽऽराधको जायते। भक्त्या पुनरपि लिङ्गस्थलाङ्गस्थलयोः एकीकरणं सम्भवति।

तदेव मुक्तिः। वीरसम्प्रदायस्यानुयायिनो ब्राह्मणा लिङ्गायताः। तेषामनुयायिनोऽपि लिङ्गायताः सन्ति। ते मांसमदिरादीनां सेवनं न कुर्वन्ति। लिङ्गायतानां दीक्षा-मन्त्रः 'ओऽम्, नमः शिवाय' इति भवति। दीक्षायाः पश्चात् लिङ्गायता यज्ञोपवीतस्थाने लिङ्गस्य मूर्तिं धारयन्ति। कन्यकानामपि दीक्षा भवति।

## द्राविडशैवसम्प्रदायः

द्रविडप्रदेशे तमिलभाषायां शैवधर्मस्य मौलिकग्रन्थाः रचिताः। तेषां प्रतिष्ठा तत्र वेदोपनिषत्स्तोत्रादीनां समकक्षं वर्तते। बहवो राजानः तस्य सम्प्रदायस्याभ्युदययोजिनो बभूवुः।

## शाक्तसम्प्रदायः

शाक्तसम्प्रदायस्य मूलं सिन्धुसभ्यतायाः मातृदेव्याः पूजायां परिलक्ष्यते। वैदिकसाहित्येऽदितिः पृथिवी च देव्यौ प्रायश आदिशक्तिरूपिण्यौ प्रतिष्ठिते। शैवसम्प्रदाये शक्तिः शिवस्य पत्नीति प्रतिष्ठिता। शिवस्य सर्वे पराक्रमाः शक्तिदेव्याः साहाय्येन प्रकल्पिताः।

शाक्तसम्प्रदायस्य तन्त्रसाहित्ये शक्तिः—आनन्दभैरवी, त्रिपुरसुन्दरी, ललिता इति ख्याता। शिवस्तु महाभैरवः, आनन्दभैरवो वा। शिवशक्त्योः सामरस्यं सृष्टेः समारम्भः। तत्रानन्दभैरवी सृष्टेरुत्पादने, आनन्दभैरवस्तु तस्याः संहारे प्रमुखरूपेण संलग्नौ। आत्मनः मोक्षलाभाय त्रिपुरसुन्दर्या सह तादात्म्यं शाक्तानां सर्वोच्चसिद्धिः।

शाक्तास्तु द्विविधाः—कौलिकाः समयिनश्च। तेषु कौलिकाः पंचमकारभोगिनः वस्तुतः घोराः। तेषामैन्द्रियकसुखानि घृणास्पदम्। समयिनस्तु पवित्रात्मानः प्रतीकमात्रेणाराधकाः सन्ति।

## गाणपत्यसम्प्रदायः

गाणपत्यसम्प्रदायस्यानुयायिनो गणपतिं सर्वोच्चदेवं मन्यन्ते। तस्मादेव सृष्टेरुद्भवं ते प्रतिपादयन्ति। गणपतिरयं वैदिककालतः प्रायः सदैव सुप्रतिष्ठितो दृश्यते। तथा हि वेदे मरुतां गणस्याधिपतिरूपः स वर्तते।

महाभारते तस्य विनायकरूपेण प्रतिष्ठा वर्तते। क्वचित्तेषां विनायकानां विघ्नकारिणी प्रवृत्तिरपि निदर्शिता। गणपतेरुपासका बाहौ गणपतेः मुखदन्तादीनां मुद्रणं तप्तलौहखण्डेन कारयन्ति। कतिपयगाणपत्या आचारदृष्ट्या कौलिका इव दृश्यन्ते। मदिराणां मदिराक्षीणां च सेवनं तेषां परं कर्तव्यं प्रतिभाति।

आधुनिकयुगेऽपि सर्वेषु धार्मिकविधिषु गणपतेः प्रथमपूजा गाणपत्य-सम्प्रदायस्य कस्मिंश्चिद्युगेऽतिशयलोकप्रियत्वं प्रतिपादयति।

## सौरसम्प्रदायः

वैदिकयुगात् सूर्यस्य विविधनामभिः रूपैश्च सम्बद्धा स्तुतिः प्रचलिताऽभूत्। सूर्यः सविता वाऽऽचार्यरूपेण मानवतायाः सर्वोच्चोन्नायकः मतः। द्वादशरूपैरादित्यः सूर्यो वा प्रमुखदेवानामुद्भवः प्रकल्पितः।[१] सूर्यः चराचरस्यात्मा प्रकल्पितः।[२] अपरं च आदित्यो ब्रह्मेति तैत्तिरीये निदर्शितम्।[३] सूर्यो जगतः माता, पिता, गुरुश्चाभिमतः।[४]

प्रायशः विष्णुवत् सूर्यस्य पूजा विहिता। सूर्यनमस्कारोऽर्घ्यदानं च सूर्यपूजानिमित्तं वैशिष्ट्ये। आदित्यव्रते सूर्योदयादारभ्य सूर्यास्तपर्यन्तं सूर्योन्मुखो भूत्वाऽऽराधकः मन्त्राणां स्तोत्राणां च जपं करोति।

सौरसम्प्रदायानुयायिनः ललाटे रक्तचन्दनेन सूर्याकृतिं रचयन्ति। रक्तकुसुमानां मालां धारयन्ति, उदयोन्मुखं सूर्यं ब्रह्मरूपेण, मध्याह्नसूर्यमीश्वररूपेण, अस्तोन्मुखं सूर्यं च विष्णुरूपेण पूजयन्ति।

सौरसम्प्रदायस्य पुराऽतिशयलोकप्रियता दृश्यते। हर्षादयो बहवो राजानः सूर्योपासका बभूवुः। सूर्योपासनाय मन्दिराणि निर्मितानि। तेषु कलिङ्गप्रदेशस्य कोणार्कमन्दिरं ख्रीष्टतः पश्चात् त्रयोदशशताब्दे निर्मितम्। तन्मन्दिरमधुनाऽपि कलाकृतेरनुपममादर्शं प्रस्तौति।

---

१. ब्रह्मपुराणे ३० अध्यायतः। २. ऋग्वेदे १.११५.१
३. तैत्तिरीयोपनिषदि ३.१.१ ४. ब्रह्मपुराणे २९ अध्यायतः।

# साम्प्रदायिकसहिष्णुता

धार्मिकसम्प्रदायानां सहिष्णुतायाः प्रथमं प्रमाणं महाभारते स्पष्टं परिलक्ष्यते । तथा हि—

धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत् ।
अविरोधात् तु यो धर्मः स धर्मः सत्यविक्रम ॥ वनपर्वणि १३१.११

बौद्धधर्मस्य प्रवर्तकस्य गौतमस्य विविधसम्प्रदायान् प्रति सम्मानभावनाऽऽसीत् ।[१] जैनधर्मे रामकृष्णादीनां महापुरुषाणां श्लाघ्यमहापुरुषश्रेण्यां प्रतिष्ठा दृश्यते । जैनसम्प्रदाये कालान्तरे वैष्णववर्गः प्रतिष्ठितः ।

पौराणिकधर्माणां पारस्परिकसहिष्णुता शङ्कराचार्येण सविशेषं प्रतिष्ठापिता । स स्वयं षण्मतस्थापनाचार्यः सन् शैववैष्णवसौरशाक्तगाणपत्यकालिकसम्प्रदायानां प्रामाणिकतां विहितवान् ।

## सहिष्णुताया मूलाधारः

सहिष्णुताया मूलाधाररूपेण विदुषां सा धारणा वर्तते ययेदं शाश्वतसत्यं सन्धारितम्—

एकं सद्विप्रा बहुधा वदन्ति ।
एकं नियानं बहवो रथासः ।

तद्यथा पृथिव्याः सहिष्णुता निदर्शिता—

जनं बिभ्रती बहुधा विवाचसं नाना धर्माणं पृथिवी यथौकसाम् ।

सर्वेषां भारतीयधर्माणां भित्तिमूलं प्राणिमात्रेषु दयां विश्वबन्धुत्वं सत्यमहिंसामाचारशुद्धिं च प्रथममवलम्बते, तेषु सर्वेषु समानरूपेण महापुरुषाणां प्रतिष्ठा कृता, व्रतोपवासैश्च शारीरिकशुद्धिः मानसिकपवित्रता च प्रकल्पिते । न कोऽपि धर्मः घृणां वैषम्यं वा शिक्षयति । अस्यां परिस्थितौ स्थाने एव पद्मपुराणे निर्दिष्टम्—

१. महावग्गे १.७.५

स्वधर्ममपि चावेद्य परधर्मं न दूषयेत् । सृष्टिखण्डे १६.३३२

प्रायशः सर्वेषु धर्मेषु विविधधर्माणामुत्तमशिक्षाः स्वीकृताः । पौराणिक-धर्मे गौतमोऽवताररूपेण गृहीतः । जैनबौद्धादर्शानुरूपं पौराणिकधर्मेऽपि मांसभोजनस्य हिंसायज्ञस्य च परित्यागो दृश्यते ।

भारतीया राजानः प्रायः स्वयं धार्मिकसहिष्णुताया उदाहरणं प्रस्तुवन्ति स्म । चन्द्रगुप्तमौर्यहर्षकुमारपालादयः सर्वान् धर्मान् प्रति श्रद्धापरायणा बभूवुः । तेषां प्रजाऽपि यथा राजा तथा प्रजेति सिद्धान्तेन धार्मिकसहिष्णुतां व्यवहृतवती । अशोकस्य मानवधर्मः सुविदितः । स सर्वेषां धर्माणां सुप्रतिष्ठामियेष ।

भारतीया गृहस्थाः सर्वेषां धार्मिकसम्प्रदायानां प्रायशः समादरं कुर्वन्ति स्म । ब्राह्मणाः प्रायशः ससंघं गौतमबुद्धं निमन्त्रितवन्तः, आतिथ्यं कृत्वा च बुद्धोपदेशं श्रुतवन्तः । जैनसाधूनामपि तादृशी प्रतिष्ठा समाजेऽभवत् । अत एव ब्राह्मणजैनबौद्धाचार्याणामेकत्र वसतिः पुग प्रायः बभूव । अधुनाऽपि मथुरा-वाराणसी-साँची-भिलसा-एलूरादिषु स्थानेषु धार्मिक-संस्थानामैक्यभावना सुप्रतिष्ठितैव साक्षात् दृश्यते ।

पौराणिकयुगे ब्रह्मणः विष्णोः महेशस्य च एकत्र पूजा प्रचलिता दृश्यते । एकस्मिन्नेव मन्दिरेऽगणितदेवतानां मूर्तयः प्रतिष्ठिताः । तासां देवतानामनुयायिनस्तत्र सहयोगेनाराधनपूजादिकं कर्म कुर्वन्ति स्म ।

## बौद्धधर्मः

गौतमस्य धर्मः द्विविधः—गृहस्थानां कृते, भिक्षूणां कृते च । गृहस्थ-धर्मः आचारप्रधानः भिक्षुधर्मोऽन्तःशुद्धिप्रधानश्च बभूवतुः । भिक्षुधर्मे योगमार्गेण निर्वाणप्राप्तिर्निर्दिष्टा । गृहस्थधर्मेण समाजे सदाचारस्य प्रतिष्ठा सर्वत्र शान्तिश्च समीहिते ।

बौद्धधर्मेऽपि वैदिकधर्मवत् कर्मफलं, पुनर्जन्म, मोक्षश्च सम्मतानि । मोक्षाय ( निर्वाणाय ) गौतमोऽष्टाङ्गिकमार्गं प्रस्तुतवान् । निर्वाणाय स

कामानां परित्यागं विशेषमहत्त्वपूर्णं प्रकल्पितवान्। तत्र यज्ञानां महत्त्वं नास्तीति गौतमस्य मुख्यप्रतिज्ञा।

## तृष्णात्यागः

स्वव्यक्तित्वस्य विकासाय मानवो बाह्यवस्तूनि नापेक्षते। तस्मै प्रयोजनाय ज्ञानप्रकाशे चित्तवृत्तीनां शोधनमावश्यकम्। आधिभौतिकीनां सिद्धीनां भोगविलासानां च पाशाः पुनर्जन्मबन्धं संयोजयन्ति। ते पाशाः दुःखकारणानि भवन्ति।

## कर्मण्यता

गृहस्थेभ्यो गौतमः कर्मण्यतां निर्दिशति। गौतमानुसारमालस्यस्य भयङ्करफलानि भवन्ति। अलसाः शीघ्रं निर्धना भवन्ति। आलस्यं तु सम्पत्तिनाशस्य द्वारम्। कर्मण्यताया अपूर्वा प्रशस्तिः धम्मपदे विद्यते। तद्यथा—

यो च वस्ससतं जीवे कुसीतो हीनवीरियो।
एकाहं जीवितं सेय्यो विरियमारभतो दल्हं॥ ८.१३

तदनुसृत्य सुत्तनिपाते प्रोक्तम्—

धम्मेन मातापितरो भरेय्य पयोजये धम्मिकं सोवणिज्जं।
एतं गिही वत्तयं अप्पमत्तो सयंपभे नाम उपेति देवेऽति॥[1]

## सामाजिकसुश्लिष्टता

बौद्धधर्मानुसारं प्रतिनिधिरूपेण मातापितरौ पूर्वदिशा, गुरुः दक्षिण-दिशा, पत्नी पश्चिमदिशा, बन्धु-बान्धवाः उत्तरदिशा, भृत्याः पातालदिशा, साधवः आकाशदिशा सन्ति। सर्वान् प्रतिनिधीन् प्रति सुशीलव्यवहारः तेषां पूजा भवति। सर्वेषामभ्युदयाय सुखाय च प्रयत्नः करणीयः। अनेन प्रकारेण कुटुम्बे समाजे च मधुरवातावरणस्य सम्भावना कृता।[2] तदनुसृत्य धम्मपदे निर्दिष्टम्—

---

१. धम्मिकसुत्तं २६

२. बुद्धचर्यायां सिगालोवादसुत्ते

यो पाणमतिपातेति मुसावादं च भासति।
लोके अदिन्नं आदियति परदारं च गच्छति॥
सुरामेरयपानं च यो नरो अनुयुंजति।
इधेव मेसो लोकस्मिं मूलं खनति अत्तनो॥ १८.१२-१३

मानवीयगौरवस्य मापदण्डो गौतमेन सुष्ठु निर्धारितः—

यम्हि सच्चं च धम्मो च अहिंसा सञ्ञमो दमो।
स वे वन्तमलो धीरो थेरो इति पवुच्चति॥

धम्मपदे १९.६

## त्रिविधयानः

यानस्तु पन्थाः। स त्रिविधः भवति—हीनयानः, प्रत्येकबुद्धयानः, महायानश्च। हीनयानानुसारं श्रावका व्यक्तिगताभ्युदयाय यतन्ते। साधकास्तु श्रावका एव निर्वाणपथगामिनः चतुर्विधाः—स्रोतआपन्नाः, सकृदागामिनः, अनागामिनः, अर्हन्तश्च क्रमशः प्रगता भवन्ति। श्रावकोऽर्हन्भूत्वा निर्वाणं लभते।

प्रत्येकबुद्धयानः तेषां महात्मनां भवति ये गुरुं विना निर्वाणपथज्ञानं कृत्वा बोधिं प्राप्नुवन्ति। केवलं स्वकीयं कल्याणं स कुरुते नान्येषाम्।

महायानस्तु बोधिसत्त्वयानः सर्वेषां प्राणिनां कल्याणाय भवति। बोधिसत्त्वः सन् पुरुषो लोककल्याणस्यावसरं प्राप्नोति। चरितं तस्य विशेषरूपेणोदारं करुणामयं च भवति।

महायानेन साधको महाकरुणाया सर्वेषां प्राणिनां निर्वाणाय प्रयत्नं करोति। साधकस्य बोधिप्रस्थानचित्तस्यावस्थानन्तरं दानं शीलं प्रज्ञा वीर्यं क्षान्तिः ध्यानं च षट्पारमिताः व्रतरूपेण धार्यन्ते।

महायानशाखायां पूजाविधानम्—वन्दनमर्चनं पापदेशनं पुण्यानुमोदनं बुद्धाध्येषणं बुद्धयाचनं बोधिपरिणामनं चास्ति। मूर्तिपूजायाः प्रचलनं च वर्तते। तत्र स्तूपचैत्यादीनां पूजा पत्रपुष्पदीपदानादिभिः क्रियते। तीर्थानि प्रकल्पितानि। तद्यथा—गौतमस्य जन्मभूमिः तस्य बोधिस्थानं धर्मचक्रप्रवर्तनस्थानं महापरिनिर्वाणस्थानं च।

बौद्धधर्मानुयायिनां गृहस्थानामातिथ्यवृत्तिः, तेषां संघपोषणोत्साहश्च कर्तव्यरूपेण प्रतिष्ठितौ ।

## महायानस्य वैशिष्ट्यानि

महायानानुसारं निर्वाणप्राप्तये भिक्षुजीवनस्य स्वीकरणमपेक्षितं नासीत् । गृहस्थोऽपि बोधिसत्त्वो भूत्वा स्वपरोपकारवृत्त्या निर्वाणलाभाय समर्थो मतः । महायाने प्रतिष्ठिते सति कतिपयभिक्षवः कठोरजीवनवृत्ति-मसहमाना विवाहं कृत्वा गृहस्था बभूवुः ।

महायाने परोपकाराय कृतं पापमपि समीचीनं मतम् । अनया मान्यतया व्यभिचाराणां विहारे संघे च प्रवेशाय द्वारमनावृतम् । पापमार्जनाय सरल-विधानान्यपि प्रस्तुतानि । निःसन्देहमेवानेनायोजनेन भिक्षूणामपि पापवृत्तयः समिद्धाः ।

महायानानुसारं तत्रागणितबुद्धा बभूवुः । तद्यथा विष्णोरवताराः पौराणिकधर्मे मताः तथैव बुद्धानामवताराः यथाकालं षट्, चतुर्विंशतिः, अनन्ताश्च प्रकल्पिताः । ब्रह्माण्डस्यासंख्येषु लोकेषु बुद्धानामसंख्यत्वं मतम् ।

ब्राह्मणधर्मवत् महायाने बौद्धधर्मे स्वर्गस्य कल्पना दृश्यते । तत्र सुखावतीति ख्याते स्वर्गे महर्षीणां वासो मतः । अस्य लोकस्याधिपतिः अमिताभः सूर्यरूपेण प्रतिष्ठितः । तस्य नामकीर्तनमात्रेण पापिनामपि सुगतिः सम्भाविता ।

कतिपयबोधिसत्त्वानां मञ्जुश्रीमैत्रेयावलोकितेश्वरादीनां लोकोपकारिता प्रतिष्ठिता । ते मानवान् सत्पथे प्रवर्तयन्ति, मृतात्मनः स्वर्गं गमयन्ति, निर्वाणाय सर्वानेव प्राणिनः प्रोत्साहयन्ति च ।

ब्रह्मविष्णुशिवकालीप्रमुखाः देवताः परवर्तियुगे उपास्या मताः । अव-लोकितेश्वरः विष्णुरेव मतः । सप्तर्षयोऽपि प्रकल्पिताः । बौद्धधर्मेऽपि सृष्टे-र्विकासः वेदान्तानुसारं प्रतिपादितः । तद्यथा—धर्मकायः ब्रह्म, सम्भोगकायः

ईश्वर इति। आदिबुद्धोऽवलोकितेश्वरः सम्भोगकायः। तस्मादेव देवानां ब्रह्मादीनां प्रादुर्भावः प्रकल्पितः।

## वज्रयानः

वज्रयाने तन्त्रस्य विकासोऽभवत्। तन्त्रे हठयोगस्य प्रतिष्ठा विद्यते। हठशब्दे ह सूर्य एव दक्षिणनाड्याः, ठ चन्द्र एव वामनाड्याः प्रतीकम्। इमे नाड्यौ क्रमशः पिङ्गलेडे च सुषुम्णां नाडीमभितः वर्तेते। योगिनः सुषुम्णा-मूर्ध्वमुखीं कर्तुमेव साधनां कुर्वन्ति। अनया साधनया कुण्डलिनी जागर्ति। तया सहस्रारचक्रस्थितशिवस्य रसास्वादो गृह्यते। वज्रयाने योगस्य पतनं दृश्यते। तथाहि—तदनुसारं योगसाधने मन्दिरमदिरामदिराक्षीणा-मुपयोगः समीहितः। वज्रयाने यमनियमादीनामुपेक्षा कृता।

## बौद्धधर्मस्य ह्रासः

हीनयाने बौद्धधर्मस्य मूलतत्त्वानि सर्वोच्चानि बभूवुः। कालान्तरे महायानयुगे बौद्धधर्मं लोकप्रियं कर्त्तुमेवाचारविषयकाणि शैथिल्यानि प्रायशः प्रोत्साहितान्येव दृश्यन्ते। ईदृशे भिक्षुसमाजे मनीषिणां प्रादुर्भावो नाभवत्। परिणामतः शनैः शनैः बौद्धाचार्याणां हतप्रभत्वं प्रचारितमभवत्। अन्य-धर्माणामाचार्यैः सह विवादे स्वभावतः तेषां पराजयोऽभवत्। तन्त्रसम्प्रदाये कामुकतापूर्णं जीवनं सर्वेषां विरोधायाऽऽसीत्।

बौद्धानां प्रधानप्रतिपक्षिणो वैदिकधर्मावलम्बिनस्तु स्वधर्माणां युगा-नुरूपत्वं विधातुं सफलप्रयत्नान् कृतवन्तः। वैष्णवधर्मे जीवनस्य पवित्रता प्रतिपादिता। सा बौद्धधर्मस्याष्टाङ्गिकमार्गप्रणिहितात् जीवनवैशद्यादधिक-प्रभावपूर्णा बभूव। याज्ञिकहिंसाया विरोधोऽपि कृतः। अस्यां परिस्थितौ प्रारम्भिकयुगे महायाने वैष्णवधर्मस्य कतिपयसिद्धान्ताः स्वीकृताः। कालान्तरे महायानः वैष्णवधर्मे विलीनोऽभवत्। वैष्णवधर्मेऽपि गौतमोऽ-वतार एव प्रतिष्ठितः। अनेन विधिना शीघ्रं बौद्धधर्मावलम्बिनां संख्या स्वल्पा बभूव।

भारतीयधर्माणां महानदात् बौद्धधर्मस्य प्रवाहोऽभवत्। कालान्तरे

बौद्धधर्मस्य शाखा विदेशेषु प्रचारिता बभूवुः। अधुनापि तत्र तासां प्रभावो वर्तते। भारतेऽपि बौद्धधर्मः पौराणिकधर्मे विलीनः सन् शाश्वतरूपेण विद्यमानः दृश्यते।

## जैनधर्मः

साम्प्रदायिकधारणानुसारं जैनधर्मोऽनादिरनन्तश्च। सृष्टेरभिनवकल्पे धर्मोपदेशाय तीर्थङ्कर उत्पद्यते। अनेन प्रकारेण चतुर्विंशतितीर्थङ्कराः समुत्पन्नाः। तेषु प्रथमः ऋषभ एव, अन्तिमास्त्रयश्च नेमिनाथः, पार्श्वनाथः महावीरश्च बभूवुः।

### पूजा

अस्मिन् धर्मे वैदिकयज्ञानां विरोधो वर्तते। देवानां प्रतिष्ठाऽपि तत्र स्वल्पैव दृश्यते। तर्हि नासीत् देवयज्ञानां देवपूजानां वाऽवसरः जैनधर्मे।

जैनधर्मे पंचपरमेष्ठिनां पूजा विहिता। पञ्चपरमेष्ठिनस्तु अर्हन्, सिद्धः, आचार्यः, उपाध्यायः, साधुश्च भवन्ति। जीवन्मुक्तमहात्मानोऽर्हन्तः। तीर्थङ्करा अर्हन्तो भवन्ति। मुक्तपुरुषाः सिद्धाः कथ्यन्ते। आचार्याः साधूनां व्यक्तित्वस्य विकासाय यतन्ते। उपाध्यायाः शास्त्रपारङ्गताः साधूनां शिक्षकाः भवन्ति। मोक्षपथसाधकाः साधवः सन्ति। गृहस्थेभ्यः पूजया सह तीर्थयात्राऽपि विहिता।

पञ्चपरमेष्ठिनां मूर्त्तीनां पूजा निर्धारिता। प्रायोऽर्हतां मूर्तयः पूजिता दृश्यन्ते। मूर्तीनां प्रतिष्ठा मन्दिरेषु क्रियते। तत्र तीर्थङ्कराणां स्तुतयः, नमस्कारपूर्वकं मूर्तिप्रदक्षिणा च प्रथमं कृताः। तदनन्तरमभिषेकः सम्पादितः, जलचन्दनाक्षतपुष्पनैवेद्यदीपधूपफलादिभिः पूजनं कृतं च। पूजया शारीरिकशुद्धिः मोक्षप्राप्तिश्च सम्भाविते। तत्र मानसिकपूजाया विधानमपि दृश्यते।

### व्रतम्

अहिंसा तु सर्वोच्चव्रतं मतम्। अहिंसाव्रतानुसारं जगतः चराचराणां दृश्यानां केषाञ्चिदपि प्राणिनां ज्ञाताज्ञातरूपेण कृता हानिः परित्याज्या।

तद्यथा—रात्रिभोजनत्यागः, जलपानशुद्धिः, प्राणशुद्धिश्च नियताः। परिग्रह-व्रतेनोचितोपायैः नात्यधिकधनसङ्ग्रहस्य मर्यादा स्वीकृता। जैनानामन्य-व्रतानि—अस्तेयसत्यब्रह्मचर्याणि सुविदितानि।

धर्मलक्षणम्

दशलक्षणोऽयं जैनधर्मः। तत्र क्षमा-मार्दवार्जव-सत्य-शौच-संयम-तप-स्त्यागाकिञ्चन्यब्रह्मचर्याणि प्रतिष्ठितानि। इमानि लक्षणानि भागवतधर्मे बौद्धधर्मे वा समानरूपेण स्वीकृतानि। धर्मपथे गमनाय त्रयाणां शल्याना-मभावोऽपेक्षितः। तत्प्रथमं निदानशल्यं कामानां बाधां प्रस्तौति। मायाशल्यं व्यवहारे कुटिलतामादधाति। मिथ्यात्वशल्येन प्रभावितो जनोऽसत्यमेव सत्यमिति विजानाति।

जगतः उपेक्षा

जैनधर्मानुसारं देहोऽयं स्वभावतोऽपवित्रः। देहस्य सुखाय किमपि करणीयं न विद्यते। अतएव लौकिकविभूतीनामर्जनं संग्रहणं वा न कर्तव्यमिति मनीषिणां मतम्। अस्यां परिस्थितौ जैनगृहस्थेभ्योऽपि कर्म कर्तुं प्रोत्साहनं न विद्यते। निष्कामकर्मयोगस्यादर्शो जैनधर्मे न स्वीकृतः।

मरणोत्तरविधानम्

मरणानन्तरं ये जीवा निर्वाणं प्राप्नुवन्ति ते सिद्धा भूत्वा विश्वमण्डलस्य शिखरेऽवस्थिता भवन्ति। तेषां लोक ईषत्प्राग्भार इति प्रोक्तः। सिद्धानामात्मानः तस्मिन् लोके ज्ञानदर्शनानन्दमया भवन्ति।

जैनधर्मेऽपि पौराणिकधर्मसममेव नरकस्य प्रकल्पनं विद्यते। नारकीय-यातनाः बहुविधाः वर्तन्ते। तद्यथा प्रदाहनं क्रकचेन पाटनं कृमिभिः भक्षणं च। नरकात् पुनरपि मातुर्गर्भे पतनं भवति।

तपस्विनो मुनयो यदि निर्वाणं न प्राप्नुवन्ति तर्हि ते देवलोके देवयोनौ समुत्पन्ना भवन्ति। तत्र तेषां शोभा सर्वोत्कृष्टा भवति। सोपवासं प्राणो-त्सर्जनं कृत्वा गृहस्थाः स्वर्गे देवेन्द्रपदं प्राप्नुवन्ति। ततोऽवतीर्य भूलोके

ते चक्रवर्तिनः सम्राजः भवन्ति। अन्ततः ते संन्यासिनो भूत्वा दीक्षां गृह्णन्ति।

**धर्मग्रन्थाः**

वैदिकधर्मस्य प्रवर्तनमृग्वेदादिसंहिताग्रन्थैः भवति। वैदिकयुगे याज्ञिक-धर्मस्य विवेचनं ब्राह्मणग्रन्थेषु कृतम्। ततः परमारण्यकेषु, उपनिषत्सु च धर्मस्य पारमार्थिकस्वरूपं व्याख्यातम्। वैदिककालस्य पश्चात् सूत्रस्मृति-ग्रन्थेषु वर्णाश्रमयोः सूक्ष्मविवेचनं दृश्यते। महाभारते, पुराणेषु, उपपुराणेषु च वर्णाश्रमधर्मस्य व्यावहारिकं स्वरूपं सविस्तरं वर्णितम्। बहवः तन्त्रग्रन्थाः तदेव वर्णयन्ति।

बौद्धानामादिधर्मग्रन्थः त्रिपिटकमिति ख्यातम्। त्रिपिटकमाश्रित्य परवर्तियुगे बहवो ग्रन्थाः संस्कृतभाषायां लिखिताः। जैनधर्मस्य प्रारम्भिक-स्वरूपमङ्गोपाङ्गशास्त्रेषु विद्यते। ततः परं जैनधर्मस्य विवेचनं पुराणेषु, चरितकाव्येषु, कथासु च कृतं दृश्यते।

———

# शिल्पकला:

शिल्पकलाप्रमाणमादौ प्रकृतौ दृश्यते। तथा हि—चित्रं तु पत्रपुष्पाणां रङ्गेषु, चलितकुसुमानां पत्रपुटेषु, मौक्तिकशुक्तीनां रेखान्यासे च प्राकृतिकमेव। मूर्तरूपं तु जगदेव पाञ्चभौतिकं दृश्यते। नदीप्रवाहेषु शिलाशकलाः प्रायशः मूर्तरूपं धारयन्ति, क्षुद्रजन्तूनां पक्षिणां कीटादीनां च गृहाणि बहुधा कलापूर्णानि भवन्ति, तत् सर्वं सुमनोहरम्।

## चित्रम्

मानवकृतचित्राणां द्विविधं स्वरूपं वर्तते—वनवासिभिः कृतम्, नागरिकैः कृतं च। वनवासिनां चित्रं प्रागैतिहासिकमिति निगद्यते। वनवासिनः प्रकृतेः मनोरमे उत्सङ्गे उपविश्य समक्षमेव सौन्दर्यशालिनीं प्रकृतिच्छविं दृष्ट्वा मनसि प्रोल्लसिताः स्वभावत एव चित्राभ्यासे लीना भवन्ति। पुराऽसङ्ख्यस्थानेषु तैः वनवासिभिः चित्राणि कृतानि, किन्तु कालक्रमेण प्रायशः चित्राणि विनष्टानि। केवलं स्वल्पान्येव चित्राणि पर्वतगुहासु प्रकृत्यैव सुरक्षितानि प्राप्यन्तेऽधुना।

## वन्यचित्राणि

पर्वतश्रेणीषु कतिपयगुहाः वनवासिभिः परिचित्रिताः दृश्यन्ते। ईदृशानां चित्राणां चत्वारि केन्द्राणि सन्ति—(१) मिर्जापुरजनपदस्य सोनद्रोणी, (२) मानिकपुरबाँदाजनपदे, (३) रायगढजनपदे सिंघनपुरस्य पर्वते कावरापर्वते च, (४) महादेवपर्वते होशङ्गाबादे पचमढीजनपदे च।

मिर्जापुरजनपदे वन्यानां हस्तिनां पक्षिणां च ग्रहणस्य, नृत्यस्य च चित्रणं दृश्यते। क्वचित् मृगादिवन्यपशूनां चित्रणमतीव सुन्दरं प्रतिभाति। तत्र भलदरियागुहायां मृगयाक्रमे व्रणितस्य श्रान्तस्य च शूकरस्य पक्षिणां जलसन्तरणस्य च दृश्यचित्रं लभ्यते। विजयगढगुहायां कस्यचित् व्याधस्य सिंहस्य च चित्रणं वर्तते। इमानि चित्राणि ख्रीष्टस्य चतुर्थ-

शतकादारभ्य दशमशतकपर्यन्तं निर्मितानि। बाँदाजनपदे सरहतगुहायां त्रिभिरश्ववारैः त्रयाणामश्वानां वहनं दर्शितम्। मालवागुहायां शकटे उपविष्टः कश्चित् पुरुषो दर्शितः। शकटात् पश्चभागे द्वौ पुरुषौ चित्रितौ प्रथमस्य पुरुषस्य हस्ते धनुर्बाणौ, अपरस्य हस्ते यष्टिश्च वर्तन्ते। कुरियाकुण्डगुहायां हरिणानां मृगयादृश्यं चित्रितम्।

सिंघनपुरगुहासु काबरापर्वतगुहासु च मृगयादृश्यस्य मकर-हरिण-सरटादीनां चित्रणं कृतम्। मानवानामाकृतयः यष्टिसमाभिः पीनरेखाभिः निदर्शिताः। इमानि चित्राणि ख्रीष्टस्य पूर्वमेव निर्मितानि।

पचमढीसमीपं प्रायः पंचाशत् गुहाः चित्रमयाः कृताः। आसु गुहासु मृगयादृश्यं मधुसंचयदृश्यं समूहयुद्धं पशुचारणं तृणाच्छादितगृहाणि पर्णकुटीनिवासिनश्च चित्रमाध्यमैः निदर्शितानि। हस्तिनः, चित्रकाः, ऋक्षाः, शूकराः, हरिणाः, मकराश्च तासु चित्रिताः। क्वचित् पालितपशवः बलीवर्दाः, अजाः, कुक्कुराश्च चित्रिताः। तत्रैव 'अपर डोरोथी' गुहायां वानरस्य वंशीवादनं मनोहारि दृश्यमेव चित्रितम्। आसु गुहासु प्राचीनतमानि चित्राणि ख्रीष्टतः ५०० वर्षाणि प्रागेव कृतानि।

चित्रोपकरणेषु गैरिकं प्रायः प्रयुक्तमेव दृश्यते। चित्रेषु क्वचित् कृष्ण-वर्णरचना दग्धकाष्ठैः कृता प्रतिभाति।

## नागरचित्राणि

नागरचित्रस्य प्रथमं प्रत्यक्षपरिचयः सिन्धुसभ्यतायुगीनैः चित्रैः प्राप्यते। सिन्धुसभ्यतायाः चित्रशैली पूर्ववर्तिनां कलाकाराणां निरवधि-कालीनसाधनाभिः सुविकसिता एव दृश्यते। तस्मिन् युगे चित्रकलायाः लोकप्रियत्वं नित्यप्रयुक्तवस्त्रपात्रादीनां चित्रणैः प्रसिध्यति।

सिन्धुसभ्यतायुगे ज्यामितिचित्राणि रेखाचित्राणि वा पत्रपुष्पादीनां ताराणां पशुपक्षिणां चित्राणि च पात्रेषु कृतानि। तत्र पत्रपुष्पादीनां मध्ये मयूरादयः पक्षिणः, मत्स्यकच्छपादयः जलचराश्च निवेशिताः। प्रायः सर्वे प्राणधारिणः संचरणशीला एव निदर्शिताः।

सिन्धुसभ्यतायुगे चित्रणाय कूर्चिकायाः उपयोगोऽभूत्। चित्रेषु श्वेत-रक्त-कृष्ण-पीत-हरितादीनां बहूनां रङ्गाणां प्रयोगः कृतः।

सिन्धुसभ्यतायाः पश्चात् वैदिकयुगे भारतीयचित्रस्य विकासः-कथमभवदिति ज्ञातुं तत्कालीनसाहित्यमेवावलम्ब्यम्। वैदिकयुगस्य महा-भारतादियुगस्य वा चित्रावशेषा अलब्धा एव।[१] चित्रस्य प्रचलनं वैदिकसभ्यतायामासीदिति निम्नलिखितैरुल्लेखैरवगन्तव्यम्—राजसूययज्ञे यजमानस्य राज्ञः तार्प्यवस्त्रे यज्ञरूपाणि चित्रितानि। गवां कर्णेषु कर्करि-दात्रस्थूणादीनामाकृतीनां रचना स्वधित्या कृता।[२]

परवर्तियुगीनस्य चित्रकरणस्योल्लेखा बौद्धसाहित्ये दृश्यन्ते। तथा हि उम्मगजातकानुसारं कस्मिंश्चित् सुरङ्गे इन्द्रस्य वैभवम्, सुमेरुः, समुद्रः, महाद्वीपाः, हिमालयः, सूर्य-चन्द्र-दिक्पालाः, भुवनानि च चित्रितानि। पात्रेषु बहुविधानि चित्राणि निर्मितानि, मालासु चित्राणि निवेशितानि च।[3] उत्तरीयेषु पुष्पाणि पशुचित्राणि वा वर्णितानि।[४] गृहभित्तिषु नरनारीणां मनोरमचित्राणि रचितानि।[५]

राजाश्रये नाट्यगृहेषु चित्राणि रचितानि।[६] राजप्रासादेषु राज्ञां राज्ञीनां च चित्राणि निर्मितानि, राजकीयवस्त्राणामलङ्करणं चित्राचार्यैः कृतम्।

---

१. From the references in the early literature of India dealt with in the preceding chapter, it has been already inferred that painting was a developed form of artistic expression previous even to the rise of Buddhism, and the character of the most ancient frescoes at Ajanta serves to strengthen this supposition. Percy Brown : Indian Painting p. 32.

२. शतपथे ५.३.५.१० अथर्ववेदे ६.१४१.२; १२.४.६ मैत्रायणीसंहितायां ४.२.६

३. कुसजातके ५३१ ४. महावग्गे ५ १०.३ ;८.२६

५. चुल्लवग्गे ६.३.२ ६. नाट्यशास्त्रे २.६०—६१

सिन्धुसभ्यतायाः पश्चात् भारतीयचित्रकलायाः ऐतिहासिकपरम्परायाः प्रथमं स्वरूपमजन्तागुहाचित्रेषु प्राप्यते। अजन्तायाः नवमी दशमी च गुहे खीष्टतः पूर्वं द्वितीयशतके प्रथमशतके च निर्मिते। अत्र 'छद्दन्त'-जातकस्य कथा चित्रिता। चित्रकलायाः द्वितीयं स्वरूपमजन्तायाः शेषासु गुहासु प्राप्यते। तद् गुप्तकालीनमेव। गुप्तकालीनचित्रकलायाः अवशेषाः मध्यप्रदेशस्य बाघगुहासु, दक्षिणभारतस्य बादामिगुहासु, तंजौरजनपदस्य सित्तनवासलगुहासु, काञ्चीनगरस्य शिवमन्दिरे च प्राप्यन्ते।

**अजन्ता-चित्राणि**

अजन्तायाः चित्रावलीषु पूर्णं जगदेव सन्निविष्टं दृश्यते। तासु सर्वेषां प्राकृतिकानां मानवीयानां च वस्तूनां सर्वासां परिस्थितीनां च परिकल्पनं बभूव। मानवीयजीवनस्य चतुर्णां वर्गाणामितिवृत्तानि चित्रेषु समन्वितानि। मोक्षपराणि चित्राणि तत्र प्रमुखं स्थानं गृह्णन्ति।

अजन्तायाः चित्रशैली रसभावपूर्णा प्रतिभाति। तद्यथा षोडशगुहायां मरणासन्नाया राजकुमार्याः चित्रं करुणरसभावसृष्टावद्वितीयमेव। गौतम-बुद्धस्य समग्रं जीवनं तत्र निदर्शितम्। सप्तदशगुहायां यशोधरया बुद्धाय राहुलस्य समर्पणं चित्रितम्। तदेव तस्य युगस्याप्रतिमा कथा बभूव, यतः काचित् माता स्वपुत्रस्य बुद्धशरणागमनमेव सर्वोच्चो भाग्योदय इत्यमन्यत।

गौतमबुद्धस्य पद्मपाणिबोधिसत्त्वक्रमादारभ्य परिनिर्वाणपर्यन्ता कथा विस्तृतरूपेण द्वितीयगुहायां षोडशगुहायां सप्तदशगुहायां च चित्रिता वर्तते। सप्तदशगुहायां सौन्दरनन्दस्य कथा चित्रिता।

कतिपयचित्राणि मानवतायाः समक्षमौदार्यस्यादर्शं प्रतिष्ठापयितुमेव कृतानि। तद्यथा प्रथमगुहायां स्वर्णतुलायां कस्यचिद्राजर्षेः मांसं कपोततुल्यं तोल्यते। बोधिसत्त्वानां कथानां चित्रणं राष्ट्रियचरित्रस्य विकासाय कृतम्।[१]

---

१. The aim of the Buddhist artist was to visualise the ideals of his creed, to illustrate by pictorial parables all the beautiful sentiments of the Buddhist religion.

अजन्तायाः चित्रशैली सफला दृश्यते। तत्रत्यकलाकाराः मानव-जीवनस्य भारतीयप्रकृतेश्च कुशला अध्येतारो बभूवुः। रससर्जनाय विविधभावान् प्रदर्शयितुमाङ्गिकान् विन्यासान् विलासांश्च नैपुण्येन ते व्यक्तवन्तः। तत्र नाट्यशास्त्रे वर्णिताः मुद्राः प्रत्यक्षीकृता एव। गुहासु चित्र-रचना धरातलभागं परित्यज्य प्रायशः सर्वत्रैव कृता। तद्यथा भित्तिषु, स्तम्भेषु, अन्तःपटलेषु च चित्राणि विद्यन्ते। अन्तःपटलचित्राणां सौष्ठव-पूर्णविनिवेशनं तु महदाश्चर्यमेव।

अजन्तायाः चित्राणां रचनायां पादपानां धातूनां च रसाः प्रयुक्ताः। चित्राचार्याः चित्रकरणात् प्राक् भित्तिं समतलां विधाय वज्रलेपस्यावरणेन योग्यां पृष्ठभूमिं कृतवन्तः। चित्रस्य पूर्वरूपं कृष्णरेखाभिरङ्कितम्। वर्णस्य चयनं भावानुरूपं कृतम्। चित्राचार्याणां तूलिका सर्वत्र सन्तुलिता दृश्यते।

**बाघचित्राणि**

बाघचित्राणि गुप्तयुगे रचितानि। बाघस्य गुहाभवनानि अजन्तायाः गुहानां समक्षं नात्युत्कृष्टानि प्रतिभान्ति, किन्तु बाघचित्रशैली पूर्णरूपेण परिपक्वा दृश्यते। चित्रेषु परिधिगतलतापत्रचित्रणस्य बाहुल्यं वर्तते। लतापत्रादिषु मध्ये क्वचित् पशुपक्षिणां पुरुषाणां वा विचरणं चित्रितम्। स्थानीयदृश्यानि,तत्रत्यादिवासिनां रूपाणि च चित्रेषु प्रायशःविनिवेशितानि। बाघचित्रेषु सर्वोत्तमं हल्लीसकनृत्यदृश्यमेवावशिष्टं विद्यते। अस्मिन्

---

These were designed to appeal to the higher feelings of the spectator, so that sustained by their supreme charm, the littleness of his own personality vanishes, and he becomes exalted and absorbed. The Buddhist frescoes no doubt attained this object, and by their sheer artistry elevated the individual into the actual realms of the higher beings, thus bringing him to the feet of the Master himself. Percy Brown : Indian Painting p. 8.

चित्रे रासलीलावत् रमणीनां समूहः कस्यचित् पुरुषस्य नेतृत्वे सङ्गीतमय-नाट्यस्य प्रदर्शनं करोति। क्वचिदेव गौतमबुद्धस्य बोधिसत्त्वानां च चरितगाथा चित्रिता। अन्यत्र हस्तिनामश्वानां च राजकीययात्राप्रसङ्गे सजीवं चित्रणं कृतम्।

### बादामिगुहाचित्राणि

तत्रत्यवैष्णवगुहायां शिवपार्वतीपरिणयदृश्यं चित्रितम्। आकृतिषु सौकुमार्यं रमणीयं वर्तते।

### सित्तनवासलगुहाचित्राणि

अस्मिन् प्रदेशे जैनसंस्कृतिसम्बद्धाः गुहा वर्तन्ते। तत्र नृत्यचित्राणां वैशिष्ट्यं दृश्यते। नर्तकीनां हावभावादिकं नृत्यमुद्राश्च प्रदर्शितानि। एकस्यां गुहायामन्तःपटले सरोवरदृश्यं चित्रितम्। तत्र सघनपद्मवनमध्ये हंससारसादयः पक्षिणः मकरमत्स्यादयो जलजन्तवश्च चित्रिताः। एकस्यां गुहायां उच्चपरिवारस्य चित्रणं विद्यते।

गुप्तयुगे बहुषु राजभवनेषु, चित्रगृहेषु, मन्दिरेषु च चित्रकारैरसङ्ख्य-विषयकाणि चित्राणि निर्मितानि। तेषामुल्लेखमात्रमेव फाह्यानह्वेनसांगादीनां यात्रावर्णनेषु प्राप्यते।

एलूरायाः कैलाशमन्दिरे भित्तिचित्राणि दृश्यन्ते। अत्र गरुडासीनस्य विष्णोः लक्ष्म्याश्च चित्रणं सर्वोत्कृष्टम्। चित्रशैली तु प्रायशः परवर्तियुग-स्याजन्ताचित्रणानुरूपा वर्तते। एषां चित्राणां रचना ख्रीष्टस्य पश्चादष्टमे नवमे च शतकेऽभूत्।

तञ्जौरस्य बृहदीश्वरमन्दिरे चोलराजैः निर्मापितानि एकादशशतकस्य चित्राणि प्राप्यन्ते। द्वादशशतकस्य चित्रं झाँसीजनपदस्य मदनपुरमन्दिर-स्यान्तःपटले निर्मितं दर्शनीयमेव।

दशमशतकादारभ्यद्वादशशतकपर्यन्तं वङ्गप्रदेशे पालराज्ञामाश्रये लघुचित्रकला विकसिता। एकादशशतकादारभ्य षोडशशतकपर्यन्तं पश्चिमचित्रकला गुर्जरप्रदेशे विकसिता। तेषां लघुचित्राणां निदर्शनं हस्त-

लिखितपुस्तकानां पृष्ठेषु भवति। बौद्धग्रन्थस्य प्रज्ञापारमितायाः प्रतिषु देवानां सर्वोत्कृष्टानि चित्राणि विद्यन्ते।

गुर्जरशैलीचित्राणि ताडपत्रेषु साधारणपत्रेषु वा रचितानि। चित्राणां पृष्ठभूमिका प्रथमं रक्तवर्णा रचिता, परवर्तियुगे नीला स्वर्णाभा वा पृष्ठभूमिका प्रचलिता बभूव। एषु चित्रेषु कोणविशिष्टं मुखं, शुकनासा, उद्भिन्न-नेत्रं च विशेषाः सन्ति। अलङ्करणविषयाणां चित्रेषु बाहुल्यं वर्तते। चित्राणि त्रिविधानि सन्ति—जैनसाहित्यविषयकाणि, वैष्णवसाहित्यविषयकाणि, लौकिकचित्राणि च। लौकिकचित्रेषु वसन्तविलासचित्रणं सर्वोत्कृष्टं वर्तते। तदधिकृत्य नवसप्ततिलघुचित्राणि कुण्डलितचित्रपटे रचितानि। अस्मिन् प्रकरणे वसन्तस्य चारुतायाः प्राकृतिकविलासस्य निदर्शनं चित्रमाध्यमैः कृतम्।

## चित्रस्य लोकोपयोगिता

वन्यचित्रैः नागरचित्रैश्च प्रायः सर्वदा मानवानामावासा अलंकृताः। वन्यचित्रैः दर्शकानां पराक्रमेभ्यः प्रोत्साहनमपि समभवत्। रसिकानां हृदये चित्रदर्शनैः सततं रसनिष्पत्तिरजायतेति निःसन्दिग्धमेव।

सिन्धुसभ्यतायुगे वस्त्रपात्रादिषु चित्रं रचितम्। श्मशानेऽपि शवैः सह निधापितानां पात्रेषु तमालशिरीषादीनां वृक्षाणां चित्रं कृतम्। सिन्धुसभ्यतायाः लिपिः चित्रमयी बभूव। लिपिचित्रेषु वृक्षाः, पत्रपुष्पाणि, उत्पतनशीलाः पक्षिणः, सन्तरणपरायणाः मत्स्याः पशवश्च वर्तन्ते।

बौद्धसाहित्यानुसारं चित्रस्योपयोगिता नागरिकाणां व्यावहारिकजीवने संवर्धितेति प्रतिभाति। राज्ञो मनोरञ्जनाय चित्रागाराणि बभूवुः। राजकीय-रथाः सुचित्रिता बभूवुः। चित्ररचना मनोरंजनाय कृता। साधारणजना अपि गृहभित्तीः चित्रैरलंकृतवन्तः।

महाभारतानुसारं पताका रञ्जिताः बभूवुः। चित्रपटेषु हस्त्यश्वरथादयः निर्मिताः। सभायामासनविधानं क्वचित् पक्षिणां रेखाकृतिं रचयित्वा

तदनुसारं कृतम्। तद्यथा द्रौपद्याः स्वयंवरे शिशुमाराकृतिमनुसृत्य जना उपविष्टाः।

अजन्ताचित्रैः धर्मसंवर्धनस्यायोजनं कृतमिति प्रागेव निर्देशितम्। विदेशेषु धर्मप्रसारणाय चित्रस्याभिनवोपयोगः सिध्यति। राज्ञां दुकूलेषु हंसचित्राणि रचितानि। राजप्रासादभित्तिषु राजकीयकुटुम्बस्य सदस्यानां चित्राणि निर्मापितानि। भिक्षुकाः जैनाः बौद्धा वा स्वकीयशालाः चित्रै-रलङ्कृतवन्तः।

खीष्टतः पश्चात् सप्तमे शताब्दे पुत्रजन्मकाले धनिनां गृहे षष्ठीदेव्याः चित्रं रचितम्। हरिद्रायाः पिष्टेन भित्तिषु चित्राणि कारितानि। न केवलं वस्त्रेषु शरीरस्य विविधाङ्गेष्वपि चित्राणां स्थानं शोभनं मतम्। तद्यथा—कपोले कुङ्कुमेन पत्रलता, स्तनयोः कालागुरुणा पत्राणि पुष्पाणि च स्त्रीभिः रचितानि। राजप्रासादानां भित्तिचित्रैः विश्वस्य स्वरूपपरिचयं दातुमेव प्रकल्पना कृता। विवाहावसरे मृण्मयपात्रे पत्रलतादयः रचिताः।

विवाहार्थं स्वयंवरकृते नायकनायिकादीनां चित्राणि रचितानीति सुविदितमेव।

चक्रवर्तिसम्राजामभिषेकावसरे सिंहासने यद् व्याघ्रचर्मास्तृतं तस्मिन् सद्वीपायाः पृथिव्याः चित्रणं कृतम्।

विविधोपयोगानधिकृत्य कलाकाराः चित्रकलायाः विविधशैलीः विकसितवन्तः। चित्रस्य षडङ्गानि प्रतिष्ठापितानि—

रूपभेदः प्रमाणानि भावलावण्ययोजनम्।
सादृश्यं वर्णिकाभङ्गः षडेते चित्रमङ्गकम्॥

तत्र रूपभेदः निरूपणीयवस्तुनः सर्वाङ्गीणमध्ययनमेव। प्रमाणं तस्याकारप्रकारज्ञानम्। भावः तेनाभिव्यज्या रसाः भावाश्च। लावण्ययोजनेन चित्रे कलात्मकचारुता निवेशिता भवति। सादृश्यं तु सामान्यगुणलक्षणम्। वर्णिकाभङ्गेन रङ्गभरणं भवति।

चित्रलक्षणमधिकृत्य विविधविषयाणां चित्रणेऽपेक्षितस्य मानादिकस्य रूपवैशिष्ट्यस्य च परिचायकाः सिद्धान्ताः विवेचिताः ।[१]

## चित्रकलायाः विदेशेषु प्रसारः

बौद्धधर्मेण सह भारतीयचित्रकला विदेशेषु प्रसृता । लङ्का-स्याम-ब्रह्मा-नेपाल-खोतान-तिब्बत-जापान-चीनादिषु देशेषु चित्रकला भारतीयशैल्या प्रभाविता । चित्रमाध्यमेन धर्मस्य साक्षात् शिक्षणस्य पद्धतिः प्रचलिताऽऽसीत् । एतदर्थं कुण्डलचित्राणि प्रयुक्तानि बभूवुः । ख्रीष्टस्य पश्चात् सप्तषष्टितमे वर्षे काश्यपमातङ्गः चीनमहाराजस्य मिङ्गतीमहोदयस्यानुरोधानुसारं धार्मिकचित्रैः सह चीनमगच्छत् । तस्मात् कालादारभ्य सप्तमशताब्दपर्यन्तमसंख्यानि भारतीयचित्राणि चीने प्रेषितानि । चीनदेशस्य भित्तिचित्रशैली भारतानुरूपैव दृश्यते । भारतीयाः चित्राचार्याः धर्मप्रचाराय चीनं गतवन्तः । जापानस्य होरिउजीमन्दिरस्य चित्राणि अजन्तानुरूपाणि कृतानि दृश्यन्ते ।

पूर्वतुर्किस्तानस्य खोतानप्रदेशे ख्रीष्टस्य प्रारम्भिकयुगे भारतीयचित्रकलायाः प्रसरणं समभवत् । तत्र कौशेयवस्त्रेषु भित्तिषु च चित्राणि अजन्तानुरूपाणि अष्टमशतके रचितानि । दन्दन-उकिलस्थानस्य चित्रं सम्भवतः केनापि अजन्ताचित्रकारेण कृतमिति प्रतिभाति ।

## मूर्तिः

भारतीयमूर्तीनां प्रथमपरिचयः सिन्धुसभ्यतायाः अवशेषैः प्राप्यते । सिन्धु-सभ्यतायुगे विविधशैलीनां मूर्तीनां रचना कृता । तस्मात् कालादारभ्य प्रायशः द्विसहस्रवर्षेषु याः मूर्तयो रचिताः तासां केवलमुल्लेख एव साहित्यग्रन्थेषु प्राप्यते । तासामवशेषा अप्राप्ता एव । मौर्ययुगादेव मूर्तिकलायाः पुनर्दर्शनं भवति ।

---

१. विष्णुधर्मोत्तरपुराणस्य तृतीयभागे ३६-४३ अध्यायाः चित्रसूत्रकृते दर्शनीयाः ।

## सिन्धुसभ्यताया मूर्तयः

सिन्धुसभ्यतायुगे प्रायः चतुर्विधा मूर्तयो रचिताः—(१) शिलाशकलानां तक्षणेन कृताः (२) धातून् द्रवीकृत्य निर्मितरूपाः (३) अभिघातेन मुद्रिताः (४) मृण्मयाकृतयः हस्तेन रचिताः।

सुप्रसिद्धैव सिन्धुसभ्यताया ध्यानावस्थितयोगिनो मूर्तिः। सा प्रस्तरस्य मूर्तिः कलादृष्ट्या लोकोत्तरैव मन्यते। अस्यां मूर्तौ योगिन आङ्गिकविन्यासः, वस्त्रादीनां परिधानं च याथार्थ्येन निदर्शिते। मूर्तौ धातूनां प्रतिबन्धनं कृतम्। मूर्तेः वस्त्रभागेषु त्रिपत्रिकायाः तक्षणं रक्तवर्णेन पूरितम्।

कलादृष्ट्या सर्वोत्तमैव वर्तते शोणप्रस्तरेण निर्मिता पुरुषस्य मूर्तिः, यस्याः कबन्धभाग एवावशिष्टः। अस्यां मूर्तौ स्वाभाविकी रूपमुद्रा प्रस्तुता दृश्यते। तत्राङ्गिकसौष्ठवानि कुशलविधिना प्रदर्शितानि। नर्तक्याः कांस्यनिर्मितमूर्तौ नृत्यमुद्राः विन्यस्ताः। तथा हि तत्र नृत्यस्य हावभावाः वर्तन्ते। नर्तकीनां मृण्मयमूर्तयः प्रस्तरमूर्तयश्च प्राप्यन्ते।

सिन्धुसभ्यतायाः मूर्तिकलाशैली 'यथार्था' इति विख्याता। मूर्तिभिः भावाभिव्यञ्जनं तस्मिन्युगे नोद्दिष्टमिति प्रतिभाति। कलानां भावप्रवणता वैदिककवीनां प्रमुखलक्षणं दृश्यते। वैदिकयुगीनकाव्येषु प्रायशः याथार्थ्यं परित्यज्य व्यञ्जनायाः समाश्रयणं कवयः कृतवन्त इति स्पष्टमेव।

## वैदिकमूर्तयः

भारतीयकलानां व्यञ्जनत्वस्यादिस्रोतः वैदिकसंस्कृतौ प्रवाहितं दृश्यते। भारतीयकलासु कल्पनायाः यत् प्राधान्यं परिलक्ष्यते तस्याविर्भावः ऋषीणामलौकिकप्रतिभया सञ्जातः। तथा हि—अग्निः सहस्राक्षः, पुरुषः सहस्रशीर्षः, उषसः रमणीरूपा वा। उपनिषत्सु याथार्थ्यस्य परिधिमुपेक्ष्यैव व्यञ्जनामवलम्ब्य दार्शनिकाः विश्वमखिलं ब्रह्मैव निरूपितवन्तः। अनेन प्रकारेण विष्णोश्चतुर्भुजत्वं, शिवस्य त्र्यम्बकत्वं सिध्यति।

वैदिककालीनमूर्तयोऽधुना न प्राप्यन्ते। तेषां साहित्यिकवर्णनमात्रमेव तत्कालीनकलाप्रगतिं निदर्शयति। तस्मिन् युगे स्वर्णस्य मृत्तिकायाश्च

मानवमूर्तयः निर्मिताः।[१] तैत्तिरीयब्राह्मणानुसारं भारती, इडा, सरस्वती च पूज्या देव्यो मताः। पूजार्थं तासां स्वर्णमयी, मनोहारिणी च प्रतिकृतिः कारिता।[२]

स्वर्णैः नवतरस्य कल्याणतरस्य रूपस्य विधानं पेशस्कारीभिः कृतम्।[३]

## ऐतिहासिकमूर्तयः

ऐतिहासिकमूर्तीनां समारम्भः मौर्यकालादेव भवति। मौर्ययुगस्य सर्वोच्चादर्शाः अशोकस्तम्भानां शिरोभागे स्थापितासु पशुमूर्तिषु दृश्यन्ते। तासु सारनाथस्य पशुमूर्तयः सर्वोत्तमाः। अस्य स्तम्भस्य शिखरे धर्मचक्रं निर्मितमासीत्। इदं धर्मचक्रं चतुर्दिग्भागावलोकनपरायणानां चतुर्णां सिंहानामुपरि धृतमासीत्। 'धर्मस्तु लौकिकशक्तिमैश्वर्यं च नियमयति' इति धर्मचक्रस्य सर्वोच्चप्रतिष्ठा ध्वनयति। सिंहानामधः पार्श्वभागेषु चतुर्षु दिक्षु क्रमशः सिंहस्य हस्तिनः वृषभस्याश्वस्य च पराक्रमव्यञ्जका मूर्तयः वर्तन्ते। प्रत्येकमूर्त्या सहैवैकं धर्मचक्रं निर्मितम्।

अशोकयुगीनाया उपर्युक्तमूर्तिकलायाः सर्वोत्कृष्टत्वं प्रसिद्धमेव। मूर्तिषु स्वाभाविकताया ओजस्वितया सहापूर्व एव योगो दर्शनीयः। ईदृशाः स्तम्भाः दिल्ली-प्रयाग-रामपुरवा-लौरियानन्दनगढ़-साँचीषु विराजमानाः सन्ति। स्तम्भेषु अशोकस्य मानवोद्बोधकाः सन्देशाः उत्कीर्णाः।

मौर्यकालीनमानवमूर्तीनां परिचयः यक्षाणां प्रतिमाभिरेवावगम्यते। अस्य युगस्य यक्षाणां प्रधानमूर्तयः मथुराजनपदस्य परखमग्रामे, पाटलिपुत्रे च प्राप्यन्ते। कस्याश्चिद् यक्षिण्या मूर्तिः दीदारगंजे प्राप्यते। सर्वा यक्षमूर्तयोऽतिशयविशालाः सन्ति। भावाभिव्यञ्जनस्य प्रायः अभाव एव तासु मूर्तिषु दृश्यते। बुद्धस्य बोधिसत्त्वानां च परवर्तियुगीना मूर्तयः यक्षशैलीमेवानुसृत्य कृताः।

---

१. शतपथब्राह्मणे ७.४.१.१५

२. History of Dharmaśāstra Part II p. 707

३. बृहदारण्यकोपनिषदि ४.४.४

परवर्तियुगे खीष्टाब्दतः द्विशतकं प्रागेव भरहुत-साँची-स्तूपानां प्राकार-वेदिकादिषु तोरणेषु चासंख्यलघुमूर्तयः निर्मिताः। तत्र समकालीन-सामाजिकजीवनस्य दृश्यमुत्कीर्णम्। तथा हि—मनोरञ्जन-समाजोत्सव-युद्ध-हास्यादीनां निदर्शनं कृतम्, जातककथाश्चोत्कीर्णाः। अलङ्करणार्थं पशुपक्षिवृक्षलतादीनां मूर्तीनां देवप्रतिमानां च दृश्यं वर्तते। भरहुतस्य तक्षणे वटवृक्षस्य शरणे कस्यचिदृषेरध्यापनस्य दृश्यमुत्कीर्णम्। ऋषिरयं वेदपाठं सस्वरं कारयतीति स्वराणामङ्गुलिनिर्देशेन ज्ञायते। ब्रह्मचारिणां जटाः मुखमुद्राः वेशविन्यासश्च याथार्थ्येनोत्कीर्णाः। अस्य दृश्यस्याधो भागे—दीघतपसि सिसे अनुसासति—इति लिखितम्। मानवमूर्तिषु विशेषमेवाङ्गिकसौष्ठवं साँचीमूर्तिषु दृश्यते। क्वचित् श्रीलक्ष्मी-गजलक्ष्मी-मातृदेवीनां च मूर्तयः कारिताः।

साँची-भरहुत-बोधगयादीनां प्राचीनमूर्तिपटलेषु बुद्धचरितप्रकरणेऽपि बुद्धस्य मूर्तिः न कारिता। तद्यथा बुद्धजन्मदृश्ये बुद्धस्य माता वर्तते, किन्तु बुद्धः तत्र नास्ति। गृहत्यागदृश्ये अश्वस्तु वृक्षस्याधः तिष्ठति। देवाः अश्वस्य चरणानवलम्बन्ते, तत्रापि बुद्धः न वर्तते। धर्मचक्रप्रवर्तनदृश्ये गौतमस्याभिव्यक्तिः रिक्तासनेन धर्मचक्रेण च भवति। एषु दृश्येषु गौतमा-भावेऽपि तत्रत्यवातावरणं तस्य व्यक्तित्वेन परिव्याप्तं दर्शितम्।

## सातवाहन-मूर्तिकला

कृष्णानद्या उपवर्तिप्रदेशे अमरावतीजगय्यपेतनागार्जुनिकोण्डादिषु स्थानेषु स्तूपानां रचना खीष्टाब्दतः प्राक् प्रायः प्रथमशतके कृता। तेषु स्थानेषु प्रस्तरपट्टेषु या मूर्तयो वर्तन्ते ताः सर्वा अमरावतीकलाकेन्द्रे परिगणिताः। अमरावत्यां साँचीभरहुतादिस्थानेभ्यः सुशोभनतरा भावाभिव्यक्तिमयी सौष्ठवपूर्णा च मूर्तिकला दृश्यते। लतावृक्षाणां विशेषताः कमलखण्डानां तक्षणमतिशयमनोरमं प्रतिभाति। क्वचिद् बुद्धस्यापि साक्षात् मूर्तिः दृश्यते, किन्तु प्रायः स प्रतीकैरेवाभिव्यक्तः। नागार्जुनिकोण्डे गौतमस्य गृह-

परित्यागस्य तक्षणं तस्य युगस्यानुपमा रचना। सातवाहनकलायाः प्रभावः गुप्तकालीनकलाया उपरि दृष्टिगोचरो भवति।

ख्रीष्टाब्दतः प्राक् प्रथमशतकस्य मुद्राः अहिच्छत्रायां प्राप्ताः। तासु मुद्रासु विष्णोः, सूर्यस्य, इन्द्रस्य, पृथिव्याः, फल्गुन्याः, प्रजापतेश्चाकृतयः प्राप्यन्ते। अस्मिन् युगे विष्णोर्मूर्तीनां विशेषमाहात्म्यमासीत्। विदिशाया गरुडध्वजस्य स्तम्भोऽस्य युगस्य कलात्मकप्रवृत्तीनां स्मारक एवाधुनाऽपि प्रतिष्ठितः।

आन्ध्रवंशिनः राजानः मूर्तिकलाया अभ्युदयाय प्रयत्नशीला बभूवुः। कार्ले-कन्हेरी-भाजादिषु स्थानेषु तेषां शासनकाले गुहाः निर्मिताः। तासु गुहासु बहुविधानां मूर्तीनामलङ्करणार्थं प्रतिष्ठा कृता। तद्यथा—चैत्यगृहाणां द्वारेषु स्त्रीपुरुषाणां विशाला मूर्तयः वर्तन्ते। कार्लेचैत्यस्यान्तरभित्तिषु हस्तिनां पूर्णाकाराः मूर्तयो रचिताः। हस्तिनामुपरि नृत्यपरायणानां दम्पतीनां कलात्मकं तक्षणं विद्यते। चैत्यानां स्तम्भेषु जानुभ्यां प्रणतानां हस्त्यश्वव्याघ्रचित्रकादीनां मूर्तयः रचिताः। क्वचित्तपस्विनां मूर्तयः कारिताः।

पाण्डुलेनगुहासु अष्टभुजस्तम्भानामुपरि हस्तिवृषभाश्वादीनां मूर्तयः, कन्हेरीगुहासु सिंहस्तम्भौ, भाजागुहासु देवयात्रादृश्यतक्षणं बेडसागुहासु स्तम्भानामुपरि हस्त्यश्वादीनां मूर्तयः सुप्रसिद्धाः।

## कुशनयुगीना मूर्तिकला

ख्रीष्टाब्दस्यारम्भिकयुगादेव ब्राह्मणजैनबौद्धादिसंस्कृतीनामुन्नायकानां देवानां मनुष्याणां च मूर्तयः बहुशः प्राप्यन्ते। तासु मूर्तिषु बहुविधशोभन-दृश्यानां तक्षणमलङ्करणार्थं दृश्यते। अस्याः कलायाः प्रथमो विकासः पश्चिमोत्तरभारते गान्धारकेन्द्रात् तक्षशिलाकेन्द्रात् तथा उत्तरभारते मथुराकेन्द्रादभवत्।

गान्धारकलाकेन्द्रम्—तस्मिन्युगे गान्धारप्रदेशे राजकीयसंस्कृतिः वैदेशिकी ग्रीका वाऽभवत्। तस्मात्कालादारभ्य षट्शतपर्यन्तं अफगानिस्ताने,

भारतस्य पश्चिमोत्तरप्रान्ते च गान्धारकलायाः प्रसारो बभूव। गान्धारकलायाः वैशिष्ट्यं मूर्तिषु शारीरिकसौष्ठवमासीत्। तत्राध्यात्मिकभावानां व्यञ्जना सापेक्षतो न्यूनैव। गान्धारे वस्तूनां यथार्थं नयनाभिरामं च स्वरूपं मूर्तिकाराणां लक्ष्यमासीत्। भारतीयमूर्तयस्तु कलाकाराणां प्रतिभाया अभिनवोन्मेषस्य प्रदर्शनाय भवन्ति। मूर्तौ याथार्थ्याद् अधिकमहत्त्वपूर्णमेव भावानां रसानां चाभिव्यक्तिर्भवति। भारतीया मूर्तिशैली व्यञ्जनात्मिका भवति।

गान्धारकलाकेन्द्रे प्रथमं ग्रीकमूर्तिकारैः गौतमबुद्धस्य मूर्तयो रचिताः। प्रस्तरफलकेषु गौतमबुद्धस्य बोधिसत्त्वानां च चरितानि उत्कीर्णानि। तत्र बुद्धस्य श्मश्रु वैदेशिकवेशविन्यासश्च प्रदर्शिते।

**मथुराकलाकेन्द्रम्**—भारतीयमूर्तिशैल्याः विकासः उत्तरभारते मथुराकेन्द्रादभवत्। मथुरायामपि गौतमस्य बोधिसत्त्वानां च मूर्तयो निर्मिताः। ताः मूर्तयो गौतमबुद्धस्य व्यक्तित्वानुरूपाः भव्याः ध्यानावस्थितमुद्राभिव्यञ्जकाश्च वर्तन्ते। प्रायशो मूर्तयः पूजार्थं रचिताः। अतः ताभिः मूर्त्तिभिः तत्कालीनसमाजस्य भक्तिभावनाया अभिव्यक्तिर्भवति, अनेन प्रकारेण मूर्तिकलायाः भक्तिस्रोतसि परिशोधनमजायत।

बुद्धस्य मूर्तिषु महापुरुषलक्षणानि—उष्णीषोर्णालिम्बकर्णपाशजालाङ्गुलिहस्तचक्रादीनां लक्षणं विद्यते।

मथुराकेन्द्रस्य प्रभावः समग्रोत्तरभारते दृश्यते। मथुरायां विनिर्मिताः मूतर्यो बहुशः आदर्शरूपेण गृहीताः सूदूरस्थानेषु प्रतिष्ठिताः। अधुनाऽपि मथुरानिर्मितमूर्तयः सारनाथ-कौशाम्बी-श्रावस्ती-साँचीषु प्राप्यन्ते। तासां मूर्तीनामादर्शमनुकृत्य तेषु स्थानेषु बहवो मूर्तयः रचिताः। सारनाथस्य मथुरामूर्त्तिस्तु रक्तप्रस्तरेण निर्मिता। अस्यां मूर्तौ बुद्धस्य वेशविन्यासस्य रेखाङ्कनं प्राप्यते। बुद्धस्य शिरसः पश्चभागे प्रभामण्डलद्योतकं प्रस्तरफलकं वर्तते।

**सारनाथकलाकेन्द्रम्**—मथुराकलाकेन्द्रस्य मूर्तिषु आङ्गिकविन्यासे सपाटताऽवर्तत। सारनाथकेन्द्रस्य तत्कालीनमूर्तिषु अङ्गानां गोलत्वं

कोमलता कमनीयता च प्रदर्शितानि। मूर्तिषु हस्तपादयोः मानं यथार्थं कृतम्। मूर्तिषु वस्त्रतक्षणं पिनद्धविधिना कृतम्। अनेन प्रकारेणाङ्गिकसौष्ठवं प्रत्यक्षमेव भवति। गौतमस्य मूर्तिः त्रिचीवरैः परिवृता वर्तते।

बोधिसत्त्वानां वेशविन्यासः गृहस्थानामिव दृश्यते। क्वचित् जातक-कथानामपि तक्षणं दृश्यते। क्षान्तिवादजातकस्य तक्षणं सुमनोहरमेव। गौतमबुद्धस्य जीवनचर्याया अष्ट प्रमुखवृत्तान्ताः सारनाथकलायाः वैशिष्ट्यमेव।[1]

सारनाथकलाकेन्द्रस्य विकासोन्मुखप्रवृत्तिः सप्तमशताब्दपर्यन्ता दृश्यते। पश्चात् तत्रापि कलाशैल्यां शैथिल्यमजायत।

## गुप्तयुगीना मूर्तिकला

कुशनयुगीनमूर्तिषु विशालता स्थूलता च प्रभावोत्पत्तये बभूवतुः। गुप्तयुगे सौन्दर्यसर्जनाय तनुता, सूक्ष्मता, मधुरता च मूर्तिषु विशिष्टा दृश्यन्ते। मूर्तयस्तु रमणीया सरसाश्च प्रतिभान्ति। अस्य युगस्याराध्यदेवाः—तीर्थङ्कराः, बुद्धः, बोधिसत्त्वाः, शिवः, विष्णुश्च बभूवुः। तेषामुच्चत्वानुरूपा मूर्तिकला प्रवृत्ता।

चतुर्थशतके उत्तरभारते मथुराकलाकेन्द्रानुरूपं मूर्तयः कसिया-बोधगया-सारनाथादिषु स्थानेषु निर्मिताः। अस्य युगस्य सर्वप्रथममूर्तिः बोधगयायां प्राप्ता बोधिसत्त्वस्य प्रतिमा वर्तते। अपरं च त्रिनेत्रशिवस्य कतिपयमूर्तयः प्राप्ताः। आसु मूर्तिषु आङ्गिकविन्यासः सुसंयतः सौष्ठवपूर्णश्च विद्यते।

### सारनाथकलाकेन्द्रम्

सारनाथकलाकेन्द्रस्य मूर्तयः बुद्धस्य बोधिसत्त्वानां कार्तिकेयादि-पौराणिकदेवानां च वर्तन्ते। आसु सर्वासु मूर्तिषु मनोभावानामाध्यात्मिक-वृत्तीनां चाभिव्यक्तये नेत्रहस्तपादशिरसां मुद्रा प्रयुक्ता। अनेन प्रकारेण-

---

१. अष्टवृत्तान्ताः—जन्म मारप्रलोभनं धर्मचक्रप्रवर्तनं, महापरिनिर्वाणं स्वर्गावतरणं पारिलेय्यके वानरेण गौतमस्य पारणाविधानं नाडागिरिहस्तिनो विनयनमेकस्मिन्क्षणे विभिन्नस्थानेषु धर्मोपदेशाश्च।

न्तरबाह्ययोरेकरूपतायाः प्रदर्शनस्य प्रयासः सफल एव। सारनाथस्य धर्मचक्रप्रवर्तकस्य गौतमस्य मूर्तिरस्य वैशिष्ट्यस्य प्रतिनिधित्वं करोति। अस्यां मूर्तौ गौतमो ध्यानावस्थितः आसने उपविष्टः। तस्य हस्तौ अभयस्य शान्तेश्च व्यंजनां कुर्वन्तौ एव नाभिप्रदेशादुपरि स्थितौ। तस्य पादौ पद्मासनमुद्रायां वर्तेते। पार्श्वभागे गौतमस्य प्रथमपंचशिष्याः सन्ति येषां समक्षं धर्मचक्रप्रवर्तनं कृतम्। सारनाथकलाकेन्द्रस्य प्रभावः सारनाथसंग्रहालयस्य लोकेश्वरशिवस्य मूर्तौ, नागोद जनपदस्य खोहस्थानस्यैकमुखलिङ्गमूर्तौ, वेसनगरस्य मकरवाहिन्याः गङ्गाया मूर्तौ, भूमरायां महिषमर्दिन्याः दुर्गायाः शिवस्य च मूर्तौ, देवगढस्यानन्तशायिनः विष्णोः मूर्तौ च परिलक्षितः।

वेत्रवतीनद्याः तटे झाँसीजनपदे गुप्तयुगीनस्य दशावतारदेवालयस्य द्वारतोरणे लतापत्रादीनामलङ्करणस्य, पार्श्वस्तम्भयोः प्रतिहारिणां प्रमथदम्पतीनां मङ्गलकलशादीनां च तक्षणं मनोरममेव। स्तम्भेषु गङ्गायमुनयोः तक्षणं तस्मात्कालादेव विशेषरूपेण प्रचलितम्। मन्दिरभित्तीनां बाह्यतलानामुपरि नरनारायणयोः तपसः, शेषनागस्योपरि विष्णोः शयनस्य, गजेन्द्रोद्धारस्य च मनोरमदृश्यानि तष्टानि। देवगढस्य देवक्या वसुदेवाय शिशुसमर्पणमद्वितीयमेव कृष्णजन्मनः तक्षणं प्रस्तौति। तत्रत्यासु सर्वासु मूर्तिषु आध्यात्मिकता, आङ्गिकचारुता, भावाभिव्यक्तिश्च लोकोत्तरा एव।

ख्रीष्टाब्दस्य पञ्चमे शतके विदिशापार्श्वे उदयगिरेः पञ्चमगुहायां वराहेण पृथिव्या उद्धरणमुत्कीर्णम्। अनुपमेया तस्य युगस्य कलाकृतिः। अस्मिन् दृश्ये वराहस्य शरीरं मानवसमानं शिरस्तु शूकरवद्विद्यते। वराहस्य वामपादः शेषनागस्य मण्डलेषु स्थितः। वराहस्याङ्गिकविन्यासैः तस्य स्फूर्तिः कर्मण्यता बलशालिताश्च प्रकटिताः। वराहः स्वदक्षिणदंष्ट्रया नारीरूपिणीं पृथिवीम् उन्नयति। समुद्रस्याभिव्यक्तिः गुहायाः भित्तितले ऊर्मिमयतरङ्गितरेखाभिः कृता। वराहस्य वामपार्श्वेऽप्सरसः दक्षिणे चतस्रो

देवश्रेणयः—ब्रह्मशिवादयो वर्तन्ते। असुरा ऋषयश्च दर्शका एव तष्टाः। अन्यतो गङ्गाया यमुनायाश्चावतरणादृश्यमुत्कीर्णम्। नद्यौ वराहस्याभिषेकार्थं कलशहस्ते वर्तेते। वरुणदेवोऽपि कलशहस्तः जानुदघ्ने जले तिष्ठति। अनेन मूर्तिदर्शनेन लोककल्याणस्य भावना सञ्जायते। सर्वत्र समरसतायाः सहानुभूतेश्चाभिव्यक्तिर्भवति।

## प्राच्यमूर्तिकला

प्राच्यप्रदेशानां वङ्गादीनां मूर्तिभिः आध्यात्मिकभावानामभिव्यक्तिः साफल्येन कृता। तत्र मूर्तीनां स्वरूपं सरसं प्रदर्शितम्। मूर्तीनां विशालत्वं सुविशिष्टमेव प्रतिभाति।[१] नालन्दायाः सुल्तानगंजस्य च मूर्तयः मथुराकलाकेन्द्रस्य परिधाने न्युषिताः प्रदर्शिताः। दहपर्वतिकायां प्राप्तानां गङ्गायमुनयोः मूर्तीनां परिधानं सारनाथस्य कलाकेन्द्रमनुकरोति।

## दाक्षिणात्यमूर्तिकला

गुप्तयुगस्य षष्ठशतके एहोलस्थानस्य शिलाफलकेषु अनन्तविष्णुप्रमुखानां देवानां मूर्तिषु आङ्गिकसौष्ठवं सन्तुलनं प्रशान्तत्वं च व्यक्तान्येव, किन्तु तत्राध्यात्मिकताया अभिव्यक्तिः प्रायः नैव विद्यते। अङ्गेषु सुकुमारता विनिविष्टा वर्तते। तत्कालीनासु कन्हेरी-अजन्तादीनां मूर्तिषु रसभावादीनामभिव्यक्तिः न दृश्यते। मूर्तिषु बलशालिता प्रधानत्वेन प्रतिभाति, किन्तु तस्याः कोऽपि प्रासङ्गिकगुणो न लक्ष्यते।

दक्षिणभारते षष्ठशतके बादामी-पारेलादिषु स्थानेषु पूर्ववर्तिनां कार्लीभाजादीनां मूर्तीनां कलायाः विकासः परिलक्ष्यते। पारेले शिलापट्टेषु विशालमूर्तीनां तक्षणं कृतम्। मूर्तयः ध्यानमुद्रासु सन्निविष्टाः। ताभ्यो मूर्तिभ्यः ओजस्वितायाः समाधेश्च व्यञ्जनं स्पष्टमेव भवति। बादामीगुहासु

---

१—ईदृश्यो मूर्तयः नालन्दायां सुल्तानगंजे च प्राप्यन्ते। ह्वेनसाङ्गानुसारं नालन्दायां बुद्धस्य २५३ हस्तोच्छ्रायोपेताऽवर्तत। सुल्तानगंजे प्राप्ता मूर्तिः ५ हस्तोच्छ्रायोपेताऽस्ति।

पारेलवत् मूर्तिभिः शारीरिकसंस्थानं शक्तिः गरिमा च व्यज्यन्ते। तस्य युगस्य कार्यपरायणता मूर्तिषु व्यक्ता भवति।

गुप्तयुगीनमूर्तिकलाया विकासः खीष्टाब्दस्य सप्तमशतकपर्यन्तमेवाभवत्। तस्मात् कालादारभ्य गुप्तकालीनप्रतिभाया ह्रासः समारब्धः। उत्तरे भारते सारनाथे नालन्दायां च मूर्तीनां निर्माणं पूर्ववत् प्रावर्तत। आभिः नवीनमूर्तिभिः जीवनस्य क्रियात्मकशक्तीनामभिव्यक्तिर्न भवति। तासु मूर्तिषु कलात्मकस्पन्दनस्याभावो वर्तते। गुप्तयुगीनकलाया ह्रासोन्मुखप्रवृत्तीनामाभासः साधारणतः सर्वासु मूर्तिषु प्राप्यते। किन्तु तत्रापि क्वचित् कतिपयविशिष्टमूर्तयो निर्मिताः दृश्यन्ते, याभिः गुप्तयुगीनमूर्तिकलाया उत्कृष्टत्वं व्यक्तं भवत्येव। तद्यथा पहाड़पुरस्य कृष्णलीलाया मूर्तयः सन्ति। अस्यां मूर्तौ राधाकृष्णयोः प्रेमालापः, धेनुकवधश्च रमणीयौ। मालवप्रदेशस्य साँचीस्थानस्यावलोकितेश्वरमूर्तिः सौन्दर्यविशिष्टा वर्तते। दक्षिणभारते ह्रासयुगस्य मूर्तिकलाकेन्द्राणि—एलौरा (वेरुल)—पट्टडकल-औरङ्गाबाद-धारापुरी (एलिफैण्टा) स्थानेषु बभूवुः।

एलौरास्थानस्य पूर्णाकारमूर्तयोऽतिशयमनोहारिण्य एव। तद्यथा—पार्वतीपरमेश्वराभ्यामध्यासितं कैलासं रावणः दोलायमानं करोतीति दृश्यस्य तत्त्वणमपूर्वमेव प्रतिभाति।

पल्लवकलाकेन्द्रस्योपर्युक्तयुगस्य मूर्तयः पट्टडकल-महाबलिपुर-काञ्चीपुरादिषु स्थानेषु वर्तन्ते। अस्य केन्द्रस्य वैशिष्ट्यमाङ्गिकतनुता सुकुमारता चास्ति। भावाभिव्यक्तिश्च मूर्तिषु दृश्यते। पट्टडकलस्य विरूपाक्षमन्दिरस्य दार्शनिकाभिव्यक्तिरनुपमैव वर्तते। विरूपाक्षमूर्त्यां मानवतायै विश्वात्मकदिव्यतायाः सन्देशः प्रस्तुतो दृश्यते। शिवमन्दिरस्य समक्षं ब्रह्मणः मूर्तिः वर्तते। तस्याः समीपं शिववाहनस्य नन्दिनः मूर्तिरस्ति।

भारतीयमूर्तिषु ओजस्वितायाः विशालतायाः अध्यवसायितायाश्चाभिव्यक्तेः सर्वोच्चविकासः एलिफैण्टा-मूर्तिषु परिलक्ष्यते। तत्रत्यकतिपयमूर्तिषु तपःसमुद्भूतानां शक्तीनां प्रत्यक्षीकरणं सम्भावितम्। शिवस्य

त्रिमूर्तिः, ताण्डवनृत्यमूर्तिः, पार्वतीपरिणयमूर्तिश्च परममनोहारिण्यः प्रभावशालिन्यश्च दृश्यन्ते। तत्र मूर्तिकलायाः साफल्यं सुनिश्चितमेव।

ख्रीष्टाब्दस्य सप्तमशतके पल्लवकलाकेन्द्रान्तर्गतमहाबलिपुरस्य मूर्तिकला समग्रभारतस्य मूर्तिकलायाः सर्वोच्चगुणानां प्रतिनिधित्वं करोति। कलायाः पूर्ववर्तिनीनां सर्वासामनुभूतीनां प्रेरणानां च समाहारस्तत्रैव दृश्यते। गङ्गावतरणस्य दृश्यं प्राकृतिकरमणीयताया मध्ये तत्रातिशयं प्रभावोत्पादकमेव। स्वर्गस्य मर्त्यलोकस्य चासंख्यानां लौकिकानामलौकिकानां च मनोरमवस्तूनां सङ्ग्रहणं मूर्तिमाध्यमेन तत्र कृतम्। गङ्गायाः तटीयदृश्यानि विशेषरमणीयानि तथा नैसर्गिकच्छटासम्पन्नानि प्रतिभान्ति। पशूनां मूर्तयः सजीवा एव। गङ्गावतरणस्य दृश्यमिदं ६५ × २८ वर्गहस्तविस्तृतशिलापट्टके तष्टम्। तपस्विनो भगीरथस्य शरीरं तपसा कार्श्यप्रपन्नमेव। भगीरथेन सह सहानुभूतौ देवाः पशवोऽपि तपसि संलग्ना दर्शिताः। इदं दृश्यं मानवहृदयं तपोमयसाधनायै सहसा प्रोत्साहितं करोति। समन्ततः औदार्यमेव प्रवर्तते।

महाबलिपुरे उपसमुद्रं पर्वतं तष्ट्वा सप्तमन्दिराणां निर्माणं कृतम्। तत्र महिषमण्डपे शेषशायिनः विष्णोर्मूर्त्तिः वर्तते। पार्श्वे एव महिषासुरेण सह युध्यमानायाः दुर्गायाः मूर्तिः वर्तते। कृष्णगुहायां कृष्णस्य गोवर्धनधारणं गोदोहनं च प्रदर्शितम्। अष्टमशतकस्य काञ्चीपुरस्य कैलाशनाथमन्दिरस्य मूर्तयः महाबलिपुरानुरूपा एव।

परवर्तियुगे ख्रीष्टाब्दस्य नवमशतकादारभ्य भारतीयमूर्तिकलायाः कोऽपि विशिष्टविकासो न परिलक्ष्यते, यद्यपि प्रायः सदैव सर्वत्र च मूर्तीनां निर्माणमभवत्। मूर्तिनिर्माणस्य षट् प्रधानकेन्द्राणि बभूवुः—उत्कलप्रदेशे (पुरी, भुवनेश्वरः, कोणार्कश्च), बङ्ग-विहारे, बुन्देलखण्डे (खजुराहो), मालवप्रदेशे, गुर्जर-राजस्थानयोः, तामिलप्रदेशे च।

उत्कलकेन्द्रम्

भुवनेश्वरस्य लिङ्गराजमन्दिरस्य निर्माणं ख्रीष्टाब्दतः दशमे शतके-

ऽभवत्। मन्दिरभित्तीनां बाह्यतलेषु पशुपक्षिणां मानवानां च भव्याः मूर्तयो निर्मिताः। तत्र हस्त्यश्वहरिणसिंहादयः पूर्णाकाराः क्वचित् सजीवा एव दृश्यन्ते। मूर्तीनां पार्श्वभूमिः लतापत्रादीनामलङ्करणैः शोभते। गौरीविमाने पार्वत्या मूर्तिः विविधाभरणैरलंकृता दृश्यते। अन्यत्र रामायण-महाभारतादीनां कथादृश्यानि तष्टानि। पाण्डवानां स्वर्गारोहणदृश्यं मनोरमं भाति। जगन्नाथमन्दिरे जगन्नाथस्य कृष्णस्य सुभद्रायाः बलरामस्य च मूर्तयः प्रतिष्ठिताः। तत्रैव रामकृष्णयोः चरितावली—कालिय-दमनं गोवर्धनधारणं गोपालनं रामरावणयुद्धं च मूर्तिभिः निदर्शितम्। भित्तीनामालयेषु वामन-वराह-नृसिंहादीनामवताराणां मूर्तयः प्रतिष्ठिताः। कोणार्कमन्दिरस्य गर्भगृहस्य निम्नभागे हस्तिनां लघुमूर्तयो निर्मिताः। अस्मिन् मन्दिरे प्रधानतः अर्कस्य (सूर्यस्य) मूर्तिः प्रतिष्ठिता। मन्दिरस्य प्रतिष्ठा चतुर्विंशतिचक्रवतः रथस्योपरि कृता। चक्रेषु सर्वत्र मूर्तीनां लता-पत्रादीनां चालङ्करणं विद्यते।

उपर्युक्तेषु सर्वेषु मन्दिरेषु शृङ्गाराभिनिविष्टानां मूर्तीनामाधिक्यं वर्तते। तत् सर्वमश्लीलमेव।

**बुन्देलखण्डकेन्द्रम्**

खजुराहो-स्थाने हिन्दूनां जैनानां च बहूनि मन्दिराणि वर्तन्ते। तत्र कण्डरियामहादेवस्य मन्दिरे निर्मितानां मूर्तीनां कलासौन्दर्यं श्रेष्ठमेव। मन्दिरस्य गर्भगृहे, अन्तराले, महामण्डपे, मण्डपे, अर्धमण्डपे च प्रायः सर्वत्र बाह्यभागे अन्तरभागे वा मूर्तितक्षणकर्म सुशोभनं दृश्यते। नात्र किमपि स्थानं तत्रेदृशममूर्तं विद्यते यत्र मूर्त्तिरचना सम्भवेत्। प्रवेशस्थाने कामशास्त्रसम्बद्धानां मूर्तीनां करणं सर्वत्र कामस्य प्रभावं प्रदर्शयति। अस्मात् कामस्थानादुपरि गत्वैव देवदर्शनं दिव्यजीवनं वा प्रत्यक्षं भवति। गर्भगृहस्य प्रवेशद्वारस्य तोरणे देवतानां गन्धर्वकिन्नराणां तक्षणं विद्यते। गर्भगृहस्य प्रवेशद्वारे ध्यानावस्थितानां मुनीनां योगिनां च मूतर्यः प्रतिष्ठिताः। पार्श्व-स्तम्भेषु गङ्गायमुनयोः दर्शनं भवति। स्तम्भानामालयेषु त्रिदेवानां तेषामव-

ताराणां च मूर्तयो वर्तन्ते। क्वचिदप्सरसां किन्नरादीनां नृत्यं प्रदर्शितम्। लक्ष्मणमन्दिरस्यैकस्मिन् तक्षणे आचार्यकुलस्य स्वरूपं तष्टम्। तत्राचार्य परितः ब्रह्मचारिणो जिज्ञासुमुद्रायामुपविष्टाः। तत्र विष्णोः त्रिमुखचतुर्भुजमूर्तिः प्रतिष्ठिता। अस्य मन्दिरस्य द्वारस्थले समुद्रमन्थनमुत्कीर्णम्। मतङ्गेश्वरमन्दिरस्य समक्षं वराहस्य दंष्ट्रायां पृथिव्याः प्रतिष्ठा कृताऽऽसीत्।

खजुराहोकलायाः मूर्तिकलावैचित्र्यं एकया मूर्त्या द्विभावानां प्रदर्शनस्य शैल्या सिध्यति। क्वचित् मल्लयुद्धस्यान्यत्र मिथुनानामालिङ्गनस्य दृश्यमपूर्वमेव कालान्तरस्य द्विभावानां प्रदर्शनेन सञ्जातम्।

राजस्थानकेन्द्रम्

आबूपर्वते खीष्टाब्दतः क्रमशः एकादशे त्रयोदशे च शतके विमलशाहेन तेजपालेन च निर्मापिते मन्दिरे तत्कालीनमूर्तिकलाया भव्य आदर्शः प्रस्तुतः। मन्दिरयोः प्रधानतः आदिनाथस्थ मूर्तेः प्रतिष्ठा कृता। प्रवेशद्वारस्य समीपं दशगजेन्द्राणां मर्मरोत्पलमूर्तयो निर्मिताः। अन्तःपटलेऽपि मनोरमाः मानवमूर्तयो निर्मिताः। स्तम्भानामलङ्करणं नरनारीणां मूर्तिभिः कृतम्। मण्डपं परितः द्विपञ्चाशत्कोष्ठेषु जैनदेवानां मूर्तयः प्रतिष्ठिताः। तीर्थङ्कराणां मूर्तिषु शान्तिरसस्य विरागस्य चाभिव्यक्तिः कारिता।

गुर्जरप्रदेशे सोमनाथमन्दिरे शिवादीनां देवानां मूर्तयः प्रतिष्ठिताः। तत्रत्यमूर्तीनां प्रायः ध्वंस एव विधर्मिभिः कृतः। प्राचीनयुगस्य कतिपयावशेषा अधुनाऽपि प्राप्यन्ते। तेषु रामायणकथाया दृश्यानि मनोरमाणि वर्तन्ते।

तामिलकेन्द्रम्

दक्षिणभारते राजकीयाश्रयेऽसंख्यानां मन्दिराणां निर्माणमभवत्। तत्र मैसूरराज्ये हलवीदस्य (दोरसमुद्रस्य) मन्दिरं द्वादशे शतके रचितम्। अस्य मन्दिरस्य क्रमशः उपर्युपरि शिलापट्टकेषु २००० हस्तिनां सिंहानामश्वानां पत्रपुष्पलतादीनां च तक्षणं दृश्यते। उपरिभागे ४६० हस्तायामपट्टके रामस्य लङ्काविजयस्य दृश्यं तष्टम्। सर्वोच्चे भागे स्वर्गस्य

पशुपक्षिणां मानवजीवनसम्बन्धिनां दृश्यानि रचितानि। इमानि सर्वाणि दृश्यानि प्रस्तरफलकेषु महाकाव्यवत् प्रतिभान्ति।

दक्षिणभारते चिदम्बरस्य नटराजमन्दिरं मूर्तिकलायाः प्रथमादर्श एव। तत्र नृत्यमयीनां मूर्तीनां प्राचुर्यं वर्तते। तासां दर्शने निमग्नो रसिकः स्वयमेव शिवनर्तनलीलायां विलीनो भवति। नटराजमन्दिरस्य चतुःषु गोपुरेषु, ततः गर्भगृहपर्यन्तभित्तिषु च नाट्यशास्त्रानुरूपाणां नृत्यभावानां तक्षणं विद्यते। तद्यथा नाट्यशास्त्रस्य ताण्डवलक्षणप्रकरणस्य १०८ करणानां प्रदर्शनं गोपुरे कृतम्। नाट्यशास्त्रस्यानुषङ्गिकश्लोका अपि तत्र उत्कीर्णाः। गोपुराणां निर्माणं चोलवंशीयैः पल्लववंशीयैः राजभिः कृतम्।

## मृण्मयमूर्तयः

सिन्धुसभ्यतायुगीनाः मृणमयमूर्तयोऽन्योपादानकृतमूर्तिभ्योऽधिका एव। तत्र मृत्तिकायाः सुलभत्वं रूपनिर्माणक्षमत्वं च कारणं दृश्यते। मूर्तिकलाया अभ्यासार्थं प्रारम्भे मृणमयमूर्तीनां रचना कृतेति निश्चितं प्रतिभाति।

सिन्धुसभ्यतायाः मृणमयमूर्तिषु क्रीडनकानां बाहुल्यं वर्तते। तत्र मनुष्याणां देवतानां पशुपक्षिणां फलानां च मूर्तयो वर्तन्ते। नर्तकीनामपि कतिपयमूर्तयः सन्ति। मूर्तिषु वस्त्रविन्यासोऽलङ्करणं च कृते। साधारणतः क्रीडनकानां रञ्जनमग्नौ पाकात् प्रागेव कृतम्। पाकात् पश्चादपि रञ्जनं कृतम्।

सिन्धुसभ्यतायाः पश्चात् २००० वर्षपर्यन्तं मूर्तिकलायाः विकासोऽधुनापि न सुविनिश्चितः। अतः परं प्रथमं मौर्ययुगीनाः मूर्तयः प्राप्यन्ते। तत्र कतिपयनारीमूर्तयः सिन्धुपरम्पराया अनुकरणमेव द्योतयन्ति। ख्रीष्टाब्दतः प्राक् द्वितीयशतकादारभ्य मृणमयमूर्तीनां निर्माणस्य परम्परा सदैव प्रचलिता दृश्यते। ततः मथुरा-अहिच्छत्रा-कोसम-पटनादिषु स्थानेषु साँचीपरम्परायाः बहवो मूर्तयः प्राप्यन्ते। एषु स्थानेषु प्रधानतः लोकव्यवहारेषु मनोरञ्जन-प्रसाधनादिकर्मसु व्यापृतानां नरनारीणां मूर्तयः प्रायः रचिताः। प्रयागस्य समीपं कोसमस्थानस्य शृङ्गारमयदम्पत्योः मूर्तिः भावा-

भिव्यञ्जिका मनोरमा चास्ति। श्रीदेव्याः मूर्तिः सौष्ठवमलङ्करणं च प्रभावोत्पादकमेव। अस्य युगस्य पटनास्थानस्य हास्यप्रवणानां बालकानां मूतर्यः बहुसंख्यका एव।

कुशनयुगस्य मूर्तयोऽहिच्छत्रायां प्राप्यन्ते। न ता मूर्तयः कलादृष्ट्या उच्चकोटिकाः।

गुप्तकालीनमृण्मयमूर्तीनां कला समुन्नता दृश्यते। मृण्मयेष्टकासु मूर्तीनामभिनिवेशः वर्तते। भवनानां निर्माणं ताभिरिष्टकाभिः कृतम्। ईदृशानि मन्दिराणि कानपुरप्रदेशे भीतरग्रामे रायपुरप्रदेशे सिरपुरग्रामे च वर्तन्ते। इष्टकानां परिधिषु संलग्नानां पत्रपुष्पादीनामलङ्करणं मनोरममेव।

## मूर्तीनां लोकोपयोगिता:

मूर्तीनां प्रथमोपयोगः सिन्धुसभ्यतायां धार्मिकविधानेषु दृश्यते। सर्वोच्चमूर्तिकला तत्र धर्मप्रवणासु मूर्तिषु विकसितेति निश्चितमेव। अपरं च मूर्तीनामुपयोगः प्रदर्शनार्थं मनोरञ्जनार्थं बालकानां क्रीडनार्थं चाभवत्। कलाभिव्यक्तिः नर्तकीनां सुन्दरीणां वा मूर्तिषु सविशेषमभवत्।

वैदिकयुगेऽभिचारार्थं कृत्यादीनां नायकनायिकादीनां च मूर्तीनां प्रयोगः कृतः। प्रवासे मृतानामग्निहोत्रिणामग्निहोत्रविधाने मानवाकृतिः रचिता।[१] अग्निवेदिकानिर्माणे प्रजापतेः पुरुषरूपा स्वर्णमूर्तिः प्रतिष्ठापिता।[२]

महाभारतानुसारं स्वर्णहस्तिनः दाने प्रदत्ताः।[३] अश्वमेधयज्ञेऽग्निचयनाय गरुडाकृतिः रचिता।[४] कात्यायनश्रौतसूत्रानुसारं स्वर्णस्य मृत्तिकाया वा मानवाश्ववृषमेषाजादीनां मूर्तयोऽग्निचयनस्य वेदिकायां प्रयुक्ताः।[५] आपस्तम्बश्रौतसूत्रानुसारं याज्ञिकप्रक्रियासु यवेन मेषाणां मूर्तयः कृताः।[६]

उपर्युक्तैः मूर्तीनां धार्मिकाभिनिवेशैः स्पष्टं भवति यत् प्राचीनयुगे मूर्तिकला मानवानामुच्चतमजीवनादर्शैः सम्बद्धा बभूव।

---

१. ऐतरेयब्राह्मणे ७.२.२
२. शतपथब्राह्मणे ७.४.१.१५
३. शान्तिपर्वणि २६.७३
४. आश्वमेधिकपर्वणि ८८.३२
५. का. १६.१.३२
६. आ. ८.५.३७

पौराणिकयुगेऽपि पुण्यार्थं देवानां पशुपक्षिणां च मूर्तयो दाने प्रदत्ताः। तद्यथा मार्गशीर्षमासस्य तृतीयायां शिवस्य धर्मराजस्य च मूर्तयः, फलानां स्वर्णिकाः राजता वा मूर्तयः ब्राह्मणेभ्यः पुण्यार्थं प्रदत्ताः।[१] शातातपानुसारं शर्करा-तिलघृतादिभिः निर्मिताः गावः ब्राह्मणेभ्यः प्रदत्ताः।[२] मरणकाले राजानः मानवानां स्वर्णमूर्तीः प्रददुः।[३]

महाभारतानुसारं मूर्तीनामुपयोगोऽस्त्राभ्यासार्थमपि कृतः। धनुर्विद्यायाः सार्वजनिकप्रदर्शनार्थं वृक्षस्योपरि गृध्रस्य मूर्तिः प्रतिष्ठापिता। तस्य शिरः लक्ष्यीकृतम् तत्र। लौहशूकरा अपि बाणैः वेधनार्थं प्रतिष्ठापिताः। स्वयंवरेषु वीराणां धनुर्विद्यापरीक्षणार्थं मत्स्यादीनां मूर्तेः नेत्रं लक्ष्यीकृतम्।

महाभारतकाले युद्धकाले वीराणां ध्वजेषु विविधपशुपक्षिणां वृक्षाणां वा मूर्तयः प्रतिष्ठापिताः।[४] धनुष्पीठे सिंहहस्तिसूर्यशलभादीनां प्रतिमाः उत्कीर्णाः।[५] ग्रीकविदुषां लेखैः प्रमाणितं भवति यत् दिव्यवीराणां मूर्तयो युद्धस्थले सेनायाः पुरतः प्रोत्साहनार्थं प्रतिष्ठापिताः। युद्धेषु वीराणां पराक्रमगाथाः ताम्रपत्रेषूत्कीर्णाः।[६]

विवाहयोग्यं वरं वधूं वा प्राप्तुं मूर्तिकलाया उपयोगः समृद्धिशालिनः कुर्वन्ति स्मेति जातककथाभिः प्रतिपादितम्। आदर्शवध्वाः मूर्तिं रचयित्वा जना तस्याः प्रदर्शनं देशे विदेशे च कारयन्ति स्म।[७]

मूर्तिकला राष्ट्रस्य चारित्रिक-विकासाय महाराजेनाशोकेनोपयुक्ता। स स्तम्भानां शिरोभागे सिंहानां प्रतिष्ठां कारयित्वा तेषामुपरि धर्मचक्रस्य प्रतिष्ठापनेन धर्मस्य सर्वोच्चतां प्रमाणितवान्। परवर्तियुगीनैः बहुभिः राजभिरशोकस्यादर्शः स्वीकृतः।

राजप्रासादानां स्तम्भेषु स्त्रीणां मूर्तयोऽलङ्करणार्थं प्रतिष्ठापिताः। तासां

---

१. मत्स्यपुराणे ८६ अध्यायतः २. शातातपस्मृतौ २.३८-३६
३. तत्रैव ३.३३ ४. द्रोणपर्वणि १०५ अध्यायतः, भीष्मपर्वणि ४०.५०, ४७.८,५४.६८ ५. विराटपर्वणि ४२.२-८ ६. Mc Crindle Ancient India P.122 ७. उदयजातके ४५८, कुशजातके ५३१

स्त्रीणां कृते स्तनोत्तरीयस्य परिधानं कृतम्।[1] राजानः पूर्वजानां मूर्तीः ते मन्दिरेषु प्रतिष्ठापितवन्तः।[2]

बाणानुसारं राजकीयजलाशयेषु स्वर्णेन निर्मिताः कमलिनी-मयूर-हस्तिमूर्तयः प्रतिष्ठापिताः। कृत्रिमवृक्षाः निर्मिताः। राजकुमारीणां विवाह-काले माङ्गलिकालङ्करणार्थं कच्छप-मकर-नारिकेल-कदली-तमालादीनां मूर्तयः रचिताः।[3] कृत्रिमकमलिनीमध्ये यन्त्रचक्रवाकमिथुनानि संचरन्ति स्म।[4]

प्रायः सदैव मूर्तिमाध्यमेन देवानां वीराणां महर्षीणां च चरितगाथाः समाजस्य समक्षं प्रस्तुताः। तद्यथा मन्दिराणां विशालशिलासु रामायण-महाभारतपुराणेतिहासादीनां कथा उत्कीर्णाः। इमा उत्कीर्णाः कथाः प्रत्यक्षदर्शनेन सविशेषं प्रभावोत्पादिका बभूवुः। नृत्यकलादीनां शिक्षणस्यायोजनं चिदम्बरमन्दिरभित्तिमूर्तिभिः कृतमिति प्रागेव निगदितम्।

मुद्रानिर्माणार्थं मूर्तिकलायाः प्रचलनं सिन्धुसभ्यतायुगात् प्रभृति प्रवर्तितं दृश्यते।

## मूर्तिकलायाः विदेशेषु प्रसारः

भारतीयधर्मैः सह मूर्तिकलायाः प्रसारः विदेशेषु बभूव। तिब्बत-चीन-जापान-इण्डोनेशिया-पूर्वीद्वीपसमूह-कम्बोडिया-ब्रह्मा-लङ्कादिषु देशेषु प्रायशः वैदिकधर्मस्य बौद्धधर्मस्य चानुयायिनः प्राचीनयुगे भारते निर्मिताः मूर्तीः प्रतिष्ठापयामासुः, अथवा भारतीयमूर्तिशैलीमनुसृत्य स्वदेशे मूर्ति-केन्द्राणि संचालितवन्तः। ख्रीष्टस्य प्रथमशतके निर्मिताया लक्ष्म्याः हस्ति-दन्तमूर्तिः पाम्पिआईनगरे प्राप्तेति सूदूरप्राचीनयुगे भारतीयमूर्तीनां विदेशेषु गमनमेव प्रमाणयति। विदेशयात्रिणः भारतीयमूर्तीनां संग्रहमपि कर्तव्य-ममन्यन्त। ते स्वदेशगमनकाले भारतीयमूर्तीः नयन्ति स्म।

---

१. रघुवंशे १६.१७ २. H.C. Ray Chaudhary-Political History of India p. 517 ३. कादम्बर्यां पृ० २१६,१८४
४. तत्रैव पृ० १८४

# वास्तुकला

आत्मरक्षार्थं गृहनिर्माणस्य प्रचलनं मानवसंस्कृतेः प्रारम्भात् समभवत्, इति सुनिश्चितम्। तद्यथा—साधारणपशुपक्षिणोऽपि स्वाभाविक-प्रवृत्त्यैव मनोरमं गृहं रचयन्तो दृश्यन्ते। मानवोऽपि सुदूरप्राचीनकालेऽपि मनोरमं गृहं प्राकृतिकैरुपादानैः सहजविधिना रचितवान्। स्वभावतः मानवानां गृहाणि देशकालोपादानादीनां वैविध्यानुकूलं विविधप्रकाराणि बभूवुः। पर्वतप्रदेशवासिनः सिंहानुसरणं कृत्वा गुहामेव गृहशैलीं शोभनाममन्यन्त। वनवासिनस्तु सरलतया काष्ठपर्णादीनां संयोजनेन पर्णकुटीं कृतवन्तः। समतलप्रदेशे मृत्तिकागृहाणामाविष्करणं सरलमेवाभवत्। ईदृशानां बहुविध-गृहाणां निर्माणशैली शनैः शनैः कलापूर्णाऽभवत्। तदधुनाऽपि वनवासिनां पर्वतगुहासु प्रस्तरयुगीनानि चित्राणि प्राप्यन्ते। काष्ठगृहाणि, मृत्तिकागृहाणि च कालक्रममक्षममाणानि प्राचीनयुगे एव ध्वस्तानि।

## सिन्धुसभ्यतायाः वास्तूनि

पंचसहस्रवर्षाणि प्राङ्मानवानां गृहाणां सुव्यवस्थितरूपरेखा सिन्धु-प्रदेशेऽभवदिति तत्रत्यनगरावशेषैः स्पष्टमेव। अस्य नगरस्य निर्माणं पूर्वाकलितयोजनानुसारं कृतम्। विस्तृतराजमार्गाणां संख्या, तेषां दिशः, प्रत्येकायतभागे भवनानां संख्या, तेषां परिधीनां क्षेत्रफलानि—इत्यादीनि नगरस्य स्वास्थ्यरक्षणार्थं कृतानि। नदीजलौघादेषां नगराणां रक्षणार्थं मृत्तिकाभिरिष्टिकाभिश्च सेतुबन्धनं कृतम्। नगरयोः पश्चिमपूर्वभागयोः दुर्गरचना कृता।

सिन्धुसभ्यतायुगे नगराणां सुरक्षार्थं सुदृढप्राकाराणां रचना कृता। हड़प्पा-नगरे प्राकारस्य विस्तारः पादभागे २६ हस्तमुपरिभागे २३ हस्तं वर्तते। प्राकारस्यायामः ८०० हस्तं वर्तते।

सिन्धुसभ्यतायाः गृहेषु प्राङ्गणानि बभूवुः। प्राङ्गणं परितः प्रकोष्ठाः स्थिताः। गृहाणां नगरस्य चानपेक्षितजलस्य बहिः प्रवाहणार्थं प्रणालाः

प्रणालिकाश्च कृताः। उपसरकं संकरनिचयाः स्थापिताः। प्रत्येक-गृहे कूपः, शौचालयः, स्नानागारः, हस्तपादप्रक्षालनकक्षः, भाण्डारम्, पूजा-स्थानं च बभूवुः।

सिन्धुसभ्यतायाः गृहाणि प्रायो द्विभूमानि बभूवुः। सोपानैरुपरिभूम-गमनं शक्यमासीत्। गृहाणां भित्तयः ११″ × ५१/४″ × २१/४″ परिमाणाना-मिष्टकाभिः पक्वाभिः निर्मिताः।

कतिपयविशिष्टगृहरचना अपि क्वचित् दृश्यन्ते। तद्यथा—वर्गा-कारस्य कस्यचित्कक्षस्य ५२ हस्तायामस्यावलम्बनमायताकारैः विंशति-स्तम्भैः कृतम्।

## वैदिकगृहाणि

सिन्धु-सभ्यतायाः वास्तुकलायाः परम्परा प्रत्यक्षतोऽज्ञातैव वर्तते। साहित्यिकप्रमाणैः वैदिकयुगे शतद्वारगृहस्य, त्रिभूमगृहस्य, सहस्रस्तम्भ-सभामण्डपस्य, लौहप्रस्तरादीनां प्रासादस्य च प्रकल्पना प्रसिद्धा। इमानि वास्तूनि प्रायशः समृद्धिशालिनां राज्ञां वा बभूवुः। साधारणजनानां गृहाणि काष्ठस्तम्भैः पर्णाच्छादनैश्च निर्मितानि। गृहभित्तयः क्वचित् मृत्तिकया रचिताः।[१]

वैदिकगृहाणि साधारणतः सुविस्तृतानि सुखदानि च बभूवुः। तद्यथा गृहेषु बहवः कक्षाः—अग्निशाला हविर्धानं पत्नीनां सदनं सदः आवसथः च बभूवुः। पशूनां कृते भवनानि निर्मितानि।

रामायणमहाभारतपुराणेतिहासादिभिः बौद्धजैनसाहित्यैश्च प्राचीनयुगे गृहनिर्माणकलायाः प्रगतिः प्रसिध्यति। तद्यथा रामायणानुसारमयोध्या

---

१. The chief importance of the Vedic period lies in the development of architecture as a science and the invention of types that survive in later Hindu and Buddhist architecture. Rowland: Art and Architecture p. 24.

लङ्का वा सर्वोच्चवास्तुसमन्विता बभूव। महाभारतानुसारं मयासुररचितं सभाभवनं वास्तुकलायाः परां काष्ठां द्योतयति।

मौर्ययुगीनवास्तुकलायाः परिचयः मेगस्थनीजादीनां ग्रीकलेखकानां प्रत्यक्षवर्णनैः भवति। तदनुसारं मौर्याणां राजधानी पाटलिपुत्रमायामे योजनपर्यन्ता बभूव। मौर्ययुगस्याशोकस्य भवनं वास्तुकलायाः सर्वोच्चादर्शरूपेण गणितम्। भवनमिदं गुप्तयुगपर्यन्तमवश्यमेव विराजमानमासीत्। फाह्यानः तस्य दर्शनं कृत्वाऽलिखत्—नेदं भवनं मानवरचितम्, अपितु देवैः कृतं प्रतिभाति। अस्य भवनस्यावशेषा आधुनिकयुगे खनिताः। तानधिकृत्य डा० स्पूनरो लिखति—सर्वथा सुरक्षितमिदं दृश्यते। अस्मिन् भवने प्रयुक्ताः काष्ठस्तम्भा अधुनाऽपि तथा श्लक्ष्णाः पूर्णाश्च सन्ति यथा तेऽशोकयुगे बभूवुः। अस्मिन्युगेऽपि वयमस्माद्भवनात् सुष्ठुतरस्य वास्तुनः निर्माणं कर्त्तुमसमर्थाः। तदिदं स्वयुगस्यादर्श एव।

प्राचीनयुगस्य नागरिकाणां भवनानां वर्णनं बहुषु काव्येषु प्राप्यते। मानसारादिषु वास्तुशास्त्रग्रन्थेषु गृहरचना-विज्ञानस्य प्रमाणं विद्यते। अनेन प्रमाणेन वास्तुकलाप्रगतिः परिचीयते खलु। तथा हि—प्रथमं ग्रामयोग्या भूमिः चयनीया। यस्यां भूमौ कूपजलं धरातलात् नातिदूरं वर्तते, यत्र छायाप्रदाः पुष्पफलादिसम्पन्नाः वृक्षाः संवर्धिता भवितुमर्हन्ति, या भूमिः प्रत्यक्षतः मनोहारिणी वर्तते सा ग्रामावस्थानयोग्या मता। तस्याः भूमेः कर्षणं कृत्वा दिशाबिन्दूनां निर्धारणं कृतम्। तत्र प्रधान-राजमार्गाः अङ्किताः। राजमार्गाः ग्रामे वायोः संचरणाय समीकृताः। ग्रामस्य प्रदक्षिणार्थं मङ्गलवीथी कृता। विस्तारे प्रधानराजमार्गाः पंचविंशति हस्तपर्यन्ताः निर्मिताः। ग्रामाणां च रचनाः चत्वारिंशद्विधाः प्रकल्पिताः। तद्यथा-दण्डकवर्गस्य ग्रामः संन्यासिदण्डानुरूपोऽभवत्। तत्र पञ्चपर्यन्ताः समानान्तरराजमार्गाः पूर्वतः पश्चिमे रचिताः, उत्तरतः दक्षिणे लघुविस्तारवन्तः त्रयः सरकाः निर्मिताः। उत्तरपूर्वभागे, दक्षिणपश्चिमभागे च द्वौ जलाशयौ खनितौ। पद्माकरवर्गस्य ग्रामः कमलपत्रवत् सन्निवेशितः।

स्वस्तिकवर्गस्य ग्रामः स्वस्तिकवत् प्रसारितो बभूव। पाठशालाः धर्मसंस्थाश्च ग्रामाणां कोणभागेषु स्थापिताः।

बहूनां ग्रामाणां समाहारभावेन नगररचना प्रकल्पिता। नगरे पण्य-वीथिकाः मन्दिराणि, पथिकगृहाणि, पाठशालाश्च यथास्थानं विहितानि। मानसारे नवविधाः नाट्यगृहाः मञ्चाश्च वर्णिताः।

वास्तुकलायाः सर्वोच्चविकासः पुरा मानववसतिषु न दृश्यते, अपि तु पितृणां देवानां च कृते रचितेषु मन्दिरेषु गुहासु वा स्तूप-चैत्य-विहारादिषु बभूवेति निःसन्दिग्धमेव।

## स्तूपः

पूर्वजानां स्मारकरूपेण स्तूपस्य रचना वैदिकयुगेऽपि प्रचलिता बभूव।[१] बौद्धधर्मानुसारं स्तूपाः कस्यचिन्महात्मनः निर्वाणस्य सम्यग्ज्ञानस्य वा स्मारकाः सन्ति। स्तूपदर्शनेन बुद्धपथानुगमनाय प्रवृत्तिः जायते।' साधारणतः स्तूपाः गौतमबुद्धस्य वास्तविकं कृत्रिमं वा अस्थ्यादिशेषं भूमौ सन्निधायाऽऽयतस्योपरि निर्मिताः बुद्धस्य महत्त्वपूर्णजीवनवृत्तस्थले रचिताश्च दृश्यन्ते। परवर्तियुगीनानां बौद्धमतानुयायिनां स्मारकरूपेणापि स्तूपाः रचिताः। प्राचीनतमः स्तूपः नेपालसीमासमीपं बस्तीजनपदे पिपरावाग्रामे खीष्टतः ४५० वर्ष प्रागेव निर्मितः प्राप्यते। अशोकेन ८४००० स्तूपा निर्मिता इति कथा श्रूयते। अशोकेन निर्मितस्य साँचीस्तूपस्य तोरणवेदिकादीनां रचना खीष्टतः प्राक् प्रथमशतके बभूव। स्तूपस्य व्यासः ८१ हस्तपर्यन्तः आरोहः ५१ हस्तपर्यन्तश्च वर्तते। चतसृषु दिक्षु महाद्वारस्यालङ्करणं मनोहारि प्रतिभाति। द्वाराणां परस्परसम्बन्धनं प्रस्तर-वेदिकाभिः कृतम्। वेदिकातः स्तूपस्य मूलपर्यन्तं प्रदक्षिणापथः वर्तते। स्तूपस्य किंचिदुपरि अपरः प्रदक्षिणापथः वर्तते। सोपानमार्गेणाधस्तात् अपरप्रदक्षिणापथो गन्तव्यो भवति। स्तूपस्याण्डस्य शिखरभागे आयता-

---

१. शतपथब्राह्मणे १३.८.१.५. तथा १३.८.२.१-२

कारा हर्मिका भवति । तोरणेषु वेदिकासु च प्रायः सर्वत्र पशु-पक्षि-देव-यक्ष-गन्धर्व-मानवादीनां मूर्तयः तेषां बुद्धपूजां द्योतयन्ति ।

ख्रीष्टतः प्राक् द्वितीयशतके भरहुतनगरे शुङ्गानां शासनकाले स्तूप-रचना कृता । अधुना तस्य स्तूपस्य कतिपयवेदिका एकं महाद्वारं च कलकत्तानगरस्य पुरातत्त्वसंग्रहालये वर्तन्ते । तत्रापि जातककथानां तक्षणं प्रभावोत्पादकविधिना कृतम् ।

गन्तूरजनपदेऽमरावत्यां ख्रीष्टतः प्राक् द्वितीयशताब्दे प्राक् स्तूपस्य रचना कृता । तस्य स्तूपस्य वेदिकादीनां रचना ख्रीष्टतः पश्चात् तृतीय-शताब्दे आन्ध्रराजैः कृता । अस्मिन्युगेऽन्ये स्तूपाः जगय्यपेटे नागार्जुनि-कोण्डे च रचिताः ।

ख्रीष्टस्य पश्चात् सप्तमशताब्दे सारनाथस्य स्तूपो रचितः ।

## चैत्यः

चैत्याः बौद्धमतानुयायिनां पूजास्थानं बभूवुः । चैत्याः प्रायः पर्वतानां कृत्रिमगुहासु स्तूपमधिकृत्य प्रतिष्ठापिताः दृश्यन्ते । चैत्यानामाभ्यन्तर-भागः आयताकारो भवति । तत्र मध्यभागोऽधिकायामसम्पन्नो भवति । मध्यभागस्य पार्श्वभागौ स्तम्भयुक्तौ भवतः । स्तम्भानामन्तभागात् स्तूपस्य प्रदक्षिणापथः प्रारभ्यते ।

बहवः चैत्याः नासिक-भाजा-बेडसा-पीतलाखोरा-कोण्डाणा-कार्ले-प्रदेशे प्राप्यन्ते । कार्लेचैत्यः सर्वश्रेष्ठः एव । अस्य रचना ख्रीष्टस्य पश्चात् प्रथमे शतके कृता । तत्र गुहायाः विस्तारः ८२ × ३० × ३० हस्तपर्यन्तो वर्तते । मध्यभागमभितः पंचदश स्तम्भाः वर्तन्ते । स्तम्भानां शिरोभागे जानुनी निधाय हस्तिनः प्रतिष्ठापिताः । हस्तिनामुपरि द्वौ स्त्रीपुरुषौ वर्तेते । अजन्तागुहासु चत्वारः चैत्या वर्तन्ते ।

## विहारः

विहाराः चैत्यस्य समीपे बौद्धभिक्षूणामावासाय निर्मिताः । प्राचीनतमो

विहारः खीष्टाब्दतः प्रागेव भाजागुहासु दृश्यते। तत्र विहारस्य समक्ष-मलिन्दो वर्तते। अलिन्दस्य पश्चिमदिग्भागे त्रयः कक्षाः सन्ति। कक्षाणां विभागः स्तम्भेन कृतः। स्तम्भानां शिरोभागः कमलपुष्पसदृशः तष्टः। अलिन्दस्य पश्चभागे सभामण्डप इति ख्यातो महाकक्षः वर्तते।

उत्कलप्रदेशे जैनानां बौद्धानां च बहवः विहाराः प्राप्यन्ते। तत्र खण्ड-गिरेः अनन्तगुम्फा उदयगिरेः रानीगुम्फा, गणेशगुम्फा, जयविजयविहारः सुप्रसिद्धाः। उदयगिरेः हाथीगुम्फायां महाराजखारवेलस्य खीष्टस्य प्राक् द्वितीयशताब्दस्य शिलालेखः प्राप्यते। तत्र कतिपयगुहाः द्विभूमाः वर्तन्ते।

अजन्तायाः गुहासु षोडश-सप्तदश-गुहे विहारस्य सर्वोत्कृष्टादर्शरूपेण प्रतिभातः। तत्र स्तम्भानां रचना मनोरमविधिना कृता। तत्र विहारेषु चित्र-कल्पना भारते निरुपमैव वर्तते।

गुहा-विहाराणां रचना अतीव सौष्ठवपूर्णा प्रतिभाति। गुहासु विविधानां प्राकृतिककृत्रिमवस्तूनां तक्षणं प्राकलितवास्तुविधानं च यथास्थानं दृश्यते। तत्र न किंचिदपि बाह्यतः योजितम्। तथापि सर्वत्र सर्वाङ्गपूर्णता आनुरूप्यं चतुरस्रता च दृश्यन्ते।

गुहाविहारेभ्यः ऋते पुरा इष्टकविहाराणां प्रचलनं गौतमबुद्धस्य जीवन-कालादेवाभवत्। ह्वेनसांगानुसारं सप्तमशताब्दे भारते ५००० विहाराः बभूवुः। तेषु नालन्दाविहारःसर्वश्रेष्ठोऽभवत्। नालन्दाविहारस्य विस्तारः १०५० × ५२५ हस्तपर्यन्तक्षेत्रेऽभवत्। अस्मिन् विहारे पुस्तकालयो नव-भूमोऽभवत्। कस्यचिद्विहारस्य भित्तिः १३५ × ४ वर्गहस्ता दृश्यते। भित्तीनां निर्माणमिष्टकाभिः कृतम्। इष्टकानां संयोजनं सूक्ष्मविधिना कृतमासीत्। क्वचित् द्वयोरिष्टकयोः संयोजनमदृश्यमेव प्रतिभाति।

## मन्दिरम्

सिन्धु-सभ्यता-युगे हड़प्पादिनगरेषु बहूनि मन्दिराणि बभूवुः। ततः प्रभृति भारतस्य विविधभागेषु प्रायः सदैव मन्दिराणां रचना कृता, किन्तु

वैराग्येणैवापवर्गाणां श्रेष्ठो मोक्षो लभ्यो भवति। शृंगारशतकेऽपि मनोरमा रामाः पुरुषस्याभ्युदयपथे विषपूर्णा भोगिन्यो मताः।

अमरुकवेः शृङ्गारशतकं तस्यामरत्वं विदधाति। अस्मिन् शतके गार्हस्थ्यजीवनस्योदात्तशृङ्गारमयप्रवृत्तीनामनर्गलप्रवाहः सामस्त्येन दर्शनीयः।

जयदेवस्य गीतगोविन्दे गीतकाव्यस्य मनोहारिस्वरूपमनुत्तरमेव। अस्मिन् काव्ये कृष्णस्य राधाप्रमुखगोपिकाभिः सह वृन्दावनकुञ्जेषु यमुनापुलिनेषु च केलिविलसितानां साङ्गोपाङ्गवर्णनं कृतम्। गेयपदेषु शब्दध्वनिना सह भावानामपूर्वसामञ्जस्यं दृश्यते। ईदृशे शृंगारमये काव्येऽपि कृष्णभक्तो जयदेवः स्वकीयाराध्यदेवस्य सर्वातिशायिदेवानुभावं प्रतिष्ठापयति।

गीतकाव्यस्य क्षेत्रं मुक्तकानां सप्तशतीग्रन्थैः समृद्धीकृतं दृश्यते। खीष्टस्य प्रथमशतके प्राकृतभाषायां गाथासप्तशती रचिता। तामाश्रित्य गोवर्धनाचार्यः खीष्टस्य पश्चात् द्वादशे शतके आर्यासप्तशतीं रचितवान्। ततः परं हिन्दीकविः विहारीति ख्यातः 'सतसई' प्रणीतवान्। तासु सर्वासु सप्तशतीषु शृङ्गारमयभावानां नायिकानायकयोः उद्दामव्यापाराणां च चित्रणमेव वर्तते।

## भाषा

संस्कृतभाषायाः भावाभिव्यञ्जनक्षमत्वं वैदिककालतः सुप्रसिद्धम्। तथा हि—शब्दसंख्यायाः वैपुल्यं सुप्तिङां प्राचुर्यम्, कृत्तद्धितानां बाहुल्यम्, शब्दशक्तीनां वैविध्यम्, काक्वादीनां वैचित्र्यं च भावाभिव्यञ्जनस्य संवर्धनाय बभूवुः। संस्कृतभाषाया विशेषान् परिलक्ष्य विलियमजोन्स-महोदयेनाशंसितम्—

Sanskrit language is of a wonderful structure, more perfect than Greek, more copious than Latin, and more exquisitely refined than either.

Asiatic Researches Vol I p. 422.

कराठाग्रकरगारीत्या संस्कृतभाषायाः स्वरूपं चिरं स्थिरं समवर्तत। व्याकरण-परम्पराऽपि भाषायाः स्वरूपमपरिवर्त्तनसहमकरोत्।

सूक्ष्मविचारणायां स्वल्पतमशब्दप्रयोगेण कार्यसाधनं संस्कृतस्यापरो विशेषः। श्रीकीथमहोदयेन तदधिकृत्य निदर्शितम्–The extraordinary power of compression which Sanskrit possesses etc.[1] भाषेयं क्वचिद्रागतालनृत्यानुकूलतां विधातुं समर्था।[2]

## शैली

काव्यस्य प्राथमिकशैल्याः उदाहरणमृग्वेदे प्राप्यते। ऋग्वेदे सूक्तानां रचना प्रायः देवानां परितोषाय कृता। कवीनां दर्शने देवानां माहात्म्यमत्यधिकमासीत्। तेषां विविधकामनानां पूर्तये देवाः समर्थाः मताः। देवानामीदृशी प्रतिष्ठा तानधिकृत्य प्रगुणकाव्यसर्जनाय बभूवेति निःसन्देहम्।

वैदिकशैली सरला प्रभावोत्पादिका च दृश्यते। लघुवाक्यानि प्रायः समासरहितान्येव प्रयुक्तानि बभूवुः। वैदिकशैली प्राथमिकयुगे विशेषणविशिष्टा लक्ष्यते। एकस्य पदस्य कतिपयविशेषणप्रदाने कवयः कलायाः साफल्यं मेनिरे। अलङ्काराणां प्रायः अभावः बभूव। क्वचित् संवादात्मकशैलीमनुसृत्य कवयः श्रोतॄणां सामीप्यं प्राप्तवन्तः।

ध्वनिः कविभिः प्रेयान् मतः। ध्वनिबलेन क्वचिदग्निः पुरोहितः, यज्ञस्य देवः, ऋत्विक्, होता, रत्नधातमश्च विभावितः। ईदृशेषु काव्येषु रसभावादीनां व्यञ्जनं सर्वत्र सम्भवति।

छन्दसां परिपाकः समुन्नत एव ऋग्वेदे वर्तते। तत्र पंचदशच्छन्दसां प्रयोगोऽभवत्।

आदिकाव्ये रामायणे काव्यशैली भव्या वर्तते। तत्र छन्दसामलङ्काराणां च वैविध्यं भावाभिव्यक्तये सुप्रयुक्तमिति स्पष्टम्। वर्णनेषु प्रायः सर्वत्र

१. A History of Sanskrit Literature p. 178.

२. Ibid p. 338.

कविदृष्टिः वस्तूनामुदात्तस्वरूपं प्रस्तौति। वाक्यरीतिः सरला बोधगम्या च वर्तते सर्वत्र। अनेन विधिना रामायणे सरसता सम्पादिता।

वाल्मीकेः काव्यशैली परमार्जिता सती परवर्तियुगेऽश्वघोषकालिदासादिभिः स्वीकृता। तेषां कवीनां काव्येषु भावाभिव्यक्तिः काव्यस्य प्रधानतत्त्वं मतम्। अलङ्काराणां संयोजनं तत्र वस्तुस्वरूपस्य स्पष्टीकरणाय दृश्यते। अलंकारास्तु वस्तुतः स्वल्पसंख्यकैः शब्दैः वस्तूनां विशदस्वरूपस्य चित्रणाय समीहिताः। गणच्छन्दसां स्वरूपं प्रथममश्वघोषस्य काव्येषु लालित्यपूर्णमजायत।

वैदर्भी रीतिः कालिदासस्य रचनाभिः सुवासिता एव।[१] कालिदासस्य भाषा सरला सती लावण्यमयी दृश्यते। तस्य भावाः परिष्कृताः सदाशयनिर्भराश्च सन्ति। कालिदासस्य शैलीमधिकृत्य प्राचीनाचार्याः प्रशंसन्ति। तद्यथा—

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते॥

बाणभट्टः

ख्यातः कृती सोऽपि च कालिदासः शुद्धा सुधास्वादुमती च यस्य।
वाणीमिषाच्चण्डमरीचिगोत्रसिन्धोः परं पारमवाप कीर्तिः॥

सोड्ढलः

अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव ग्रथिता गुणौघैः।
प्रियाङ्कपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी॥

श्रीकृष्णकविः

साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये।
शिक्षासमयेऽपि मुदे रतिलीलाकालिदासोक्तिः॥

गोवर्धनाचार्यः

---

१. माधुर्यव्यंजकैर्वर्णैं रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते॥ साहित्यदर्पणे ६.२.३

अभिनवा अपि समालोचकाः कालिदासस्य सरलरचनारीतिं सूक्ष्मालङ्कारतां च प्रशंसन्ति। तद्यथा कीथमहोदयः—

His was the golden mean of Virgil between rustic simplicity and clumsiness and that over-refinement which is specially fatal. Thus it results that his miniature-painting in its polished elegance often attains relative perfection.

A History of Sanskrit literature p. 101.

कालिदासस्य युगे संस्कृतकाव्ये कृत्रिमालङ्काराणां शब्दगुम्फन-वैचित्र्याणां च समारम्भोऽभवत्। परवर्तियुगे शब्दाडम्बरस्य रीतिः सविशेषं प्रचलिता दृश्यते। तथा हि—महाकविः भारविः माघश्च सरलरीतिं विहाय क्वचित् पाण्डित्यप्रदर्शनार्थमेव शब्दजालं प्रस्तुतवन्तौ। परिणामतः एकाक्षरश्लोकरचना, विविधबन्धयुक्ताः श्लोकाश्च चमत्कारार्थं पुरस्कृताः। तथापि भारवेः माघस्य च काव्यशैली विशेषगुणानादधती समादृता वर्तते। प्राचीनालोचकाः भारवेरर्थगौरवं शैलीं च प्रशंसन्ति। तथा हि—

प्रदेशवृत्त्यापि महान्तमर्थं प्रदर्शयन्ती रसमादधाना।
सा भारवेः सत्पथदीपिकेव रम्या कृतिः कैरिव नोपजीव्या॥

कृष्णकविः

नारिकेलफलसंमितं वचो भारवेः सपदि तद्विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥

मल्लिनाथः

माघस्य त्रयो गुणाः सुप्रसिद्धा एव—

उपमा कालिदासस्य भारवेरर्थगौरवम्।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः॥

अपरं च तस्य शब्दभाण्डारं परिलक्ष्योक्तम्—

नवसर्गगते माघे नवशब्दो न विद्यते।

राजशेखरेण माघप्रशस्तौ प्रथितम्—

कृत्स्नप्रबोधकृद्वाणी भा रवेरिव भारवेः।
माघेनेव च माघेन कम्पः कस्य न जायते ।।

रसालङ्काररीतिव्यंजनादीनां चरमोत्कर्षः श्रीहर्षस्य नैषधीयचरिते प्राप्यते। कविः स्वयमेव स्वकाव्यस्य परिचयार्थं कथयति—

'यत्काव्यं मधुवर्षि' 'शृङ्गारामृतशीतगुः' चेति।

शृङ्गारामृतमिदं न सर्वैरास्वादनीयमिति स्पष्टीकृतं श्रीहर्षेण—

ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ।।

नाटककाराः प्रायः सदैव प्रगुणरचनारीतेः अनुयायिनो बभूवुः। नाटकानि सर्वजनबोधाय भवन्त्विति विचारणा तत्र वैदर्भीरीत्याः नियोगकारिणी दृश्यते। तथापि युगप्रभावस्य सर्वव्यापिप्रवर्तनं भवत्येव। भासस्य कालिदासस्य च नाटकानि सरलानि सन्ति, किन्तु परवर्तियुगीनानि 'उत्तररामचरितम्' 'वेणीसंहारम्' 'मुद्राराक्षसम्' वा क्वचिदसरलरचनायाः आश्रयणं गृह्णन्ति। तेषु नाटकेषु भारतीयकाव्यसौरभं शैलीदृष्टितः प्रायोऽनुत्तरमेव।

गेयकाव्यानि नाटकसदृशानि सरलभाषामपेक्षन्ते। तेषु शब्दाडम्बरस्यावकाशः नास्त्येव। स्थानाभाव एव तत्र कारणं वर्तते। सरलभाषायां निगदिताः श्लोकाः विशेषतः भर्तृहरेः शतकेषु, गीतगोविन्दे वा सविशेषं प्रभावोत्पादकाः।

काव्यशैली कथासाहित्ये द्विविधा प्रवतते। लघुकथासु श्लोकनिबद्धकथासु च प्रायः सर्वत्र मनोरमा सरलभाषा वैदर्भीरीतिमनुसरन्ती दृश्यते। किन्तु महाकथासु, आख्यायिकासु वा भाषा प्रायः समासबहुला, अलङ्कारभाराक्रान्ता च दृश्यते। पंचतन्त्रस्य, कथासरित्सागरस्य च भाषा सुबोधा

एव। किन्तु बाणस्य कादम्बर्यां हर्षचरिते वा शब्दाडम्बरः भयङ्कर एव। तदधिकृत्य बाणेन स्वयमेव प्ररोचितम्—

नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम्॥

चन्द्रदेवः बाणस्य सर्वोत्कृष्टतां प्रतिष्ठापयन् निर्दिशति—

श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरे-
ऽलङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने।
आ सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
संचारी कविकुम्भिकुम्भभिदुरो बाणस्तु पंचाननः॥

अपरेऽपि कथाकाराः सुबन्धुः दण्डी धनपालादयः समासबहुलां सालङ्कारां शैलीमेव समाददुः।

संस्कृतकाव्यशैली वर्ण्यविषयाणामौदार्यानुकूला सदैव समुन्नता बभूव।

## कवीनां व्यक्तित्वम्

वैदिककवयः ऋषय इति ख्याताः। साधारणतः ते ऋषयो भरद्वाजात्रि-वसिष्ठवामदेवकण्वादयो ज्ञानविज्ञानतपोभिः परिपूता बभूवुरिति तेषां रचनाभिरपि स्पष्टं प्रतिभाति। कवेः प्रतिभा ब्रह्म इति प्रसिद्धा देवैः प्रदत्ता मता। तस्याः प्रसूतिः ऋतस्य सदनाद् बभूवेति धारणाऽऽसीत्।[१] हृदयमेव काव्यस्याधिष्ठानं व्याख्यातम्।[२] सोमपानेन तेषामृषीणां काव्यरचनाशक्तिः समुत्तेजिता बभूव।[३]

वैदिकयुगे राजानः, सैनिकाः, वैश्याः, आर्येतराः, स्त्रियो वा कवयो बभूवुः। तत्र राजानः युद्धभूमेः स्वकीयमनुभवं निवेदितवन्तः। तथा हि राजा ऋषभः—

अहमस्मि सपत्नहेन्द्र इवारिष्टो अक्षतः।
अधः सपत्ना मे पदो रिमे सर्वे अभिष्ठिताः॥

---

१. ऋग्वेदे ७.३६.१ २. ऋग्वेदे २.३५.२
३. ऋग्वेदे १०.११६

योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम् ।
अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव ॥

ऋग्वेदे १०.१६६.२,५

कश्चिद्वीरसैनिकः प्रवदति—धन्वना सर्वाः प्रदिशो जयेम ।[१]

आर्येतरकवयः ऊर्ध्वग्रावा, अरिष्टनेमिश्च सुप्रसिद्धौ । स्त्रीकविषु श्रद्धा, शची च प्रख्याते ।

रामायणमहाभारतयोः रचयितारौ वाल्मीकिः व्यासश्च श्रेष्ठमहर्षी बभूवतुः । तपोभिरेव तयोः कवित्वं प्रस्फुटितमिति प्रतिभाति । आचार्यस्य व्यासस्य दर्शन-राजनीति-युद्धशास्त्रादेः ज्ञानं प्रकाममेवासीत् । वाल्मीकेः काव्यरचना दिव्या भव्या च देवानुग्रहैः बभूव । काव्यादर्शस्य वृत्तिमनुवर्त्तमाना ऋषयोऽपि शृङ्गारवीरादिरसात्मकानि काव्याङ्गानि उपवर्णितवन्तः ।

परवर्तियुगे कवयः राजाश्रयं प्राप्तवन्तः । प्रथमं तावदश्वघोषः कनिष्कस्य राजसभामलंकृतवानिति श्रूयते । तथाऽपि अश्वघोषस्य रचनायां क्वचिदपि राज्ञां रुचेरनुवर्तनं न दृश्यते । तस्य काव्यप्रणयनोत्साहः ऋषिवदेवासीत् । स बौद्धसंस्कृतेः महानुन्नायकोऽभवदिति विदितमेव ।

परवर्तियुगीनाः राजानः कवयश्च परस्परं श्रद्दधाना दृश्यन्ते । तथा हि वासुदेवः, सातवाहनः, शूद्रकः, साहसाङ्कः, विक्रमादित्यः, भोजश्च तादृशाः प्रमुखा राजानः । कालिदासः, मेण्ठः, अमरः, भारविश्च उज्जयिन्यां राजसमाश्रयं प्राप्तवन्तः । बाणः हर्षवर्धनस्य राजसभामलंकृतवान् । वाक्पतिराजः राजशेखरः श्रीहर्षश्च राजसमाश्रयं प्राप्तवन्तः । तत्र राजसभायां काव्यस्य समुन्नतेः वातावरणमविद्यत ।[२] परस्परस्पर्धया नित्यमेवोन्नतरकाव्यस्य रचना समभवत् । कतिपये राजानः श्रेष्ठकवयो बभूवुः ।

राजाश्रयं प्राप्यापि स्वल्पा एव कवयः राजप्रशस्तिं कृतवन्तः । कवि-

---

१. ऋग्वेदे ६.७५.२

२. इत्थं सभापतिर्भूत्वा यः काव्यानि परीक्षते ।
यशस्तस्य जगद्व्यापि स सुखी तत्र तत्र च ॥
काव्यमीमांसायाः दशमाध्यायतः

प्रतिभा राजधान्यामपि कुण्ठिता न बभूव। किन्तु शृङ्गाररसस्य वीररसस्य च प्राधान्यं राजकवीनां रचनासु स्वाभाविकमेवास्ति। ख्रीष्टतः प्राक् काव्यस्य प्रणयनं प्रायः चतुर्वर्गाणाम्—विशेषतः धर्ममोक्षयोः व्याख्यानाय बभूव। ख्रीष्टस्य पश्चात् काव्यरचना नागरिकाणां मनोरञ्जनेन सह तेषां चित्तवृत्तिसंस्काराय बभूव।

'प्रतिभाशालिन एव विद्वांसः कविपद्धतिमनुसरन्तु' इति शाश्वतरीतिरभवत्। प्रतिभया सह व्युत्पत्तेः अभ्यासस्य च सामञ्जस्यमपेक्षितं मतम्।[1] तत्र शास्त्रकवयः, काव्यकवयः, उभयकवयश्च सम्मताः। उभयकवयः श्रेष्ठा मताः। 'सततमभ्यासवशतः सुकवेः वाक्यं पाकमायाति' इति राजशेखरः।

राजशेखरः 'कवित्वस्य अष्टौ मातरः' इति प्रतिपादयति—

स्वास्थ्यं प्रतिभाभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता।
स्मृतिदार्ढ्यं निर्वेदश्च मातरोऽष्टौ कवित्वस्य॥

कविचर्यां निदर्शयन् स उपवर्णयति—'स्मितपूर्वमभिभाषणम्, रहस्यान्वेषणं परकाव्यदूषणवैमुख्यमनभिहितस्य'। तदनुसारं कविगृहं तु रमणीयमासीत्। तथा हि—तस्य भवनं सुसंमृष्टम्, ऋतुषट्कोचितविविधस्थानम्, अनेकतरुमूलकल्पितापाश्रयवृक्षवाटिकम्, सक्रीडापर्वतकम्, सदीर्घिकापुष्करिणीकम्, सबर्हिणहरिणहारीतम्, ससारसचक्रवाकहंसम्, सभूमिधारागृहयन्त्रलतामण्डपकम्, सदोलाप्रेङ्खं च स्यात्। राजशेखरः श्रेष्ठकाव्यस्य विरलत्वं मन्यते। तथा हि—

लीढाभिधोपनिषदां सविधे बुधानाम्
अभ्यस्यतः प्रतिदिनं बहुदृश्वनोऽपि।
किञ्चित्कदाचन कथञ्चन सूक्तिपाकात्
वाक्तत्त्वमुन्मिषति कस्यचिदेव पुंसः॥

## काव्यशास्त्राणि

काव्यशास्त्रमधिकृत्य ग्रन्थानां प्रणयनं साहित्ययुगस्यादित एव

---

१. बहुज्ञता व्युत्पत्तिः। उचितानुचितविवेकः व्युत्पत्तिः।

सम्भावनीयम्। वेदाङ्गानामध्ययनं काव्याभ्यासस्य प्रथमं पदं प्रतिभाति। वेदाङ्गेषु व्याकरणच्छन्दोनिरुक्तशिक्षादेः सविशेषं महत्त्वं काव्यरचनार्थं भवति। तत्र व्याकरणच्छन्दसोः परम्परा सातत्येन विकसिता बभूव। पाणिनेः व्याकरणं पिङ्गलस्य च छन्दःशास्त्रममरत्वमादधतुः।

काव्यशास्त्रस्य सिद्धान्तानां प्राथमिकः संग्रहः भरतस्य नाट्यशास्त्रे दृश्यते। अस्मिन् ग्रन्थे काव्यसम्बन्धितत्त्वानां—रसालङ्कारच्छन्दोनृत्यताल-लयादीनां सम्यग् विवेचनं वर्तते। पश्चात् भामहदण्डिवामनानन्दवर्धन-मम्मटविश्वनाथादिभिः कृतानि काव्यशास्त्राणि प्रस्तावितानि। तत्र मम्मटः काव्यप्रकाशे शब्दशक्तिगुणदोषविवेचनपुरस्सरमलङ्काराणां वैशिष्ट्यानि प्रदर्शयति।

काव्यशास्त्रमधिकृत्य प्रायः सर्वेषां प्रकरणानां सूक्ष्मदृष्ट्या भेदोपभेद-निदर्शनम्, शाखाप्रशाखाविवेचनं च तर्कसङ्गतप्रणालीमनुसृत्य कृतमिति ध्वनः उपमायाः भेदवैचित्र्योदाहरणेन स्पष्टं प्रतिभाति।

## प्राकृतकाव्यानि

प्राचीनयुगे संस्कृतं भारतस्य सर्वाधिकमहत्त्वपूर्णा भाषा बभूव। वैदिक-संस्कृतेः सर्वे श्रेष्ठविद्वांसः संस्कृतभाषायां काव्यरचनां कृतवन्तः। प्रारम्भिक-युगे बौद्धसंस्कृतेरनुयायिनः पालिभाषायाम्, जैनसंस्कृतेरनुयायिनः अपभ्रंशमागधीशौरसेनीमहाराष्ट्रीभाषासु च धर्मग्रन्थानां प्रणयनं कृतवन्तः। धर्मग्रन्थेषु क्वचित् काव्यस्य दर्शनं भवति। तथा हि बौद्धानां सुत्तपिटके सुत्तनिपातादिषु लोकप्रियकाव्यस्य स्वरूपं दृश्यते। जातकेषु प्राथमिककथासाहित्यस्य प्रवृत्तिः परिलक्ष्यते। थेरगाथाथेरीगाथादिषु पालिसाहित्यस्य गेयपदानां प्राथमिकसङ्ग्रहो विद्यते।

जैनानां प्राकृतकाव्यं चरितग्रन्थेषु, पुराणेषु, कथासु च द्रष्टुं शक्यते। तेषां रचना साधारणतः समाजस्य प्राकृतजनेभ्यः कृता दृश्यते। अतएव तेषु ग्रन्थेषु भावालङ्कारादीनां प्रयोगः साधारणः एव।

महाराष्ट्राश्रया प्राकृतभाषा द्वाभ्यां महाकाव्याभ्यां समलंकृता बभूव।

तयोः प्रथमं महाराजप्रवरसेनेन निर्मितं सेतुबन्धमस्ति। अस्मिन् काव्ये रावणवधमधिकृत्य सेतुबन्धनोपकल्पनस्यातीव मनोरमं प्रभावोत्पादकं वर्णनं च विद्यते। मानवोपक्रमस्य तादृशं सम्भावनं भारतीयसाहित्येऽन्यत्र न दृश्यते। सेतुबन्धस्य काव्यशैली सविशेषमुदात्ता वर्तते। अस्मिन् महाकाव्ये वीररसस्याद्भुतरसस्य च चरमप्रकर्षो दर्शनीयः।

द्वितीयं महाकाव्यं गौडवधमिति वाक्पतिराजेन कृतम्। तत्र दिग्विजयनिरूपणप्रसङ्गे भारतस्य विशालप्राङ्गणस्य प्राकृतिक-विभूतीनां वनपर्वतमरुभूमिपथादीनामपूर्ववर्णनं विद्यते। कवेः प्रतिभाबहुज्ञता च सर्वथा विस्मयकारिणी।

प्राकृतभाषायां कतिपयनाटकानि रचितानि। तेषु कर्पूरमञ्जरी चन्द्रलेखा प्राप्येते। इमे द्वे नाटके प्रणयकथोद्भाविनी स्तः।

## आर्येतरभाषाकाव्यानि

दक्षिणभारतस्य आर्येतरभाषासु तामिल-कन्नड-तेलगुषु प्राचीनकाले सुसमृद्धं काव्यसाहित्यं रचितम्। तत्र तामिलभाषायाः साहित्यमुच्चकोटिकं वर्तते।

### तामिलकाव्यानि

तामिलकाव्यस्य प्रादुर्भावो राजाश्रितेषु संघेषु बभूव। संघसंस्थायाः समारम्भः सम्भवतः खीष्टात् पूर्वं पञ्चमे शतके बभूव। प्रथमसंघस्य रचना तोल्खाप्पियमिति ख्याता व्याकरण-युद्धप्रेम-काव्यशास्त्रं चाधिकृत्य बभूव। अस्याः द्वितीयेऽध्याये तत्कालीनसामाजिकदशायाः वर्णनं विद्यते।

तृतीयसंघस्य मुख्यरचनाः एटटुतोगै (अष्टचरितसंकलनानि), पत्तु-पाट्टु (दशकाव्यानि), पदिनेङ्कीलकणक्कु (अष्टादश काव्यानि) च सन्ति।

एट्टुतोगैकाव्ये ५३० कवीनां २३०० कविताः प्राकृतिकदृश्य-प्रेम-वर्णने अधिकृत्य संकलितानि। तत्र राजकुमाराणां वीराणां च साहसपूर्ण-पराक्रमाणां साङ्गोपाङ्गवर्णनं विद्यते। पत्तुपाट्टुकाव्ये विविधविषयानधिकृत्य

रचितानि काव्यानि वर्तन्ते। तद्यथा—कार्त्तिकेयपराक्रमाः, 'कावेरिपट्टनम्' नौकाश्रयः, काञ्जीराज्यं, नगराणि, प्रेमगाथाः, ग्रामीणदृश्यानि करिकाल-चोलस्य पराक्रमाः, चोलराज्यस्याभ्युदयः वर्णितानि।

पदिनेङ्कील्कणक्कुसंग्रहेऽष्टादश काव्यानि प्रायः धर्मविषयकाणि सन्ति। तत्र काव्यात्मकोपदेशाः मानवस्य सद्भावनायाः संवर्धनाय सन्ति। कतिपयभागेषु युद्धनियमाः, औषधिविज्ञानम्, राजचरितानि च वर्णितानि।

खीष्टस्य पश्चात् द्वितीयशतके सप्तमशतके वा 'इलङ्गो अडिगल' इति ख्यातनामा कविः 'सिलप्पदिकारम्' रचितवान्। अस्मिन् काव्ये 'केवलन्' इति ख्यातस्य नायकस्य वेश्यापाशबद्धस्योपगतदारिद्र्यस्य मदुराप्रवासः प्रथमं वर्णितः। तत्र राजकुलस्य नूपुरं चोरितवानिति साभियोगः स राजाज्ञानुसारं मृषा वधं प्राप्तवान्। पश्चात् तस्य पत्नी कणणकी साध्वी सती प्राणान् त्यक्तवती। अस्य पापकर्मणः प्रभावात् सशोकः राजा मृतः, मदुरा प्रदाहेन दग्धा च। सर्वं विनष्टम्। ततः परं कणणकी मदुराप्रदेशस्य पूजनीया देवीति सम्मानिता।

मणिमेक्कलै काव्यं 'कूलवाणिगन्' कवेः रचना प्रसिद्धा। तत्र माधव्याः तस्याः कन्यायाः चरितगाथा वर्णिता। अन्तिमभागे धर्मोपदेशाः विद्यन्ते।

षष्ठशतकस्य पश्चात् शैव-वैष्णव-तान्त्रिकाणां साहित्यं समवर्धत। तेषां रचनासु 'तेवारम्' विशिष्टमेव। नवमे शतके 'मानिक्कवचक' इति ख्यातो महर्षिः 'तिरुवाचकम्' रचितवान्। द्वादशशतके शैवः नम्बिः 'पेरिय' पुराणं रचितवान्।

वैष्णवसम्प्रदायस्य प्राथमिकद्वादशमहर्षयः 'आल्वार' इति ख्याताः। तेषां रचना 'नालायिरप्रबन्दम्' काव्ये संकलिता। अस्मिन् प्रबन्धे तत्कालीनदार्शनिकानां कवीनां विचारधाराऽवगाहनीया।

द्वादशशतके 'कम्बर' कविः रामायणं प्रणीतवान्। तत्र काव्यकला, कथानकसंविधानं च कवेः प्रतिभा-वैशिष्ट्यं प्रमाणयतः। कम्बरस्य

समकालीनः 'ओट्टकुत्तरः' नलवेराहकाव्ये नलकथां वर्णितवान्। तस्मिन् युगे 'जयं कोराडान्' कविः कलिङ्गत्तुपरणिकाव्ये कलिङ्गविजयं वर्णितवान्।

## कन्नडकाव्यानि

कन्नडभाषायां ख्रीष्टाब्दस्य पश्चात् दशमशतकादारभ्य द्वादश-शतकपर्यन्तं रामायणं महाभारतं चाश्रित्य काव्यसाहित्यं प्रवर्तितम्। जैनसंस्कृतेः महापुरुषाणां चरितानि कतिपयकाव्यग्रन्थेषूपनिबद्धानि। पम्पकविः 'भारत' काव्ये अर्जुनस्य प्रतिरूपमिति कृत्वा स्वकीयस्याश्रयदातुः अरिकेसरिणः चरितं वर्णितवान्। स आदिपुराणे प्रथमतीर्थङ्करस्य चरितं निबद्धवान्। पम्पस्य समकालीनः पोन्नकविः रामकथां शान्तिपुराणं च रचितवान्। तस्य गदायुद्धकाव्ये भीमदुर्योधनयोः गदायुद्धं वर्णितम्। ततः परं स रामचन्द्रचरितपुराणं मल्लिनाथपुराणं च रचितवान्।

कन्नडभाषायां चावुण्डराजेन रचितं चावुण्डराजपुराणं सर्वोत्तमं गद्यकाव्यं प्रारम्भिकयुगे लिखितम्। तस्य समकालीनो नागवर्मा बाणस्य कादम्बर्या अनुवादं कृतवान्।

ख्रीष्टस्य पश्चाद् द्वादशशतकादारभ्य वचनमिति ख्यातस्य गेयकाव्यस्य रचना प्रारब्धा। वचनमुपासनापरं काव्यं ज्ञानमार्गस्य रहस्यमुद्घाटयति। वचनस्य प्रमुखरचयितारः बसवः, अल्लमप्रभुः, अक्कमहादेवी च बभूवुः।

द्वादशशतके राघवङ्कः हरिश्चन्द्रकाव्यमिति नाटकं रचितवान्।

## तेलगु

तेलगुभाषायाः प्रथमः कविः नन्नयः ख्रीष्टस्य पश्चादेकादशशतके प्रादुरभवत्। स नारायणकवेः सहकर्मित्वेन महाभारतस्य त्रयाणां पर्वणा-मनुवादं कृतवान्। द्वयोः कवयोः शब्दचयनं रसात्मिकता शैली च श्रेष्ठत्वेन परवर्तिकविभिः समादृता। परवर्तियुगे तिक्कनः कविः निर्वचनोत्तररामायणं रचितवान्। स महाभारतस्यानुवादमंशतः कृतवान्।

———

# वैदेशिकप्रसारः

भारतीयाः सांस्कृतिकनिधिमुदारभावेन विदेशिभ्यो जनेभ्यो वितरितवन्तः। तदर्थं सुदूरप्राचीनकालतो बहवो भारतीयाः विदेशेषु गत्वा भारतस्य सांस्कृतिकसन्देशं व्याख्यातवन्तः।[१] वैदेशिका अपि सहस्रशः भारते समागत्य सांस्कृतिकसागरे विगाहमाना जीवनस्य परमोद्देश्यं लब्धवन्तः।[२]

## सांस्कृतिकपरिवेदनम्

प्राचीनयुगे मानवानामदम्योत्साहः तेषामद्भुतपराक्रमाणामितिहासं प्रस्तावयति। निःसन्देहं तदा विज्ञानबलेन प्रस्तुतानां साधनानामभाव एवासीत्। तथापि हिमालयस्योच्चतरभागे बुद्धकालतः बहवः शिक्षणसंस्थाः प्रतिष्ठिता बभूवुः। तत्र शङ्कराचार्यस्य विश्वविद्यालयः स्थितः। तस्मिन्युगे हिमालयस्योन्नतभागे आरोहणस्य कष्टमगणितमेवासीत्। विदेशीया यात्रिणः फाह्यान-ह्वेनसांगादयो विद्यार्थिनः सहस्रं कष्टान्यगणयन्तः हिमालयस्योत्तुङ्गमार्गभागान्, अरण्यानि, सागरान् वा पद्भ्यां नौकाभिर्वा पारितवन्तः।[३] अनेन प्रकरणेन प्राचीनानां पुरुषार्थिनां भारतानां विदेशीयानां च मनोबलं ज्ञानपरत्वं च प्रमाणितम्।

संस्कृतेः प्रसारार्थं भारताः वसुधैव कुटुम्बकमिति उदात्तभावनया प्रेरिता इवाचरन्ति स्म। ते सन्ध्यामन्त्रेषु नित्यं भुवः परिकल्पनं हस्तामलकवद्कुर्वन्। विश्वस्य सांस्कृतिकावश्यकताः भारताः स्वकीया एव मत्वा तासां पूर्त्यर्थं प्रायतन्त। समादरणीयास्ते पूर्वपुरुषाः, ये विश्वं सकलं मानवतायाः

---

१. एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥
मनुस्मृतौ २.२०

२. तद्यथा खीष्टस्य पश्चात् सप्तमे शतके इस्लामधर्मग्रहणात् पराङ्मुखाः पारसीकाः मुम्बईप्रदेशे शरणं प्राप्तवन्तः।

३. विदेशगमनमार्गाणां विवरणं २३०-२३३ पृष्ठेषु द्रष्टव्यम्।

सूत्रे ग्रथितं कर्तुं निष्कामयोगिनो बभूवुः। तेषु मनस्विषु भारतानां संख्याऽत्यधिकाऽऽसीत्।

**अमेरिकादेशः सम्बद्धः**

पुरा अमेरिकादेशेन सह भारतस्य सम्बन्धः कदा स्थापित इति ज्ञानमसम्भवमेव। अमेरिकायात्रायाः द्वौ मार्गौ बभूवतुः (१) सामुद्रिकमार्गः—लङ्का-बङ्गसमुद्र-जावा-बाली-मेक्सिको (२) स्थलमार्गः—चीन-मङ्गोलिया-जापान-बेहरिङ्ग-अलास्का।[1]

**वैदेशिकसम्बन्धस्य प्रकाराः**

वैदेशिकसम्बन्धाः पुरा प्रायः पञ्चविधाः बभूवुः। तद्यथा—व्यापारिकः[2] धार्मिकः, राजनीतिकः, कलात्मकः, साहित्यिकश्च। व्यापारद्वारा राजनीतिधर्मकलादीनां विदेशे प्रसारः स्वयमेव भवतीति विदितमेव। राजनीतिकसम्बन्धस्य स्थापना क्वचित् व्यापारसंवर्धनाय भवति। व्यापारिभिः सह देशभ्रमणोत्सुकाः धर्मप्रचारकाः वा विद्वांसः विदेशेषु गतवन्तः वसतीः कृतवन्तश्च। पुरा धर्मप्रचारकाः प्रायः शिल्पकलादिषु निष्णाता बभूवुः। सर्वमुपर्युक्तं साहित्यमपेक्षते। अनेन प्रकारेण वैदेशिकसम्बन्धस्य प्रायः सर्वे प्रकारा अन्योन्याश्रिताः प्रतिभान्ति।

## धार्मिकप्रसारः

पुरा समस्ते जगति धर्मं प्रति परमोत्साहो बभूव। स्वदेशीयानां विदेशीयानां वा धर्मतत्त्वज्ञानं प्राप्य तदनुकूलं स्वजीवनविधिं कर्तुं सर्वे समुत्सुका अभवन्। नाऽऽसीत् तदा कोऽपि धार्मिकाभिनिवेशो यदवरोऽपि स्वधर्मोऽपरिवर्तनीयः अथवा श्रेष्ठोऽपि परधर्मोऽग्राह्य एव। जगति सर्वत्र धर्मप्रसारकाणां सम्मानो बभूव। यथाऽधुना विदेशीयाः ख्रीष्टधर्मोपासका

---

१. पुरातनामेरिकासम्बन्धस्य प्रमाणं पेरुप्रदेशस्य सीतारामकथोत्सवैः, भारतानुकरणपरैः सांस्कृतिकावशेषैः, गणेशपूजया च प्रतिष्ठापितम्।

२. व्यापारिकसम्बन्धस्य परिचयोऽस्मिन् ग्रन्थे २२६-२२८ पृष्ठे द्रष्टव्यः।

विश्वस्य विविधभागेषु ख्रीष्टधर्मस्य प्रचारार्थं प्रयतमानाः दृश्यन्ते तथैव प्राचीनयुगेऽपि ते परिलक्षिताः ।

**सार्वत्रिकः प्रसारः**

भारतवासिनोऽपि सम्भवतः संस्कृतेरादिकालतः भारतीयधर्मस्य देश-विदेशेषु स्वधर्मस्य प्रचारार्थं परधर्मस्य ज्ञानार्थं भ्रमणं कृतवन्तः, तत्राश्रम-संस्थानां विकासं कृतवन्तश्च । विदेशेषु प्रागैतिहासिकावशेषाणां पुरातन-कथादीनां च परिशीलनेन भारतस्यास्मिन् क्षेत्रे कार्यक्रमः प्रतीयते । तदधि-कृत्य विदेशीयविदुषामेव मतमुल्लेखनीयम्–अमेरिकादेशेषु भारतीयधर्मोत्सव-रामकथादीनां प्रागैतिहासिकयुगीनं प्रवर्त्तनं निदर्शितमेव । रामकथामधिकृत्य विलियमजोन्स महोदयो लिखति—Rama is Ramah of scriptures father of Cush (Genesis, Chapter X verse 7)[१]

**वैदिकधर्मस्य प्रसारमभिलक्ष्य मैक्समूलरमहोदयो लिखति**—The religious aspirations of that (Hindu) civilisation are found grandly expressed in the Ṛgveda. That civilisation pervades in every corner of the civilised world, and is aroused and about us every day of our lives.[२]

**बौद्धधर्ममधिकृत्य गाथा वर्तते**—The foot prints of Buddha were worshipped by his followers and were called Phrabat. They were engraved on rocks and hills, where people flocked from all parts of the country to worship them....six such Phrabats are found in the East, one of them in Mecca, whither the Buddhist made pilgrimages long before the rise of Islamism.[३]

---

१. Asiatic Researches Vol II p 40.

२. India : What can It Teach us ? p 74.

३. Count Bjornstierna : Theogony of the Hindus p. 92, 93.

अपरं च—The so called Hermes scriptures (the name of the sacred writing of the Egyptians) contain a metaphysical treatise in the forms of a dialogue between Hermes and Thodh, Bodh, Budh, which throughout exhibits the doctrines of Buddhism.[१]

कर्नलटाडमहोदयः कथयति—That a system of Hinduism pervaded the whole Babyl Lonian and Assyrian empires, scripture furnishes abundant proofs in the medium of the various types of the Sungod, Balnath, whose pillar adorned every mount and every grave.[२]

मानियरविलियममहोदयो विज्ञापयति—Pythagoras and Plato both believed in this doctrine (of the transmigration of souls), and that they were indebted for it to Hindu writers.[३]

मैकडानलमहोदयः समर्थयति—The hero of the story prince Josaphat, has an Indian origin, being in fact no other than Buddha. The name has been shown to be a corruption of Bodhisattva, a well known designation of the Indian reformer. Josaphat rose to the rank of a saint both in Greek and Roman churches. That the founder of an oriental religion should have developed into a Christian saint is one of the most astounding facts in religious history.[४]

---

१. Theogony of the Hindus p. 100

२. Tod's Rajasthan Vol II p. 605.

३. Indian Wisdom p. 68.

४. Sanskrit Literature p. 420.

विंसेएटस्मिथमहोदय आकलयति—Before the year 256 B. C. when the rock edicts were published collectively, the royal missionaries had been despatched to all the protected states and tribes on the frontiers of the empire, Ceylon andto the Hellenistic monarchies of Syria, Egypt, Cyrene, Macedonia and Epirus....... The missionary organisation thus embraced three continents—Asia, Africa, and Europe.[१]

पारसीकदेशमधिकृत्य ह्वेनसांगोऽलिखत्–अत्र हिन्दुधर्मावलम्बिनः प्रायः सर्वेषु नगरेषु स्वधर्मानुसारं जीवनयापनं कुर्वन्तः वसन्ति।[२] तत्र ख्वाजा-पर्वतस्योपरि बौद्धचैत्यानामवशेषा वर्तन्ते। बौद्धधर्मस्य प्रसारः इस्लाम-धर्मस्य प्रवर्तनात् प्राक् कास्पियनसमुद्रतटादारभ्य जापानपर्यन्तं समग्रं भूभागं धर्मक्षेत्रे सूत्रितवान्।

चीने बौद्धधर्मः

भारतीयसंस्कृतिः विशेषतः बौद्धधर्मः खीष्टसंवत्सरस्य प्रागेव चीनदेशं प्राकाशयत्।[३] अगणितचीनदेशवासिनः भारते समागताः। ते नेपाल-स्याम-वङ्गादिप्रान्तेषु निवसन्तो भारतीयां संस्कृतिं स्वीकृतवन्तः। भारतीयबौद्धा असंख्या एव तत्र गताः।

चीनदेशात् बौद्धधर्मानुयायिनोऽसंख्या जनाः सोत्साहं पथि कष्टादिबाधा-नुपेक्ष्य भारतमागत्य बौद्धविहारेष्वधीत्य बौद्धतीर्थानि दृष्ट्वा च प्रत्या-गमनकाले बौद्धग्रन्थान् मूर्तीश्च नीत्वा सफला बभूवुः। प्रथमं तावत् खीष्टस्य प्राक् तृतीये शतके अष्टादश चीनदेशीयाः भारते समागताः। ततः परं कश्यपः, मातङ्गः, धर्मरत्नश्च खीष्टस्य पश्चात् ६८ संवत्सरे चीनं गत्वा तत्र

१. Early History of India Vol I p. 194

२. Beal: Buddhist Records Vol II

३. भारतचीनदेशे 'इन्दुः' इति ख्यातम्।

पञ्चग्रन्थान् रचयामासुः। पश्चात् कश्चित् पारसीकः राजकुमारः बौद्ध-धर्मस्य महापण्डितः सन् भारतीयबौद्धपण्डितानां साहाय्येन कतिपय-पालिग्रन्थानां संस्कृतेऽनुवादं कृतवान्। चीनदेशीया विद्वांसः तैः सहानुवाद-शिक्षणं प्राप्तवन्तः। ततः परं भारतीयानां चीनगमनं बहुशः बभूव। तेषां विदुषां कुमारजीवः प्रख्याततमो बभूव। स चतुर्थशतके बन्दिरूपेण चीन-देशंप्रापितः। स द्वादशवर्षे शतप्रायान् ग्रन्थान् चीनभाषायामनूदित-वान्।[१] स ४१३ ख्रीष्टसंवत्सरे पञ्चत्वं गतः, किन्तु तस्य सहयोगिनः पुण्यत्रातः, बुद्धयशाः, धर्मयशाश्च ४१७ ख्रीष्टसंवत्सरपर्यन्तमनुवादकर्मणि प्रवृत्ता बभूवुः।

ख्रीष्टस्य पञ्चमशतके भारतीयानां बहवः वसतयः चीनदेशस्य नगरेषु प्रतिष्ठापिताः। तत्र कश्मीरस्य राजकुमारः राजपदं परित्यज्य चीनदेशा-धिपेनामन्त्रितः ४३१ ख्रीष्टसंवत्सरे नानकिंगनगर्यामुषितवान्। एकस्मिन्नेव वर्षे स एकादशग्रन्थानामनुवादं कृतवान्। काठियावाडनिवासी धर्मगुप्तः काबुलसमीपस्थे कपिशानगरे द्विवर्षमुषित्वा, पश्चात् पद्भ्यामेव काशगर-नगरं गतवान्। स तत्रापि नातिदीर्घं उषित्वा ५९० ख्रीष्टसंवत्सरे चीनं गतवान्। धर्मगुप्तो बहूनां ग्रन्थानामनुवादं कृतवान्। तस्य कस्मिंश्चित् मौलिकग्रन्थे परिचितदेशानां विवरणं तत्रत्यकृषि-प्राकृतिक-परिवेश-गृह-समाज- शासन- भोजन- वस्त्र- शिक्षादिप्रकरणानि अधिकृत्य प्रस्तुतम्। परवर्तियुगे ख्रीष्टस्य पश्चात् सप्तमशतकपर्यन्तं जिज्ञासूनां धर्मप्रचारकाणां च चीनगमनागमनं प्राचलत्। षष्ठशतके प्रायः ३००० बौद्धभिक्षवः, १०,००० भारतीयकुटुम्बानि च चीनदेशस्य लोयाङ्गप्रान्ते उषितवन्तः।

---

१. कुमारजीवस्य पिता कुमारायणः भारतीय आसीत्। स एशियामहाद्वीपस्य मध्यभागं गत्वा कुचीराजवंशस्य गुरुरभवत्। तेन जीवां राजकन्यां परिणीय तस्यां कुमारजीव उदपादि। कुमारजीवः कश्मीरदेशेऽधीत्य पुनः कुचीप्रदेशं गत्वा विश्वविद्यालयं स्थापयामास। तस्मिन् विश्वविद्यालये दूरदेशेभ्यः विद्यार्थिनः समागताः।

बहून् ग्रन्थान् अपि ते पण्डिताः चीनं नीत्वा तत्र तेषामनुवादं कृतवन्तः।[१] चीनभाषायां मौलिकग्रन्थानां रचनाऽपि तैः कृता।

चीनदेशात् गुप्तयुगे धर्मजिज्ञासवः बहवः भारते समागताः। तथा हि ख्रीष्टस्य पश्चात् तृतीयशतके विंशतिबौद्धश्रमणाः चीनात् भारते आजग्मुः। गुप्तवंशस्य कश्चित् महाराजः बोधगयासमीपे चीनश्रमणेभ्यः विहारं रचयामास। चीनदेशादागतेषु यात्रिषु फाह्यान-ह्वेनसांग-इत्सिंगादयः मुख्यतमाः।

ख्रीष्टस्य पश्चात् चतुर्थशतके फाह्यानः भारतमाजगाम। चीनदेशतः प्रस्थानकाले तस्याचार्यः कुमारजीव उपदिदेश "त्वया भारतस्य सांस्कृतिकमध्ययनं सम्यग् रूपेण कर्तव्यम्, येन चीनदेशवासिभ्यः भारतसन्देशं पूर्णतः दातुं क्षमो भविष्यसि। त्वया न केवलं धर्म एवाध्येतव्यः" इति। फाह्यानः स्थलमार्गेण भारते समागत्य पाटलिपुत्रस्य विश्वविद्यालयेऽधीत्य पर्यटनं कृत्वा ४१४ संवत्सरे जलमार्गेण चीनं गतवान्। स भारतयात्रावर्णनं लिखितवान्। चीनदेशे समग्रविनयपिटकस्य प्रचार एव तस्य यात्रायाः प्रमुखमुद्देश्यमासीत्।

ह्वेनसांगः हर्षवर्धनस्य शासनकाले सप्तमे शतके भारतवर्षमाययौ। कश्मीरत आरभ्य नालन्दापर्यन्तं सोऽनेकविद्यालयेषु धर्मदर्शनादीनां ग्रन्थानधीत्य नालन्दाविश्वविद्यालयस्योपकुलपतिपदमलंकृतवान्। भारतस्य प्रायः सर्वेषु भागेषु स धर्मजिज्ञासया भ्रमणं कृतवान्। तस्य भारतयात्रावर्णनमतीव विशदं वर्तते। चीनगमनकाले सोऽनेकान् ग्रन्थानेव परमधनं मत्वा नीतवान् चीनीभाषायां तेषामनुवादं कृतवांश्च।

इत्सिगमहोदयः ६७१ संवत्सरे भारतं समागत्य नालन्दाविश्वविद्यालयेऽधीत्य भारतपर्यटनविषयकं ग्रन्थं रचितवान्। स ४०० ग्रन्थान् चीनदेशे नीतवान्। तेन चीनीसंस्कृतभाषात्मकोऽभिधानग्रन्थः प्रणीतः। अनेन ग्रन्थेन चीनदेशवासिनां संस्कृताध्ययनाय लाघवं जातम्।

---

१. सिंगपाओनगरस्य पुस्तकालये धर्मदर्शनज्योतिषगणितायुर्वेदग्रन्थाः ८००० प्रायाः वर्तन्ते।

चीने बौद्धधर्मस्य कतिपयाभिनवशाखाः प्रस्फुटिताः। तत्र खीष्टस्य तृतीयशतके हरिवर्मणा प्रतिष्ठापिते सत्यसिद्धसम्प्रदाये हीनयानमहायानयोः शून्यवादस्य समन्वयो दृश्यते।

तिब्बत-( त्रिविष्टप- ) देशे बौद्धधर्मस्य समागमः खीष्टस्य सप्तमे शतके बभूव। अष्टमशतके राज्ञा निमन्त्रिता बङ्गविहारप्रदेशतः भिक्षवः तत्र गताः। प्रथमं तु तिब्बतीया लिपिः भारतीयां लिपिमनुसृत्य विकसितेति महत्त्वपूर्णम्। नालन्दाविश्वविद्यालयस्य प्राचार्यः शान्तरक्षितः राज्ञा निमन्त्रितः तिब्बतदेशे परमपूजितोऽभवत्। राजा तम् 'आचार्यबोधिसत्वः' इति विज्ञापितवान्, स्वदेशस्य महोपाध्यायपदे प्रतिष्ठापितवांश्च। तदनुसारं तिब्बतप्रदेशे लामासम्प्रदायः प्रवर्तितः। पश्चात् चीनदेशस्य कस्यचिद् भिक्षोः प्रतिवादार्थं मगधस्य श्रेष्ठदार्शनिकः कमलशीलः राज्ञाऽऽमन्त्रितः तिब्बतं गतवान्। नवमे शतके बङ्गविहारप्रदेशयोः बहवो महापण्डिताः रल्पचनेन राज्ञा निमन्त्रिताः तिब्बतं गतवन्तः। राजाऽतिशयधार्मिकोऽभवत्। स धर्मग्रन्थानां संस्कृतभाषातः तिब्बतभाषायामनुवादं कारितवान्। परवर्ति-युगे एकादशशतके बङ्गदेशस्य महापण्डितोऽतिसो दीपङ्करो वा तिब्बते बौद्धधर्मस्य पुनरुत्थानं कृतवान्। तत्र गमनात् प्रागेव दीपङ्करः सुवर्ण-द्वीपस्य चन्द्रकीर्तेः पादपद्मे द्वादशसंवत्सरमधीत्य स्वपाण्डित्यं परिणामित-वान्। ततः श्रीलङ्कदेशमार्गेण पुनः भारतमागतवान्। स विक्रमशिलाविश्व-विद्यालयस्य कुलपतिः बभूव। तस्मिन् युगे तिब्बतप्रदेशस्य राजा स्वदेशस्य धर्मक्षयं दृष्ट्वा २१ विदुषः भारते प्रेषितवान्। तेषु विद्वत्सु १६ भारते मृताः, शेषौ द्वौ १३ भारतीयविद्भिः सह प्रत्यावर्तिताः। तैः विद्वद्भिः प्रशंसित एव दीपङ्करः राज्ञो परमनिमन्त्रणीयोऽभवत्। दीपङ्करः तिब्बतं गन्तु-मनिच्छन्नपि पुनः पुनः प्रार्थ्यमानः तत्र गतवान्। स १३ संवत्सरान् तिब्बते भ्रमणं कुर्वन् बौद्धधर्मस्य प्रचारं कृतवान्। दीपङ्करेण रचितेषु ग्रन्थेषु २५ ग्रन्थाः सुप्रथिताः। तस्य शतप्रायाणि धार्मिकव्याख्यानानि संयोजितानि।

असंख्या एव भारतीयविद्वांसः तिब्बतं गत्वा तत्र भारतीयसंस्कृतेः

प्रसारं कृतवन्तः। तैः विद्वद्भिः रचिताः ग्रन्थाः—'केङ्गुर-तेङ्गुरौ' इति सङ्ग्रहौ प्रख्याताः। तेषु ग्रन्थेषु बहव ईदृशा अपि सन्ति, येषां मूलरूपं भारते न विद्यते। भारताः पुनरपि तेषां स्वदेशे प्रतिष्ठापनेनात्मानं बहु मन्यन्ते।

**कोरियाजापानयोः बौद्धधर्मः**

भारतीयसंस्कृतिः चीनतः कोरियाजापानयोः प्रसारिता। अष्टमशतकादारभ्य जापाने बौद्धधर्मस्य 'तेन्दई—केगोन—शिङ्गोन—जोदो—निचिरेन—जेन' शाखाः प्रस्फुटिताः। इमाः शाखा महायान-सम्प्रदायस्य कतिपयप्रमुखान् ग्रन्थानाश्रित्य स्थानीयपरिस्थितेरनुकूलाः विकसिता दृश्यन्ते। कतिपयशाखाः प्रथमं चीनदेशे आविर्भूताः, पश्चात् जापाने प्रतिष्ठिता बभूवुः।

**पूर्वप्रदेशेषु भारतीयधर्मः**

एशियामहाद्वीपस्यैते भूभागाः चीनभारतयोः मध्ये वर्तन्ते। अतः तेषु देशेषु उभयदेशयोः प्रभावः लक्ष्यते। पुरा खीष्टाब्दस्यारम्भतः मलय-कम्बोडिया (कम्बुज)—अन्नम (चम्पा)—प्रायद्वीपेषु यव-सुवर्णद्वीप-बालि-द्वीपेषु भारतानां राज्यानि प्रतिष्ठापितानि। तेषु राज्येषु भारतीयसंस्कृतिः सहजमेव प्रसृता बभूव। तत्र कतिपयप्रदेशेषु भारतीयवर्णव्यवस्थानुसारं सामाजिकसंघटनं बभूव। अद्यापि पूर्वकालीनसंस्कृतेः आभासः क्वचित् शुद्धभारतीयलक्षणानां स्वीकरणेन प्रत्यक्ष एव। तथा हि स्यामप्रदेशेऽधुनापि राज्याभिषेकः भारतीयविधिमनुसृत्य संस्कृतमन्त्रोच्चारैः सह दृश्यते। राजा समीपवर्तिजनान् वैदिकरीतिमनुसरन् सम्बोधयति। तेषु प्रदेशेषु पुरा बहव भारतीयाः वसतिं चक्रुः। चम्पाङ्कोरे—श्रीविजयादिस्थानेषु संस्कृत-शिक्षायाः बहूनि केन्द्राणि प्रादुर्भूतानि। यवबालिद्वीपयोः धार्मिककर्म-काण्डविधयोऽधुनाऽपि भारतीया एव प्रतिभान्ति।[१] ब्रह्मविष्णुशिवादीनां

---

१. Here (Bali) together with the Brahmanical religion is still preserved the ancient forms of Hindu municipal polity Sir Stamford Raffles ; Description of Java Vol. II Appendix

बहूनि मन्दिराणि तेषु प्रदेशेष्वधुनाऽपि वर्तन्ते। शिवस्य कुटुम्बं विष्णोः कुटुम्बमवताराश्च दिक्पालादयः मूर्तिमाध्यमेन प्रदर्शितानि।

# राजनीतिकः सम्बन्धः

## राज्यप्रसारः उपनिवेशाश्च

ख्रीष्टतः प्राक् षष्ठशतके पारसीकानां राज्यं पञ्चनदप्रदेशपर्यन्तं विस्तृतमासीत्। तस्मिन्नेव युगे भारतीयाः सैनिकाः पारसीकदेशवासिभ्यः ग्रीसदेशं गत्वा युद्धे सभाजो बभूवुः।[१] परवर्तियुगे अलक्षेन्द्रः पारसीकान् पराजित्य ग्रीकसाम्राज्यं पंचनदप्रदेशपर्यन्तं विस्तारितवान्। ततः पश्चात् मौर्यः चन्द्रगुप्तः भारतीयसाम्राज्यं काबुल-कान्धार-हिरातादिपर्यन्तं विस्तारितवान्। अनेन प्रकरणेन स्पष्टं प्रतिभाति यत् राजनीतिकक्षेत्रे पश्चिमोत्तरं भारतं प्राचीनयुगे वैदेशिकैः सह सम्बद्धमभवत्।

सीरियाप्रदेशस्य लेखकः जेनाबमहोदयः प्रमाणयति यत् द्वौ भारतीयसामन्तौ अरमीनियाप्रदेशे ख्रीष्टस्य प्राक् द्वितीयशतकेऽनुयायिभिः सह समायातौ। तत्र राजा ताभ्यां फरातनद्यास्तटे तारुनप्रदेशं भूमिभागं जीविकोपकल्पनाय प्रदत्तवान्। तत्र तौ नगरमेकमुपनिवेशितवन्तौ स्वदेशीयपूजापरम्परां विधातुं च कृष्णमूर्तिनिर्माणं चक्रतुः। ख्रीष्टस्य पश्चात् चतुर्थशतकस्य प्रारम्भिकभागे सेण्टग्रेगोरीति ख्यातः ख्रीष्टमूर्तिविध्वंसकः तत्राक्रमणं कृत्वा मन्दिराणि भ्रंशयित्वा तेषां स्थाने 'चर्चम्' निर्मापितवानिति भारतीयोपनिवेशगाथासु रोमाञ्चकरमेकं वृत्तमुद्घाटयति।

सुदूरप्राचीनकाले भारतीयानामुपनिवेशाः चीनतः भारते गमनागमनयोः मार्गेषु प्रतिष्ठापिता बभूवुः। तत्र अपरबर्माप्रदेशे, ईरावतीसाल्वीनमेकाङ्गादीनां नदीनामुपत्यकासु चोपनिवेशा अवर्तन्त। कतिपयोपनिवेशेषु भारतीयानां राजशासनमासीत्। इण्डोचाइनाप्रदेशस्य मध्यभागेऽपि तादृशाः कतिपयोपनिवेशाः कारिताः।

---

१. पश्चिमोत्तरभारतस्य कश्चित् राजा शशिगुप्तः बैक्ट्रियाप्रदेशस्य पारसीकानामलक्षेन्द्रविरुद्धं सहायं कृतवान्।

**कम्बुजसाम्राज्यम्**

भारतीयराज्यानां प्रथमावस्थितिः मलयकम्बोडिया (कम्बुज)—अन्नम-प्रदेशेषु जावा-सुमात्रा-बोर्नियो-बालिद्वीपेषु च दृश्यते। कम्बोडिया तथा मलयप्रायद्वीपं पुरा विशालराज्यानां केन्द्रं बभूवतुः।

कम्बोडियाराज्यस्य नाम फुनान इति चीनवासिभिः प्रमाणितम्। अस्य प्रसारः कम्बोडियां परितः कोचीनचीन-मेकाङ्गोपत्यकापर्यन्तमासीत्। कम्बोडियाप्रदेशे प्रथमं तावत् स्त्रीराज्यमासीत्। तदाऽर्धसभ्या जनाः परिधानस्यापि प्रयोगं न जानन्ति स्म। ख्रीष्टस्य प्रथमशतके कौण्डिन्य इति ख्यातः कश्चिद्वैदिकधर्मानुयायी पराक्रमपरायणो वीरः शासनकर्त्रीं राज्ञीं पराजित्यार्यशासनं संस्कृतिं च व्यवस्थापितवान्। कौण्डिन्यस्य वंशजा द्विशतवर्षाणि राज्यं कृतवन्तः। ततः पश्चात् 'वर्मा' इत्युपाधिभूषितः सामन्तः प्रजाभिः राजपदे निर्वाचितः। तेन महाविजयेन नौबलेनापि सुदूर-स्थिताः कतिपयदेशा मलयप्रायद्वीपपर्यन्ता अपि राज्याञ्चले समारोपिताः। ख्रीष्टस्य पश्चात् तृतीयशतकस्य मध्यकाले तस्य भागिनेयः चन्द्रवर्मा तत्र साम्राज्याधिपतिर्बभूव। चन्द्रवर्मणा भारतेन चीनेन सह दौत्यसम्बन्धः प्रतिष्ठापितः। तस्य कश्चित् सम्बन्धी भारते प्रणिधिः कृतः। स चत्वारि वर्षाणि पर्यटनं कृत्वा भारतीयराजानां दूतैः सह स्वदेशमाजगाम।

ख्रीष्टस्य पंचमशतकस्य प्रारम्भिकयुगे कश्चिद् भारतीयब्राह्मणः कौण्डिन्य इति ख्यातः तत्र समागतः। स प्रजाभिः राजपदे निर्वाचितः। कौण्डिन्यस्य सांस्कृतिकप्रतिभा समुज्ज्वलाऽऽसीत्। अचिरमेव तेन तस्मिन् महाराज्ये भारतानुरूप-धर्मव्यवस्था-जीवनविन्यास-शिल्पादीनि च प्रकल्पयामास। तस्मिन् कौण्डिन्यवंशे जयवर्मा प्रख्यातो बभूव। तस्य राजदूतः नागसेनः चीनसम्राजः प्रशस्तिं विदधानः महेश्वरबुद्धादीनां माहात्म्यमुपवर्णयन् काव्यं रचयामास। ५१४ ख्रीष्टसंवत्सरे जयवर्मणि पंचत्वं गते रुद्रवर्मा राजा बभूव। तस्य प्रणिधयः ५१७–५३६ ख्रीष्टसंवत्स-रान्तराले षट्कृत्वः चीनसम्राजमुपजग्मुः।

सप्तमशतके रुद्रवर्माणं पराजित्य चित्रसेनः कम्बुजप्रदेशे साम्राज्यं प्रसारितवान्। तस्य वंशजाः सप्तशतवर्षाणि राज्यं चक्रुः। पूर्वतोऽन्नमराजेन पश्चिमतः स्यामदेशवासिभिश्चाक्रान्तं कम्बुजराज्यं पंचदशशतके विघटितमेव।

श्रीविजयसाम्राज्यम्

श्रीविजयसाम्राज्यस्य संवर्धनं शैलेन्द्रवंशीयैः राजभिः कृतम्।[१] शैलेन्द्राणां प्रादुर्भावः मलयप्रायद्वीपे ७७५ खीष्टाब्दे दृश्यते। शीघ्रमेव समग्रं मलय-प्रायद्वीपंसुमात्रा-जावा च साम्राज्ये समारोपितानि।

शैलेन्द्राणां दौत्यसम्बन्धः चीनराजैः भारतीयराजैश्च सह समुदभवत्। दशमे शतके शैलेन्द्राणां राजधानीतः दश प्रणिधयः चीने प्रेषिताः। कतिपयप्रणिधयः भारते पालानां चोलानां च राजसभासु समागताः।

शैलेन्द्रराजानां भारतस्य सांस्कृतिकप्रकाशः रुचिकरोऽभूत्। तथा हि तेषां कतिपयगुरवः भारतेभ्यः समानीताः। सुवर्णभूमेः शैलेन्द्रवंशीयो राजा बलपुत्रदेवः नालन्दायां विहारं प्रतिष्ठापयामास। तस्य कृते गौडराजेन देवपालेनोपराजगृहं पंचग्रामाणां दानं कारितवांश्च। नालन्दायामाधुनिक-युगे प्राप्तासु मूर्तिषु बहवः जावाद्वीपादानीता एव प्रतिभान्ति।

शैलेन्द्रराजः चूडामणिवर्मा स्वनाम्नाभिख्यातं विहारमेकं नागपत्तने (दक्षिणभारते) प्रतिष्ठापितवान्। १००५ खीष्टाब्दे चोलराजः राजराजः कस्यचिद् ग्रामस्यायेन तस्य विहारस्य सुरक्षां कर्तुं योजनां कृतवान्।

परवर्तियुगे चोलराजाः शैलेन्द्राणां शत्रवो बभूवुः। राजेन्द्रचोलः नौबलैः सुमात्रादीनां द्वीपानां विजयं सम्पादितवान्। किन्तु चोलाः पंचाशद्वर्षाणि शैलेन्द्राणां पराभवं कृत्वाऽपि तेषां सुदूरप्रदेशेषु शाश्वतरूपेण शासनप्रतिष्ठां कर्तुमसमर्था अभवन्। १०९० खीष्टाब्दे द्वयोः राजवंशयोः पुनरपि मैत्रीप्रतिष्ठा केनचित् लेखेन प्रमाणिता दृश्यते। शैलेन्द्राणामभिनवा

---

१. शैलेन्द्राः सम्भवतः कलिङ्गप्रदेशात् प्रथमं वर्मादेशं ततः मलयदेशं च जग्मुः।

प्रगतिः प्रायः चतुःशतसमाः समारभत। त्रयोदशशतके ते लङ्काविजयं चक्रुः। १२६४ ख्रीष्टाब्दे वीरपाण्ड्यः दक्षिणभारतस्याधिपतिः शैलेन्द्राणां पराजयेन यशो लेभे। शैलेन्द्राणां राजवंशः षट्शतं वर्षाणि प्रतिष्ठितोऽभवदिति भारतीयानां वैदेशिकराज्यप्रसारस्यापूर्वा गाथा।

## लघुराज्यानि

भारतीयानां राज्यानि मलयप्रायद्वीपे ख्रीष्टस्य प्रथमशतकादारभ्य पंचमशतकपर्यन्तं प्रतिष्ठितानि। शैलेन्द्राणां शासनस्य पश्चात् पंचदशशतके तत्र मलक्कवंशीयानां राज्ञां शासनमासीत्। तदा कश्चिद्राजा मुसलमानस्त्रिया सह परिणीत एव न केवलम् स्वयमेव मुसलमानो बभूव अपि तु मलयप्रायद्वीपे दूरतरेऽपि इस्लामप्रवेशद्वारमुद्घाटयामास।

कम्बुजप्रदेशतः पूर्वदिग्भागे अन्नमप्रदेशे 'चम्पा' इति ख्यातं भारतीयानां राज्यमासीत्। ख्रीष्टस्य पश्चात् द्वितीयशतके चम्पायां श्रीमारेणाधिपत्यं चक्रे। तस्मिन् प्रदेशे पंचदशशतकपर्यन्तं पाण्डुरङ्ग-श्रीविजय—कौथर—अमरावती-प्रदेशीयैः भारतीयराजैः शासनं प्रतिष्ठापितम्। चीनमङ्गोलान्नमराजैः पुनः पुनः प्रतिहतस्यापि चम्पाराज्यस्य गौरवमक्षुण्णमेव सुरक्षितं तत्रत्यानां बाहुबलैः। अन्तिमयुगेऽन्नमवासिभिः पादा क्रान्ता चम्पा स्वोत्कर्षं शाश्वतरूपेण त्यक्तवतीति दृश्यते। चम्पाप्रदेशस्य भारतीयसांस्कृतिकचरितानि शिल्पादीनि चाधुनापि तद्युगीनां गौरवगाथां मन्दं मन्दं गायन्ति।

जावा (यव) द्वीपे भारतवंशीयराज्यं ख्रीष्टस्य प्रथमशतके प्रतिष्ठापितम्। ख्रीष्टस्य द्वितीयशतके तत्रत्यो राजा देववर्मा चीनदेशे प्रणिधिं प्राहिणोत्। ख्रीष्टस्य षष्ठशतके पूर्णवर्मा यवद्वीपस्य राजा बभूव। अष्टमशतके तत्र संजय इति ख्यातः महापराक्रमी राजा समजायत। परवर्तियुगे यवद्वीपः शैलेन्द्रसाम्राज्ये समन्वितो बभूव। शैलेन्द्राणां विनिपातस्य पश्चात् पुनः यवद्वीपे क्रमशः त्रयो भारतीयराजवंशाः प्रादुर्भूताः। तेषु विल्वतिक्तानां साम्राज्यं यवद्वीपाद् बहिः सुदूरमपि प्रसृतं बभूव। विल्वतिक्तानामन्तिमराजः

ख्रीष्टस्य पंचदशशतके भारतीयसंस्कृतेः सुरक्षार्थं युद्धं कुर्वाणा एव बालिद्वीपे शरणं लेभे। बालिद्वीपेऽधुनाऽपि भारतीयवैदिकधर्मः शुद्धतमरूपेण प्रकाशमानो दृश्यते।

सुमात्राद्वीपः मलययवद्वीपयोर्मध्ये स्थितः भारतचीनमार्गे महत्त्वपूर्णोऽभवत्। ख्रीष्टाब्दतः प्रागेव तत्र भारतानामुपनिवेशस्थापना प्रकल्पनीया। शैलेन्द्राणामाधिपत्यं सुमात्रायां सुदीर्घकालिकमेव दृश्यते। तत्र श्रीविजय-नगरं राजधानीदृष्ट्या व्यापारमाहात्म्येन च प्रसिद्धमभवत्। शैलेन्द्राणां पश्चात् तत्र मलयुवंशस्य राज्ञां प्रभावोऽजायत। पंचदशशतके समुद्रवंशीया राजानः तत्र प्रतिष्ठिता बभूवुः। समुद्रनामाधिकृत्य द्वीपोऽयं सुमात्रेति ख्यातः।

बोर्नियोद्वीपे ख्रीष्टाब्दस्य पश्चात् पंचमशतके भारतानां सुसमृद्धं राज्यं प्रादुर्भूतम्। तदा मूलवर्मेति ख्यातो महाराजोऽभवत्। मूलवर्मणः चत्वार उत्कीर्णलेखाः प्राप्यन्ते। चतुर्दशशतकपर्यन्तं बोर्नियोद्वीपे भारताना-माधिपत्यं बभूव।

बालिद्वीपे सुदूरप्राचीनयुगे भारतानां राज्यं प्रतिष्ठापितम्। पश्चाद्युगे तत्र यवद्वीपस्य राजनीतिकाधिपत्यं प्रसृतम्। 'कालान्तरे यवद्वीपस्य राजा तत्रैव शरणं लेभे' इति प्रागेव वर्णितम्।

भारतानां व्यापारिणामुपनिवेशाः सुदूरप्राचीनयुगे अफ्रीकामहाद्वीपस्य मिसर-इथिओपिआ-अबीसीनियाप्रदेशेषु प्रतिष्ठिताः। चीन-तिब्बत-मध्य-एशियादिभूभागेषु विदुषां धर्मप्रचारकाणां चावस्थितिः प्रागुपवर्णिता।

## दौत्यसम्बन्धाः

भारतीयराजानां वैदेशिकराजैः सह दौत्यसम्बन्धपरम्परा प्रायः सदैव प्रावर्तत। प्रथमं तावत् मौर्यराजानां ग्रीकराजैः सह दौत्यसम्बन्धः प्रख्यात एव। चन्द्रगुप्तस्य राजपरिषदि मेगस्थनीज इति ख्यातस्य राजदूतस्य महत्त्वपूर्णं स्थानमासीत्। ततः परं बिन्दुसारस्य राजपरिषदि ग्रीकदूतः अयनीसियसोऽलंचकार। अशोकस्य दौत्यसम्बन्धाः वैदेशिकराजैः सह मैत्री-

संस्थापनार्थ बभूव। अशोकस्य धर्मदूताः पश्चिमैशियायां, मिसरे, योरपे च पर्यटनं चक्रुः। रोमराजानां ट्राजनस्य (९८–११७ खीष्टाब्दम्) हैड्रियनस्य (११७–१३८ खीष्टाब्दम्) अएटोनियसस्य (१३८–१६१ खीष्टाब्दम्) हेलिओगबलसस्य (२१८–२२२ खीष्टाब्दम्), आरलियनस्य (२७०–२७५ खीष्टाब्दम्), कांस्टैन्टाइनस्य (३२३–३५३ खीष्टाब्दम्) जूलियनस्य (३६१–३६३ खीष्टाब्दम्) समीपं भारतीयप्रणिधीनां समागमः सुप्रमाणितः। खीष्टाब्दतः प्राक् प्रथमे शतके विदिशायां ग्रीको हेलियोदोरः राजदूतो बभूव।[1]

ह्वेनसांगस्य प्रभावेण हर्षः चीनराजस्य तांगस्य समीपं दूतं प्राहिणोत्। मुहम्मदतुगलकः इब्नबतूतां चीनदेशे स्वप्रणिधिं कृत्वा प्रेषितवान्।

दक्षिणभारतस्य चालुक्यवंशीया राजानः पारसीकराजानां समीपं दूतान् प्रेषितवन्तः। कश्चित् दौत्यसम्बन्धोऽजन्ता-गुफाचित्रेष्वधुनाऽपि अमर एव दृश्यते। १०७७ खीष्टसंवत्सरे कुलोत्तुङ्गः प्रथमः चीनराजस्य समीपं व्यापारिकप्रतिनिधिमण्डलं प्रेषितवान्। मण्डलेन बहुभिः बहुमूल्योपहारवस्तुभिः चीनराजस्य परितोषः कृतः।

## उपहाराः

मौर्यवंशीयानां राज्ञामुपहाराः सुपरिचिता एव। बिन्दुसारः सेल्यूकसं ग्रीकदेशोद्भवां मदिरां द्राक्षां च प्रार्थितवान्। तस्माद्देशात् दार्शनिकस्योपहारमपि सोऽभिलषितवान्। प्रथमे द्वे वस्तुनी स प्राप्तवान्। सम्राजाशोकेन विदेशनृपेभ्यः ओषधीनां बहुमूल्योपहारः प्रेषितः। खीष्टात् प्राक् २१ संवत्सरे रोमसम्राजः आगस्टसमहाभागस्याभिषेकोत्सवे भारतीयचित्रकस्य नाट्यमंचे प्रदर्शनं कृतम्। असौ चित्रकः उपहारस्वरूपं प्राप्तः।

खीष्टाब्दस्यारम्भिकयुगे वाणमंग इति चीनदेशस्य राज्ञा काञ्चीराजाय

---

१. इदमधिकृत्य शिलालेखस्तत्र वर्तते—

देवदेवस वासुदेवस गरुडध्वजे अयं कारिते इअ हेलिओदरेण भागवतेन दियसपुत्रेण तखसिलाकेन योनदूतेन आगतेन महाराजस अन्तलिकितस उपता सकासं रञो कासीपुत्रस भागभद्रस त्रातारस वसेन चतुदसेन राजेन वधमानसः।

स्वदेशस्य बहुमूल्यानि बहूनि वस्तूनि प्रेषितवान्। चीनराजस्याभीष्टो गराडकः काञ्चीराजेन प्रत्युपहारितः। ख्रीष्टस्य पश्चात् द्वितीयशतके सिन्धुवासिभिः चीनराजाय बहुमूल्योपहारः प्रेषितः।

ह्वेनसांगस्य भारतीयमित्रैः सह पत्रव्यवहारोऽभवत्। स्थविरदेवः तस्मै वस्त्रयुग्मेन सह पत्रं प्रेषितवान्। ह्वेनसांगः प्रज्ञदेवाय उपहारं प्रेषितवान्, कतिपयग्रन्थानां कामनां च कृतवान्। तस्याभीष्टं सम्पादितम्।

श्रीलङ्कस्य राजा चीनराजाय महाप्रज्ञापारमितासूत्रमिति ख्यातं ग्रन्थं प्रेषितवान्। उपहारेण सह विद्वन्मण्डलं चीने प्रेषितम्।

१४१४ ख्रीष्टसंवत्सरे सैयदुद्दीन इति ख्यातो भारतीयराजः अफ्रीकादेशतः प्राप्तं 'जुर्राफा' पशुं मिंगवंशीयाय चीनराजाय प्रेषितवान्।

## साहित्यम्

भारतीयसाहित्यं जगति प्राचीनतममिति निःसन्दिग्धमेव। यत्र यत्र भारताः गताः तत्र तत्र भारतीयसाहित्यमपि तैः सह प्रसृतम्।[१] पुरा जगति भारतीयसाहित्यं क्वचिदनुवादरूपेण, क्वचित् विशुद्धभारतीयभाषानुबद्धमेव क्वचित् छायारूपेण च परिव्याप्तं बभूव। संस्कृतं तु आर्यभाषाऽस्ति। साऽधुनाऽपि विश्वव्यापिनी आंगलभाषा-माध्यमेन दृश्यते।

**पाश्चात्यदेशेषु व्यापकत्वम्—**

भारतीयकथासाहित्यस्य पाश्चात्यदेशेषु विशेषसमादरो बभूव। प्रथमं तत्र षष्ठशतके पारसीकदेशीयेन राज्ञा खुसरूनौसेरवामहोदयेन प्रेषितः बरजोयमहोदयो भारते समागत्य पंचतन्त्रस्यानुवादं कृतवान्। ५७० ख्रीष्टसंवत्सरे बूद इति ख्यातः सीरियादेशीयो विद्वान् मातृभाषायां पंचतन्त्रस्यानुवादं कृतवान्। तदनुसृत्य ७५० संवत्सरे अब्दुल्लाह-इब्नुलमोक्कफमहोदय अरबभाषायां पंचतन्त्रस्यानुवादं कृतवान्। अयमेवारबदेशीयानुवादः योरपीयभाषासु पंचतन्त्रस्यानुवादस्याधारः।

---

१. अस्मिन्नेवाध्याये धार्मिकप्रसारप्रकरणे कतिपयभारतीयपुस्तकानां विदेशे प्रसारो वर्णितः।

एकादशशतके पंचतन्त्रस्यानुवादः ग्रीकभाषायां बभूव। ततः परं १५८३ संवत्सरे इटलीप्रदेशस्य भाषायां लैटिनभाषायां जर्मनभाषायां स्लवभाषायां च पंचतन्त्रस्यानुवादाः संजाताः। पंचतन्त्रस्य हेब्र भाषाया-मनुवादः सर्वत्र समादृतो बभूव। पंचतन्त्रस्य परवर्तियुगीनं जर्मनानुवाद-मनुसृत्य हालैण्ड-डेनमार्क-आइसलैण्डादीनां भाषासु पुनरनुवादाः कृताः। पंचतन्त्रस्य स्पेनभाषायामनुवादः ( १४९३ सं० ) ततः इटलीभाषायां ( १५४६ सं० ), ततः फ्रांसभाषायां ( १५५६ सं० ) चानुवादाः कृताः। १५५२ ख्रीष्टसंवत्सरे इटलीभाषायां पंचतन्त्रस्य स्वतन्त्रानुवादो बभूव। तस्य प्रथमखण्डस्य १५७० ख्रीष्टसंवत्सरे टामसमहोदयेनानुवादः कृतः।

अनुवादानामपरा परम्पराऽरबदेशतः एकादश-शतकादारब्धा। अरब-भाषातः पारसीकभाषायां पंचदशशतकेऽनुवादो बभूव। तस्य परिचयः फ्रांस-देशेऽनुवादेन सप्तदशशतके प्रसृतः। ततः परं तस्यानुवादः आंग्लभाषायां जर्मनभाषायां स्वीडिशभाषायां च बभूव। पारसीकानुवादस्यापरा परम्परा टर्की-जर्मनी-हंगरी-हालैण्डादीनां भाषासु कालान्तरेऽनुवादेन योरपीय-देशेषु प्रसृतः। अपरेऽपि बहवोऽनुवादाः संजाताः, तेषां परम्पराऽपि प्रसृता बभूव।

शुकसप्ततिग्रन्थस्यानुवादपरम्परा योरपीयदेशेषु प्रसृता बभूव। प्रथमं पारसीकभाषायां तस्या अनुवादः चतुर्दशशतके परिचीयते। पारसीकानु-वादतः टर्कीभाषायां तस्याः अनुवादः कृतः। पारसीकानुवादतः योरपीय-भाषासु शुकसप्ततेः प्रचारोऽभवत्।

उपर्युक्तपद्धत्या बहवः भारतीयकथाः योरपीयदेशेषु प्रापिताः। तासु कथासु 'अरबियननाइट्स' इति प्रख्यातसाहित्यं भारतादरबदेशे ततः योरपीयमहाद्वीपे प्रसृतमिति सुविदितमेव।

## पूर्विद्वीपसमूहे व्यापकत्वम्

पूर्विद्वीपसमूहे संस्कृतभाषायामुत्कीर्णलेखानां संख्याऽसंख्यैव। तत्र कम्बुज-चम्पाप्रदेशयोः लेखाः कतिपयशतानि सन्ति। मलय-यव-बोर्नियो-

सुमात्रादिद्वीपेषु कतिपयलेखाः प्राप्ताः। इमे लेखाः प्रायः लघुकाव्यान्येव सन्ति। कतिपयेषु तेषु शतादधिकाः त्रिशतपर्यन्ताश्च श्लोका विद्यन्ते। तेषां लेखकानां संस्कृतभाषाया उपरि प्रकामाधिकारो दृश्यते।[१] कतिपय-भारतीयपण्डिताः स्वयमेव तत्र गताः लेखानां रचयितारो दृश्यन्ते, अपरे तु बहवो जिज्ञासवो भारते समागत्य स्वपाण्डित्यं परिपक्वं चक्रुः, पश्चात् स्वदेशेषु साहित्यकारा बभूवुः।

भारतीय-यवसाहित्यं सविशेषमुल्लेखनीयं वर्तते। तस्य साहित्यस्य वर्ण्यविषया भारतीया एव, तस्मिन् प्रयुक्तानि छन्दांसि संस्कृतसमानि सन्ति। अपरं च, साहित्ये संस्कृतशब्दानां श्लोकानां च समाहारः समाहृतः। तत्र महाभारतस्यानुवादः गद्ये कृतः विशिष्ट एव वर्तते। रामायणस्यापि गद्ये उपन्यासः कृतः, किन्तु भारतीयरामायणात् क्वचिद्भिन्न एवायं दृश्यते। तत्र सीताया निर्वासनं मृत्युर्वा न वर्णितः। अपरे कतिपयवर्ण्यविषयाः पुराणेतिहासेभ्यो गृहीताः भारतीय-यवसाहित्ये उपनिबद्धाः। तथा हि निवातकवचेनार्जुनस्य युद्धम्, कृष्णस्य रुक्मिणीहरणम्, मालापातेन इन्दुमतीमरणम्, कौरवपाण्डवयुद्धम्, शिवेन कामदहनम्, नरकासुरेणे-न्द्रादीनां पराजयः, कार्तवीर्येण रावणस्य पराजयः, समुद्रमन्थनम्, वृत्र-नहुषयोः विजयः, कालयवनकथा, तिलोत्तमायाः प्राप्तये सुन्दोपसुन्दयोः युद्धम्, वासवदत्तोदयनयोः प्रणयकथा, सावित्रीसत्यवतोः कथा—अपरे च तादृशा विषयाः कथासाहित्ये निबद्धाः। अपरं च भारतीय-साहित्यनिधिः—पुराणेतिहासाधिकृताः सृष्टिकथाः, नीतिकथाः, व्याकरणच्छन्दःकोशायुर्वेद-कामशास्त्रादिः वर्णितः। वालि देशस्य भारतसम्बन्धमधिकृत्य रवीन्द्र-नाथठक्कुरेण रोचककाव्यं रचितम्।

**अन्यदेशेषु व्यापकत्वम्**

मेडेगास्करप्रदेशस्य भाषा संस्कृतेन प्रभाविता दृश्यते। चीनीतुर्किस्तान-प्रदेशे खोतानसमीपं ५०० गुहाः वर्तन्ते। तत्र कस्याञ्चित् गुहायां संस्कृत-

१. कम्बोडिया—फिलीपाइनद्वीपयोः लेखनकला भारतीयलिप्यनुरूपा वर्तते। तत्रत्यभाषासु संस्कृतभाषातः तद्भवशब्दानां प्राचुर्यं दृश्यते।

चीनीतिब्बतीभाषाणां ग्रन्थाः प्राप्ताः। बौद्धधार्मिकसाहित्यं विहाय तत्र दर्शनसाहित्येतिहासभूगोलादीनां विषयाणां ग्रन्थाः वर्तन्ते। इमानि पुस्तकानि ख्रीष्टाब्दस्य एकादशशतके विध्वंसकानामाक्रमणाद्रक्षितुं गुहायां निगूहितानि। १६०० ख्रीष्टसंवत्सरे बंगताओ इति ख्यातः चीनदेशीयो विद्वान् तेषां पुस्तकानामुद्धारं कृतवान्। तत्र पुस्तकानां संख्या १५,००० प्राया वर्तते। ३००० ग्रन्थाः मध्यैशियायाः ब्राह्मीं लिपिमनुसृत्य लिखिता वर्तन्ते।[1] चीनदेशे ६६८ ख्रीष्टसंवत्सरे भारतीयकथानां विश्वकोशः रचितः। कोशेऽस्मिन् २०२ पुस्तकेभ्योऽसंख्याः कथाः सङ्गृहीताः। चीनदेशीयाः संस्कृतपालिभाषयोः पण्डितप्रकाण्डानि बभूवुः।[2]

७३६ ख्रीष्टसंवत्सरे बौद्धभिक्षुः बोधिसेनः जापानदेशीयेभ्यः पुरोहितेभ्यः संस्कृतभाषां शिक्षितवान्।

## कला

भारतीयकलानां प्रसारः विदेशेषु सविशेषमेव दृश्यते। प्रथमं तावत् प्रायः ७० ख्रीष्टसंवत्सरे निर्मिता हस्तिदन्तमूर्तिः लक्ष्मीप्रतीकेति पाम्पियाई नगरे प्राप्ता। सुमेरुप्रदेशस्य प्राचीनमन्दिराणां रचना तत्र पूजाविधानं च दक्षिणभारतसमं दृश्यते।

चीनप्रदेशे तीनहुअङ्गे, युनकाङ्गे, लाङ्गमैने च भारतीयशैलीमनुसृत्य कारिताः गुहाः विद्यन्ते। तत्र बुद्धस्य विशालमूर्तयः चित्राणि च प्राप्यन्ते। पुरा भारतीयाः चीनदेशीयाश्च चीनगमनकाले भारतात् मूर्तीः तासां चित्राणि च निन्युः।[3]

तिब्बतप्रदेशस्य यात्रिणः भारतीयकलाकृतीः क्रीत्वा स्वदेशं निन्युः। तासु कृतिषु बहवोऽधुनाऽपि प्राप्यन्ते। तासु प्रमुखः बोधगयामन्दिरस्यादर्शो विद्यते। अजन्ता-कलानुरूपाणि बहूनि चित्रपटानि तिब्बतप्रदेशे प्राप्यन्ते।

---

१. खोतानप्रदेशे ख्रीष्टाब्दस्य तृतीयशतके संस्कृतभाषायाः प्रचारः तस्य प्रदेशस्य भारतीयशासकैः कृतः।

२ चीनीभाषायां संस्कृतध्वनीनां वर्णमालायाश्च निवेशनस्य प्रयत्नं शूवेन इति ख्यातः भिक्षुः कृतवान्।

३. फाह्यानस्य मूर्तिनयनस्य वृत्तं सुविदितमेव।

भारतीयशैलीमनुकृत्य शतादधिकाः कांस्यमूर्तयः तिब्बते प्राप्यन्ते। प्राचीन-युगीनानि जापानदेशस्य चित्राणि भारतीयकलानुरूपाणि दृश्यन्ते। खोतानप्रदेशस्य भित्तिषु कौशेयपटेषु च भारतीयशैलीमनुकृत्य चित्राणि रचितानि।

पूर्विद्वीपसमूहस्य मूर्तिकला वास्तुकला च भारतीयां कलामनुसृत्य विकसिते। तत्रत्यकलाया आदर्शो गुप्तयुगीनो भारतीयः एव। 'अङ्कोरनगरस्य मन्दिराणि भारतीयपरम्परामतिशेरते' इति स्पष्टमेव दृश्यते। तादृशानि वास्तूनि भारतेऽधुना न विद्यन्ते। कम्बोडियाप्रदेशे काश्मीर-वास्तुकला विकसिता। तत्र भारतीयैः कारितानि मन्दिराणि सविशेषं कौशलं प्रदर्शयन्ति। यवद्वीपे भारतीयदेवतानां मूर्तयोऽसंख्या एव विद्यन्ते। महिषासुरमर्दिन्याः मूर्तेः दश बाहवः कृताः। बोरोबुदुरनगरस्य मन्दिराणि तत्रत्यकलाकाराणां परमाश्चर्यकरं चमत्कारं निदर्शयन्ति। सर्वत्र दक्षिणभारतस्य द्राविडशैल्याः प्रभावः परिलक्ष्यते।

## सांस्कृतिकसंस्थाः

पुरा समग्रं भारतमेव जिज्ञासूनां कृते तीर्थमासीत्। भारतीयविश्व-विद्यालयेषु शिक्षितुं सर्वेभ्यो देशेभ्यो दूरतोऽपि विद्यार्थिनः समागताः। भारतागमनमार्गेषु बहवः शिक्षणसंस्थाः पूर्वतः पश्चिमतश्चाजिगमिषूणां कृते समुत्थापिताः। तद्यथा चम्पा, अङ्कोरः, श्रीविजयः संस्कृतविद्यायाः केन्द्राणि बभूवुः। काशगरस्य विश्वविद्यालयः प्रख्यात एवासीत्।

चीनदेशे बहवः संस्थाः भारतीयग्रन्थानामनुवादाय, चीनीभाषायां मौलिकग्रन्थानां प्रणयनाय च स्थापिताः। काचित् संस्था नवमे दशमे वा ख्रीष्टशतके 'महाव्युत्पत्तिः' इति ख्यातं संस्कृततिब्बतीचीनीभाषाणां कोशं प्रणिनाय।

विदेशानामौद्योगिकप्रगतयेः भारतानां प्रयत्नः श्लाघ्यः। तथा हि जापानदेशे कार्पासवपनस्य कार्पासवस्त्रनिर्माणस्य च विधिः भारतैः शिक्षितः। चीनदेशस्य पौतवमानादयो भारतीयप्रणालीमनुसृत्य कृताः।

# उपसंहारः

भारतस्य सांस्कृतिकनिधेः स्वरूपं यत्किञ्चित् पूर्वाध्यायेषु निगदितं तत्र बहूनि सांस्कृतिकरत्नानि निदर्शितानि। तानि रत्नानि शाश्वतरूपेणास्माकं कृते महार्घाणि। तथा हि—संस्काराश्रमाणां सोपानम्, दार्शनिकप्रवृत्तिः, आचारपद्धतिश्च राष्ट्रस्य सम्यक् संवर्धनाय वर्तन्ते।

भारतीयसंस्कृतेः सर्वोच्चविकासः आध्यात्मिकपथेन सम्भावितः। आध्यात्मिकानन्दस्य प्राप्तिः जीवनस्य प्रमुखोद्देश्यमिति निर्धार्य तदनुकूलं धर्मार्थकामानां स्वरूपं विहितम्। आध्यात्मिकपृष्ठभूमौ आधिभौतिकक्षेत्रे सर्वत्र कर्मण्यता, सदाशयता, उदारता, परोपकारशीलता, समृद्धिशालिता च प्रतिष्ठापिताः। अधुनापि तथैव भवितव्यमिति निर्विवादम्।

प्राचीनसंस्कृतेः प्रकाशस्तम्भानां पंचशीलादीनां विश्वप्राङ्गणे प्रवर्तनं तदा भविष्यति, यदा भारते प्रथमं व्यक्तिगतरूपेण समष्टिगतरूपेण च तेषां शीलानां परिग्रहेण कश्चिदभिनवोऽभ्युदयः दृश्यते। अनेन प्रकारेण भारतस्य जगद्गुरुत्वं पुनरपि सिध्यति।

भारतस्य प्राचीनसंस्कृतिः भारतीयप्रकृतेरनुकूला सती भारतवासिनां परमकल्याणाय वर्तते। आधुनिकयुगे तस्याः संस्कृतेः युगानुरूपो विन्यासः विवेकानन्द—लोकमान्यतिलक—मदनमोहनमालवीय—रवीन्द्रनाथठक्कुर—गाँधिमहात्मादिभिः महाभागैः प्रस्तावित एवास्माकं समक्षं विद्यते। इदानीं भारतस्य सांस्कृतिकनिर्माणे तेषां महाभागानामादर्शाः ग्राह्याः। तत्र एष श्लोकः—

इदं नमः ऋषिभ्यः पूर्वजेभ्यः
पूर्वेभ्यः पथिकृद्भ्यः॥

---

# शब्दकोशः

**Dr. T. Burrow. Boden Professor.**
**Indian Institute, Oxford**

It (Bharatasya Sanskritika Nidhih) contains an excellent and comprehensive statement of Sanskrit Culture and it is written in clear and simple style. Students of Sanskrit should find it useful as a model in Sanskrit Composition.

**Dr. P. V. Kane, Bombay**

I acknowledge the receipt of a copy of the Sanskrit work called 'Bharatasya Sanskritika Nidhih'. I have to write on the characteristics of our culture through ages and on future trends. Your book will be useful.

**Dr. P. L. Vaidya, Poona**

'Bharatasya Sanskritika Nidhih' is a treasure-house of Indian Culture.

**Dr. H. D. Velankar, Bombay**

In 'Bharatasya Sanskritika Nidhih' you have put together the essential features of our culture and civilisation in Sanskrit very rightly.

---

